could be taken to have lived about the 12th century A. D.

From his work Nyāyaratna, it is understood that Maṇikaṇṭha was aware of Advaitism.[1] He speaks of Upapattisama as the very essence of some Vedāntins.[2] He refers to Nityasama as providing full scope for Ekadaṇḍins probably a section of ascetics belonging to the Advaita school of Vedānta.[3] Beyond this, we get no information about the author.

The treatment given by Maṇikaṇṭha whether for the definition and classification of the categories and terms or for discussion and others up to points of defeat reveals in unmistakable terms that the author was one of the leading authoritative exponents of the Nyāya system during his period. The author betrays not only his grasp of the fundamental aspects of analogue and points of defeat but appears to have had enough experience in debates and the conduct of the disputes and controversies.

The commentary Dyutimālikā on the Nyāyaratna, which is printed here, was written by Nṛsiṁhayajvan. He begins his commentary with salutations to Narasiṁha, and Triṇayana (Śiva).[4] In the body of the commentary, he offers his prayers to Vināyaka[5], Lakṣmīnarasiṁha in Garuḍācala,[6] and Tripurasundarī.[7] At the end of the section on Avayava, there is a colophon which states that Nṛsiṁhayajvan was the son of

---

1. तथा च साधूक्तं ब्रह्मसंवेदनादनाद्यविद्यानिवृत्तिरित्यलमनेन ।
Nyayaratna P. 19.

2. इयमेव जातिः प्रायो वेदान्तिनां सर्वस्वम् ।
Nyayaratna P. 214.

3. तदेतज्जातिप्रसंगात् एकदण्डिसमुत्थानम् । „ P. 218.

4. Dyatimalikā p. 1

5. „ p. 42

6. „ p. 61

7. „ p. 209

Maṅkāla Annamasomayājin, the object of grace of God Nṛsiṁha of Ahobala.[1] From this, it is possible to guess that the commentator was a devotee of God Nṛsiṁha of Ahobala and was the son of Annamasomayājin. Cāmarāja is mentioned as a scholar.[2] It is possible to infer that King Cāmarāja was the patron of Nṛsiṁhayajvan. There were many kings in Mysore with the name Cāmarāja. There is no evidence in the text of the commentary to identify the king who patronised Nṛsiṁhayajvan.

The commentary contains citations from the works of ancient and later writers. The citations are taken from the Nyāyasūtras, Nyāyabhāṣya, Vārttika and Tīkā, Nyāyakusumāñjali, Tattvacintāmaṇi, Khaṇḍanakhaṇḍakhādya, Anumānaprakāśa of Rucidatta (C. 1275 A. D.) Tattvapradīpikā of Citsukha (C. 1225 A. D.), a lexicon Śabdārṇava, Aṣṭādhyāyī, Kāvyādarśa of Daṇḍin and the work of Vivaraṇācārya. Besides quoting from the works mentioned above, the work Nyāyabhūṣaṇaprakāśa of Gadādharamiśra, and the authors Dharmakirti, Jayadevamiśra, and Mānamanoharakāra are mentioned.[3] Gadādharamiśra is mentioned as the author of the Nyāyabhūṣaṇaprakāśa which is a gloss on Bhūṣaṇa the oldest commentary on the Nyāyasāra of Bhāsarvajña. Gadādharabhaṭṭācārya, the famous logician, is said to have belonged to Bengal.[4] Here the name occurs as Gadādharamiśra who, from the title miṣra, seems to to have belonged to Mithilā. No logician with the name Gadādhara is known to have flourished except Gadādharabhaṭṭācārya. If special significance is not to be attached to the titles

---

1. Dyātimālikā p. 144.
2. Do P. 7.
3. See the Indices.
4. Dr. S. C. Vidyābhūśaṇa : History of Indian Logic p. 481

bhaṭṭācārya and miśra, then Gadādhara mentioned here might be the famous logician who lived about 1650 A. D. Mānamanoharakāra is mentioned by Sri Vedāntadeśika (1268-1369 A. D.) in his Nyāyapariśuddhi.[1] Hence his date must be placed before the 13th century A. D. From all this, it is clear that Nṛsiṁhayajvan could have lived in the latter part of the 17th century A. D. Two kings with the name Cāmarāja are said to have ruled Mysore till 1775 A. D. and 1796 A. D. one after the other.[2] One of these kings could have been the patron of the commentator Nṛsiṁhayajvan.

As a commentator, Nṛsiṁhayajvan is very straightforward in offering his interpretations of the original. Even in cases where Maṇikaṇṭha differed from Udayana and Gaṅgeśa, Nṛsiṁhayajvan interprets Maṇikaṇṭha's passages and finally remarks what is to be admitted as the correct position. In the section on the analogues and points of defeat, he cites the definitions as contained in the Nyāyasūtras and is bold enough to express the correct interpretation. However, he is conscious of his position as a commentator. Hence he does not directly reject or refute the interpretation or the statement in the text but having interpreted the original as it is, he offers his interpretation. In some cases, he defends the author of the Nyāyaratna. Thus the commentary is an ideal one to the Nyāyaratna fulfilling its purpose in all aspects as a commentary.[3]

*V. KRISHNAMACHARYA.*

1. Nyāyapariśuddhi p. 278 Chowkhamba Edn.
2. Rice ; Mysore and Coorg Vol I. p. 241.
3. Dyatimālikā pp. 90, 95, 167, 172, 200, 228.

# उपोद्घातः

—:o:—

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

संस्कृतवाङ्मये न्यायशास्त्रस्य स्थानम्

सर्वो लोक इन्द्रियादिना प्रमाणेन तं तमर्थमुपलभ्योपादेयमुपादत्ते हेयञ्च जहाति । पिपासुः तृषार्तः चक्षुषा तोयं पश्यन् पूर्वानुभूततृषाशमनहेतुतां स्मरन् पूर्वानुभूततोयजातीयतया पुरोवर्तितोयस्य समीहिततृषोपशमाभ्युपायताभनुभूय तदुपादाय सुखी भवति । एवं पथि पतितं कण्टकादिमुपलभ्य तस्यानिष्टसाधनतामनुमाय तं जहाति । प्रत्यक्षेणेन्द्रियादिना अर्थपरिच्छेदेऽपि तर्कसहायतां भजते । प्रत्यक्षं हि इह भूतले घटो नास्तीति भूतलवत् घटाभावेऽपि प्रवर्तमानं, यद्यभविष्यद्धटः भूतलमिवाद्रक्ष्यत तस्य तेन सह तुल्यदर्शनयोग्यत्वात्, न च दृश्यते घटः इति तर्केणानुगृह्यमाणं भूतले घटाभावं निश्चाययति । न च तर्को न प्रतिष्ठितः मेधाविभिरुत्प्रेक्षितानामपि तर्काणां ततोऽप्यभियुक्ततरैः आभासीकरणादिति वाच्यम् । न हि प्रतिष्ठितस्तर्क एव नास्तीति वक्तुं शक्यते । तर्काणामप्रतिष्ठितत्वमपि तर्केणैव प्रतिष्ठापनीयं भवति । तस्मात् हानोपादानादिसकललोकयात्रानिर्वाहकमनुमानं सर्वोपजीव्यं भवति । यदाहुः शङ्करभगवत्पादाः शारीरकमीमांसाभाष्ये "सर्वतर्काप्रतिष्ठायाञ्च लोकव्यवहारोच्छेदप्रसङ्गः । अतीतवर्तमानाध्वसाम्येन ह्यनागतेऽप्यध्वनि सुखदुःखप्राप्तिपरिहाराय प्रवर्तमानो लोको दृश्यते' इति, 'अयमेव तर्कस्यालङ्कारो यदप्रतिष्ठितत्वं नाम' इति च ।

अनुमानञ्चान्वीक्षा । प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा । तया प्रवर्तते इयं न्यायविद्या इति आन्वीक्षिकीव्यपदेशं भजते । परार्थानुमानं न्यायशब्देनोच्यते, नीयते विवक्षितार्थसिद्धिरनेनेति व्युत्पत्तेः । अवयवसमुदायात्मके च न्याये प्रत्यक्षादीनां चतुर्णामपि प्रमाणानां संबन्धोऽस्ति । आगमः प्रतिज्ञा । हेतुरनुमानम् । उदाहरणं प्रत्यक्षम् । उपनयनमुपमानम् । सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगम-

नम् । न्यायश्च विप्रतिपन्नपुरुषप्रतिपादक इति तस्य महान्प्रकर्षः । सर्वोपजीव्यं न्यायं सपरिकरं व्युत्पादयदिदं न्यायविस्तराख्यं शास्त्रं विद्यास्थानेषु प्रथमं स्थानमारोहति ।

सर्वापि विद्या न्यायविद्याप्रतिपाद्यं प्रमाणाद्युपजीव्य स्वे स्वे व्युत्पाद्ये अर्थतत्त्वे प्रवर्तते ; न तु प्रमाणाद्यपि व्युत्पादयति । न्यायविद्या तु प्रमाणादिकं व्युत्पादयन्ती प्रमाणविद्येति गीयते । ईक्षत्यधिकरणभाष्ये भगवत्पादाः ' पदवाक्यप्रमाणज्ञेनाचार्येण ' इति ग्रन्थेन बादरायणाचार्यं प्रमाणशब्दोदितन्यायविद्यावेदितृतया महीकुर्वन्ति । इतरा विद्या अप्रमाणविद्या इति विदग्धभणितिः । अपिच प्रमाणमीश्वरं व्युत्पादयति न्यायविद्या । अतोऽपि प्रमाणविद्याभिधानं भजते । साधनाश्रययोरन्यतरत्वे सति प्रमाव्याप्तं प्रमाणम् । प्रमाश्रयस्यापि जीवस्य प्रमासंबन्धनियमाभावात् न प्रमाणता । इन्द्रियस्य तु साधनतया प्रमाणता । ईश्वरश्च प्रत्यक्षप्रमाणेऽन्तर्भवति । अतः ' मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ' इति न्यायसूत्रं ' तन्मे प्रमाणं शिवः' इति न्यायाचार्याणामुक्तिश्च संगच्छते । सर्वज्ञस्येश्वरस्य प्रमाणत्वं प्रतितन्त्रसिद्धान्तः । यदाहुः तार्किकरक्षायां वरदराजार्याः " प्रतितन्त्रो यथा न्याये सर्वज्ञस्य प्रमाणता " इति । वेदकर्तृत्वेनेश्वरं साधयितुमेव महता प्रबन्धेन शब्दस्यानित्यत्वं न्यायसूत्रैः व्यवस्थापितम् ।

' आदित्यो यूपः' इति श्रुतिः आदित्यतां यूपस्य न बोधयति, अपितु आन्वीक्षिकीपरिशोधितप्रमाणादिप्रकाशितम् आदित्यसदृशतां तेजस्वितां बोधयति इति इतरविद्या अपि स्वप्रतिपाद्यविषये आन्वीक्षिकीमपेक्षन्ते ।

अपि च सर्वा अपि विद्याः अभिमतसाधनतायाः अनभिमतोपायतायाश्च ज्ञापनेन तत्र तत्र प्रेक्षावतः प्रवर्तयन्ति निवर्तयन्ति च । तत्र किमविशेषेण साध्यसाधनेतिकर्तव्यतासु प्रवर्तयन्ति, आहोस्विदितिकर्तव्यतामात्रे । तत्र यदि साध्यांशोऽपि प्रवर्तनागोचरः, तदा श्येनादिसाध्यायाः वैरिवधरूपाभिचारात्मकहिंसायाः विहितत्वेन नानर्थत्वम् । अथ साध्यांशं रागतः प्राप्तमनूद्य साधनेतिकर्तव्यते एव विधीयेते, ततः श्येनसाध्याया हिंसायाः श्येनेनाभिचरन्यजेतेति श्रुत्या विहितत्वाभावेन ' न हिंस्यात्सर्वा भूतानि ' इति निषेधविषयत्वादनर्थत्वं सिद्धम् । ततश्च साध्यांशे अप्रवर्तनमान्वीक्षिकीगम्यम् ।

" आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ "

इति ब्रुवन्मनुरपि धर्मबोधकत्रय्यादीनां धर्मबोधे जननीये आन्वीक्षिक्यपेक्षां ब्रूते । प्रवर्तकत्वरूपधर्मद्वारेण सर्वविद्यानामुपकारकत्वादाश्रयो न्यायविद्या । तथाच न्यायवार्तिकम् ‘ सर्वासां विद्यानामियमुपकरोति । अकारित्वादाश्रयः राजभृत्यवत् ’ इति । अनेन न्यायविद्या राजविद्येत्युक्तं भवति ।

तदुक्तम्—" प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥ " इति ।

अपिच, सर्वेषामपि विद्यास्थानानां मूलस्तम्भभूता आन्वीक्षिकी, वेदप्रामाण्यहेतुत्वात् । वेदे प्रमाणतया व्यवस्थापिते किल वेदवाक्यानामर्थविचाररूपमीमांसादिविद्यास्थानस्य कृत्यमस्ति । कुतार्किकरचितदुष्पूर्वपक्षकवलीकृते प्रामाण्ये, न मीमांसादिविद्यास्थानानामस्त्यवसरः । मीमांसोक्तस्तु अपौरुषेयतया वेदप्रामाण्यसाधनप्रकारः न समीचीनः । तदुक्तीनां कुतार्किकयुक्तिभिः कबलीकृतत्वात् । तदुक्तं श्रीजयन्तभट्टैः न्यायमञ्जर्याम् ‘ न्यायविस्तरस्तु मूलस्तम्भभूतः सर्वविद्यानां वेदप्रामाण्यहेतुत्वात् । वेदेषु हि कुतार्किकरचितकुतर्कविप्लावितप्रामाण्येषु, शिथिलितास्थाः कथमिव बहुवित्तव्ययायाससाध्यं वेदार्थानुष्ठानमाद्रियेरन् साधवः । किं वा तदानीं स्वामिनि परिम्लाने तदनुयायिना मीमांसादिविद्यास्थानपरिजनेन कृत्यमिति । तस्मादशेषदुष्टतार्किकोपमर्दद्वारकदृढतर वेदप्रामाण्यप्रत्ययाधायिन्यायोपदेशक्षममिदमक्षपादोपदिष्टं न्यायविस्तराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति परं विद्यास्थानम् ’ इति । ‘ ननु वेदप्रामाण्यनिर्णयप्रयोजनश्चेन्न्यायविस्तरः कृतमनेन, मीमांसात एव तत्सिद्धेः । तत्र हि अर्थविचारवत् प्रामाण्यविचारोऽपि कृत एव । सत्यं, स त्वानुषङ्गिकः, तत्र मुख्यस्त्वर्थविचार एव । पृथक्प्रस्थाना हीमा विद्याः । सा च वाक्यार्थविद्या न प्रमाणविद्येति । न च मीमांसकाः सम्यक् वेदप्रामाण्यरक्षणक्षमां सरणिमवलोकयितुं कुशलाः । कुतर्ककण्टकनिकरनिरुद्धसञ्चारमार्गाभासपरिभ्रान्ताः खलु ते इति वक्ष्यामः ’ इति च ।

किञ्च, प्राणभृतां पुरुषार्थोपयोगिज्ञानोत्पादनेनानुग्रहाय, त्रयी वार्ता दण्डनीतिः आन्वीक्षिकी, इति चतस्रो विद्या उपदिश्यन्ते । इमाश्च विद्याः पृथक्प्रस्थानाः । अग्निहोत्रहवनादिप्रस्थाना त्रयी । हलशकटादिप्रस्थाना वार्ता । स्वाम्यमात्यमे-

दानुविधायिनी दण्डनीतिः । प्रमाणप्रमेयसंशयादिप्रस्थाना आन्वीक्षिकी । वार्तायां भूमिः कण्टकाद्यनुपहता इति तत्त्वज्ञानम् । कृष्यधिगमः तत्फलम् । दण्डनीत्यां सामदानभेददण्डानां यथाकालं यथादेशं यथाशक्ति विनियोगः तत्त्वज्ञानम् । पृथिवीजयः फलम् । अतः वार्ता दण्डनीतिश्च ऐहिकपुरुषार्थोपयोगिनो विद्या । त्रय्याम् अग्निहोत्रादिसाधनानां विशुद्धोपायेन आगमज्ञानं अनुपहतादिपरिज्ञानञ्च तत्त्वज्ञानम् । स्वर्गप्राप्तिः फलम् । "त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।" "एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामाकामा लभन्ते ।" इत्यादिकात् भगवद्गीतावचनाच्च त्रय्याः फलं स्वर्गप्राप्तिरेवेति स्पष्टं प्रतीयते । आपस्तम्बादिमहर्षिभिः 'त्रैविद्यवृद्धानां तु' इत्यादिना त्रैविद्यानां गृहस्थाश्रमस्यैव श्रेयस्करत्वं स्वर्गसाधनत्वञ्च प्रत्यपादि । स्वर्गादतिरिच्यमानः कोऽपि फलविशेषो न निरूपितः । आन्वीक्षिक्यान्तु आत्मादेः प्रमेयस्य ज्ञानं तत्त्वज्ञानम् । निरतिशयपुरुषार्थस्यापवर्गस्य प्राप्तिः फलम् । आमुष्मिकफलोपयोगिनी त्रयी आन्वीक्षिकी च । तयोरपि परमपुरुषार्थापवर्गफलिका आन्वीक्षिकी सर्वतो ज्यायसी ।

न च रामायणे कच्चित्सर्गे भरतं प्रति श्रीरामचन्द्रस्य प्रश्ननिरूपणावसरे,

"धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः ।
बुद्धिमान्वीक्षिकीं प्राप्य निरर्थं प्रवदन्ति ते ॥"

इत्यान्वीक्षिकीं बुद्धिं प्राप्तानां निन्दादर्शनात् आन्वीक्षिकी न शिष्टैः परिगृहीतेति मन्तव्यम् । वेदविरोधिनास्तिकवादानुरोधिहेतुवादाभिनिवेशिनामेव तत्र निन्दितत्वात् । पूर्वं

"कच्चिन्न लोकायतिकान् ब्राह्मणान् तात सेवसे ।
अनर्थकुशला ह्येते बालाः पण्डितमानिनः ॥"

इति श्लोकः लोकायतिकान् चार्वाकमतावलम्बिनः ब्राह्मणान् राज्ञा भरतेनानुपसेव्यान् ब्रवीति । त एव ब्राह्मणाः अस्मिन् श्लोके 'निरर्थं प्रवदन्ति ते' इत्यत्र तच्छब्देन परामृश्यन्ते । अतश्च महर्षिगोतमप्रणीता आन्वीक्षिकी न निन्दितेति सिद्धम् । राज्ञा अभ्यसनीयासु विद्यासु आन्वीक्षिक्या अपि प्रवेशमाह मनुः—

"त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ।
आन्वीक्षिकीञ्चात्मविद्यां वार्तारम्भांश्च लोकतः ॥" इति ।

इयञ्च विद्या भगवतैवानुमोदिता इति वदन्ति मान्याः । जयन्तभट्टाः न्यायमञ्जर्या उपक्रमे,

"जयन्ति पुरजिद्दत्तसाधुवादपवित्रिताः ।
निदानं न्यायरत्नानामक्षपादमुनेर्गिरः " ॥ इति,

उपसंहारे

"न्यायोद्गारगभीरनिर्मलगिरा गौरीपतिस्तोषितो
वादे येन किरीटिनेव समरे देवः किराताकृतिः ।
प्राप्तोदारवरस्ततः स जयति ज्ञानामृतप्रार्थना-
नाम्नानेकमहर्षिमस्तकवलत्पादोऽक्षपादो मुनिः ॥ "

इति च निरूपयन्ति । जैनसूरिविरचिते षड्दर्शनसमुच्चये अक्षपाददर्शनं शैवदर्शनमिति व्यवहृतमस्ति । औपनिषदानां शङ्करभगवत्पादानां शारीरकमीमांसाभाष्ये, "तथाचाचार्यप्रणीतं न्यायोपबृंहितं सूत्रं—दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति " इति सूक्तिरपि आन्वीक्षिकीं महीकरोति । किं बहुना ? नव्यनैयायिकानां व्याख्येयग्रन्थावतारणतदर्थनिरूपणतदर्थविषयकविचारविषयनिष्कर्षप्रतिपादनपद्धत्या समाकृष्टचित्ताः सर्वेऽपि मीमांसकवैयाकरणवेदान्तिप्रभृतयः प्रबन्धारः न्यायसरणिमनतिवर्तमानाः आन्वीक्षिकीगर्भितानेव स्वस्वतन्त्रप्रमेयान् निरूपयन्तः अनधिगतन्यायतत्त्वान् न्यायदर्शनावगमसमुत्सुकानकार्षुः । अतो न्यायविद्या सकलविद्याविनाभूता न पृथक्कर्तुं शक्यते । इयमान्वीक्षिकी तर्कविद्या तर्कशास्त्रादिशब्दैरभिधीयते । "आन्वीक्षिकी दण्डनीतिः तर्कविद्यार्थशास्त्रयोः " इति चामरः । छान्दोग्ये सप्तमेऽध्याये प्रथमखण्डे नारदसनत्कुमाराख्यायिका श्रूयते । तत्र इदमहं जाने इति वदेति सनत्कुमारेणानुयुक्तो नारदः तर्कशास्त्रमपि स्वाधीतमाह—"ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनम्" इत्यादिना । तत्र 'वाकोवाक्यं तर्कशास्त्रम्' इति भगवत्पादभाष्यम् । अत इयं विद्या श्रुतिप्रसिद्धा

"पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ "

इति याज्ञवल्क्यादिस्मृतिषु विद्यास्थानमध्ये गणिता ।

इमां विद्यां येऽधीयते ते नैयायिकाः। तेषां यौगा इति व्यपदेशोऽपि दृश्यते स्याद्वादमञ्जर्यां "वैशेषिकनैयायिकयोः प्रायः समानतन्त्रत्वात् औलूक्यमते क्षिप्ते यौगमतमपि क्षिप्तमवसेयम्" इति। प्रतितन्त्रसिद्धान्तलक्षणसूत्रे न्यायभाष्ये, "पुरुषकर्मादिनिमित्तो भूतसर्गः कर्महेतवो दोषाः प्रवृत्तिश्च स्वगुणविशिष्टाश्चेतनाः असदुत्पद्यते उत्पन्नं निरुध्यते इति योगानाम्" इति ग्रन्थो दृश्यते। न हीदं मतं प्रसिद्धयोगिनां मतमिति वक्तुं शक्यते। तैः पुरुषस्य निर्गुणत्वाभ्युपगमात् असत्कार्यवादानभ्युपगमाच्च। अत इदं नैयायिकमतमेव। अतश्च ग्रन्थान्तरसंवादेन भाष्ये योगशब्देन नैयायिका विवक्षिता इति प्रतीमः। परन्तु मुद्रितन्यायदर्शनपुस्तके योगानामित्यस्य वैशेषिकाणामिति टिप्पणं समुपलभ्यते। असत्कार्यवादादिकञ्च वैशेषिकसाधारणमेव। अथापि ग्रन्थान्तरेषु कण्ठतो योगशब्देन नैयायिकानामभिधानात् तेऽत्र विवक्षिता इति युक्तमिति भाति। युक्त्यपरपर्य्याययोगप्रधानविद्यापरिशीलिनां योगा इति नामापि श्लिष्टमेव।

तस्मात् लोकयात्रानिर्वाहकतया सर्वोपजीव्यस्यानुमानस्य, विप्रतिपन्नपुरुषप्रतिपादकतया श्रेष्ठस्य सपरिकरस्य न्यायस्य, सर्वविद्यापेक्षितप्रमाणादेश्च व्युत्पादनेन, प्रवर्तनारूपकार्ये स्वप्रतिपाद्यनिर्णये च सर्वासां विद्यानां बहूपकारकरणेन, वेदप्रामाण्यव्यवस्थापनेन, अपवर्गसाधनोपदेशपरत्वेन, श्रुतिस्मृतिसम्मतत्वेन च वाङ्मये उन्नतं पदमधिरूढं विलसति न्यायदर्शनमिति सिद्धम्।

न्यायदर्शन प्रवर्तकः

तदिदं न्यायदर्शनं पञ्चाध्यायात्मकम् अक्षपादापरनामा गोतममहर्षिः प्रणिनाय। न चाक्षपादमहर्षेः प्राक् न्यायदर्शनप्रतिपाद्या वेदप्रामाण्यादयः नावधृता यदि, तदा श्रेयोमार्गे प्रवृत्तिः प्रेक्षावतां न संभावितेति शङ्क्यम्; न्यायादिविद्यानां सर्वदा विद्यमानत्वात्। यदाहुः जयन्तभट्टाः "आदिसर्गात्प्रभृति वेदवदिमा विद्याः प्रवृत्ताः। संक्षेपविस्तरविवक्षया तु तांस्तान् तत्र तत्र कर्तॄनाचक्षते" इति। युक्तञ्चैतत्। कथमन्यथा न्यायदर्शने ब्रह्मवादिसंमतस्य ईश्वरोपादानतावादस्य निराकरणं, ब्रह्ममीमांसायां नैयायिकाभिमतस्य ईश्वरनिमित्तकारणतामात्रवादस्य च निराकरणमित्यादिकं संगच्छते? "तद्धैक आहुरसदेवेदमग्र आसीत्" इति श्रुतिः न हि गौतमबुद्धकालानन्तरं प्रवृत्ता। परन्तु अनादिसिद्धानि तानि तानि मतानि। विस्तरेण ग्रन्थरचनया तत्तन्मतप्रकाशकाः तत्तद्दर्शनकर्तार इत्यभिधीयन्ते।

अक्षपादश्च महर्षिः "यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद" इति वार्तिके तस्य मुनिप्रवरत्ववचनात्। स चायं श्रुतिप्रसिद्धः। तदुक्तमुदयनाचार्यैः न्यायनिबन्धे "तत्र भगवतोऽक्षपादस्य मुनिषु मध्ये प्रवरत्वं श्रुत्यादिभ्य एव प्रसिद्धम्" इति।

कदाचित् कृष्णद्वैपायनो महर्षिः गोतमेन संगतः, अनेन जीवब्रह्मणोर्भेदः तर्केण प्रतिपादित इत्यस्य मुखं नावलोकयिष्यामीत्युवाच। तदा गोतमेन व्यासस्यावलोकनार्थं पादः प्रसारितः। पादे च चक्षुः संजातम्। ततो व्यासः गोतममक्षपादनाम्ना तुष्टावेति कथानुसारेण, अक्ष-नेत्रं पादे अस्येति व्युत्पत्त्या अक्षपादाभिधानो बभूव गोतमः।

न्यायदर्शनप्रणेता गोतमो गौतमो वेति विमृश्य, गोतम एवेति श्रीहर्षश्लोकं प्रमाणीकृत्य निर्णीतं श्रीविन्ध्येश्वरीप्रसादद्विवेदिमहोदयैः न्यायवार्तिकभूमिकायाम्। नैषधीयचरिते सप्तदशे सर्गे,

"मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतमं तमवेत्यैव यथा वित्थ तथैव सः॥"

इति श्लोको दृश्यते। न्यायदर्शनप्रतिपादिता मुक्तिः आत्यन्तिकदुःखनिवृत्तिरेव। तद्दशायां न किमपि ज्ञानं सुखानुभवो वा। अतः पाषाणकल्पा नैयायिकमुक्तिः। चेतनानां शिलाभावाय मोक्षाय न्यायशास्त्रमूचे गोतमः। स च न केवलं नाम्ना गोतमः, किन्तु प्रकृष्टो गौः गोतमः महावृषभः पशुरेवेति तत्पद्यस्यार्थः। अयञ्च न्यायदर्शनकर्तुः गोतमनामकत्व एव संगच्छते न गौतमनामवत्त्वे इति।

न्यायदर्शनम्

अक्षपादप्रणीतञ्च न्यायदर्शनमतिप्राचीनम्। यतः श्रीवाचस्पतिमिश्रेभ्योऽप्यतिप्राचीनानां वार्तिककाराणां समयेऽपि इदं सूत्रमिति निर्णेतव्यमासीत्। सूत्राणामन्यथा पाठोऽप्यासीदिति तत्र तत्र वार्तिकग्रन्थपरामर्शेन स्पष्टं जानीमः। कानिचित्सूत्राणि भाष्यवाक्यानीति केचिन्मन्यन्ते। भाष्यवार्तिकादाव्याख्यातमपि सूत्रं क्वचित् दृश्यते। यथा विश्वनाथन्यायपञ्चाननकृतवृत्तिग्रन्थे 'संस्कारोद्भवा प्रत्यभिज्ञा' इति सूत्रमधिकमुपलभ्यते। श्रीराधामोहनगोस्वामिविद्यावाचस्पतिभट्टाचार्यविरचिते न्यायसूत्रविवरणे चतुर्थाध्यायावसाने "तत्त्वन्तु बादरायणात्" इति सूत्रं कुत्रापीतरैरव्याख्यातमुपलभ्यते। अद्वैतसिद्धिव्याख्यानलघुचन्द्रिकायाः व्याख्याने विट्ठलेशीये "तदुक्तं तत्त्वं तु बादरायणादिति" इति वचनव्यक्तिर्लक्ष्यते। परन्तु तत् न्यायसूत्रत्वेन नाभिहितम्। द्युतिमालिकाकारस्य मते जातिनिरूपकेषु सूत्रेषु भूयान् पाठभेदो

दृश्यते । स चाग्रे निवेदयिष्यते । श्रीवाचस्पतिमिश्रैः न्यायसूचीनिबन्धोऽकारि यत्र केवलं प्रकरणभेदः प्रतिप्रकरणं सूत्राणां संख्यानं प्रकरणार्थश्च कथितः । तद्ग्रन्थावसाने

" यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
श्रीगोतमसुगवीनामतिजरतीनां समुद्धरणात् ॥ "

इति लेखनं न्यायदर्शनस्यातिचिरन्तनतां स्फुटयति ।

पञ्चाध्यायी न्यायदर्शनम् । आह्निकद्वयोपेतः अध्यायः । बहुभिः प्रकरणैर्गर्भितमाह्निकम् । अनेकसूत्रात्मकञ्च प्रकरणम् । तत्र प्रथमाह्निके सप्त प्रकरणानि । द्वितीयाह्निके चत्वारि । द्वितीयाध्यायस्य, प्रथमे आह्निके नव प्रकरणानि । द्वितीये चत्वारि । तृतीयस्याध्यायस्य प्रथमे आह्निके नव । द्वितीये सप्त । चतुर्थाध्यायस्य प्रथमे चतुर्दश । द्वितीये षट् । पञ्चमस्याध्यायस्य प्रथमे सप्तदश । द्वितीये सप्त प्रकरणानि । शास्त्रे आहत्य ८४ प्रकरणानि । ५२८ सूत्राणि ।

न्यायदर्शनप्रतिपाद्यार्थसंग्रहः ।

अथ विच्छिन्नाध्ययनाध्यापनसंप्रदायस्य न्यायदर्शनस्य प्रतिपाद्यार्थः संगृह्यते विदुषां विनोदाय । प्रथमस्याध्यायस्य प्रथमाह्निके

(१) द्वाभ्यां सूत्राभ्यां अभिधेयप्रयोजनसंबन्धप्रकरणम् ।

" प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निः श्रेयसाधिगमः " ।

इदं न्यायदर्शनस्यादिमं सूत्रम् । न कोऽपि प्रेक्षावान् शास्त्रस्य प्रयोजनमविदित्वा तस्य श्रवणे प्रवर्तते । अतोऽन्तेवासिनां शास्त्रे प्रवर्तनायादौ शास्त्रस्य प्रयोजनं निःश्रेयसमुपदिशति सूत्रकारः । इदं सूत्रं शास्त्रस्याभिसंबन्धवाक्यमिति व्यवहरन्ति । प्रमाणादीनां षोडशानां पदार्थानां तत्त्वज्ञानजनकमिदमेव शास्त्रमस्मिन् सूत्रे तत्त्वज्ञानशब्देन तत्त्वं ज्ञायते अनेनेति व्युत्पत्त्या अभिसंहितम् । तस्मात् निःश्रेयसाधिगमं व्युत्पादयतानेन शास्त्रफलं निश्रेयसमित्युक्तं भवति । तत्त्वज्ञानपदेन शास्त्रस्योक्तिः, न केवलमध्ययनमात्रेण शास्त्रं निःश्रेयसं प्रसूते, अपि तु प्रामाणादीनां तत्त्वज्ञानजननद्वारा इति सूचयति । तेन प्रमाणादीनां षोडशानां पदार्थानां तत्त्वं शास्त्रप्रमेयमिति ज्ञायते । तथा च प्रमाणादिपदार्थतत्त्वं शास्त्रप्रतिपाद्यं, प्रतिपादकं शास्त्रमिति शास्त्रप्रमाणादितत्त्वयोः प्रतिपाद्यप्रतिपादकभावः, प्रमाणादितत्त्वज्ञाननिःश्रेयसयोश्च कार्यकारणभावः सूचितो भवति ।

आत्मादेः प्रमेयस्य तत्त्वज्ञानं निःश्रेयसं जनयतीति यद्यपि प्रमेयं प्रधानं, तथापि मेयसिद्धेः मानाधीनत्वात् प्रथमं प्रमाणमुद्दिष्टम् । ततः तेनावगम्यं प्रमेयम् । प्रमेयव्यवस्थापनं हि न्यायाधीनमिति तदनन्तरं सपरिकरः न्यायो वक्तव्यः । संदिग्धे सप्रयोजने चार्थे न्यायः प्रवर्तते इति न्यायपूर्वाङ्गयोः संशयप्रयोजनयोः, ततः दृष्टान्तावलम्बनेनैव परबोधनस्य कर्तव्यतया दृष्टान्तस्य, ततः न्यायविषयस्य सिद्धान्तस्य, ततः प्रतिज्ञादिवाक्यपञ्चकात्मकावयवसमुदायात्मनः न्यायस्य, ततः न्यायसहकारिणस्तर्कस्य, ततः तज्जन्यफलस्य निर्णयस्य, ततः निर्णयावसानकथात्मकवादस्य, ततः कथासामान्यात् जल्पवितण्डयोश्च निर्देशः । कथायां परपक्षदूषणमावश्यकमिति ततो दूषणानि निरूपणीयानि । तेषु वादे देशनीयतया अभ्यर्हितस्य हेत्वाभासस्यादौ, ततः तदुपजीवनेन छलस्य, ततः अत्यन्तमसदुत्तरजातेः, ततः कथावसानिकनिग्रहस्थानस्य च निर्देशः । एतद्दर्शनफलं निःश्रेयसमपवर्गः । स चात्यन्तिको दुःखविनाशः । स च दुःखमूलघात एव सिद्ध्यति ; दुःखमूलञ्च विचार्यते । न ह्यजातो दुःखी भवति । ततः जन्म दुःखस्य कारणम् । जन्म च पुण्यपापादिकया प्रवृत्त्या भवति । प्रवृत्तिश्च पापात्मिका पुण्यात्मिका च न विना रागद्वेषावात्मानं लभते । रागद्वेषादिदोषश्च आत्मादेः प्रमेयस्य मिथ्याज्ञानप्रभवः इति आत्मादिप्रमेयमिथ्याज्ञानमेव दुःखस्य परमं निदानम् । तच्च मिथ्याज्ञानमात्मादितत्त्वज्ञानेनैव निवर्तते । ततश्च शास्त्रेण तत्त्वज्ञाने जाते, तेन मिथ्याज्ञाने नष्टे, ततः तदधीनोत्पत्तिकस्य दोषस्य नाशे, ततः तत्प्रभवायाः प्रवृत्तेरपगमे, ततः प्रवृत्त्यधीनात्मलाभस्य जन्मनोऽपाये, तत्प्रयुक्तस्य दुःखस्यात्यन्तिको नाशः संभवतीति । एवं तत्त्वज्ञानेनापवर्गोत्पत्तिप्रकारो द्वितीयसूत्रेण न्यरूपि ।

इदमाद्यं प्रकरणं शास्त्रस्योपोद्घातरूपं वेदितव्यम् ।

(२) षड्भिः सूत्रैः प्रमाणलक्षणप्रकरणम्

शास्त्रं हि शिष्याकाङ्क्षाक्रमेण प्रवर्तते । निःश्रेयसं कुतोऽधिगम्यते इत्याकाङ्क्षायां प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगमः इत्यभिहितम् । ततः कथमधिगम्यते इति जिज्ञासायां द्वितीयसूत्रं प्रवृत्तम् । ततः प्रमाणादयः के, कति, किंलक्षणाः इति, ततः कथमिति च जिज्ञासा जायते । अतः प्रमाणादीनां स्वरूपं तेषां विभागः लक्षणं च निरूप्यन्ते । ततः तद्विषयिणी परीक्षा च क्रियते शास्त्रे । यदाहुः भाष्यकाराः "त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः, उद्देशो लक्षणं परीक्षा चेति " इति । प्रथमसूत्र एव षोडश पदार्थाः प्रमाणा-

दयः नाम्ना संकीर्तिताः । इदानीं तेषां लक्षणं निरूपणीयम् । तत्रोद्देशक्रमानुसारेण प्रमाणस्य प्रभेदः लक्षणञ्चात्र प्रकरणे निरूप्यते ।

प्रमीयते अनेनेति व्युत्पत्त्या प्रमाणशब्देनैव प्रमाकरणं प्रमाणमिति प्रमाणलक्षणमवगमितम् । प्रमाणं चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदात् । इन्द्रियस्यार्थेन संबन्धादुत्पद्यमानमर्थाव्यभिचारि ज्ञानं प्रत्यक्षं प्रमा । तच्च द्विविधं विशेषणविशेष्यभावानापन्नवस्त्ववगाहि तदनवगाहि चेति । तत्राद्यम्, अव्यपदेश्यं निर्विकल्पकमिति, द्वितीयं सविकल्पकं व्यवसायः, इति चाभिधीयते । ईदृशं प्रत्यक्षज्ञानं यतः करणाज्जायते तत् प्रत्यक्षप्रमाणम् ।

साध्यसाधनयोः व्याप्त्याख्यसंबन्धप्रत्यक्षं हेतोः पक्षे प्रत्यक्षञ्चेति प्रत्यक्षद्वयाधीनोत्पत्तिकं लिङ्गपरामर्शरूपमनुमानं प्रमाणम् । तच्च त्रिविधं, पूर्ववत् , शेषवत् , सामान्यतो दृष्टञ्चेति । कारणेन कार्यानुमानमाद्यं, कार्येण कारणानुमानं द्वितीयम् ; तद्व्यतिरिक्तं सामान्यतो दृष्टानुमानमिति बोध्यम् । प्रज्ञातेन गवादिना सह सादृश्यज्ञानात् गवये गवयपदवाच्यतारूपस्य संज्ञासंज्ञिसंबन्धस्य ज्ञानमुपमितिः । सा यतो जायते तत् गवयादौ गोसादृश्यज्ञानमुपमानप्रमाणम् । आप्तस्योपदेशः शब्दः प्रमाणम् । स च दृष्टार्थकः अदृष्टार्थक इति द्विविधः । आप्तोपदेशः शब्दः इति लक्षणकरणेन वेदः आप्तेनेश्वरेण प्रणीतः इति न्यायदर्शनरहस्यं सूत्रितमिति वेदितव्यम् ।

(३) चतुर्दशभिः सूत्रैः प्रमेयलक्षणप्रकरणम्

नात्र दर्शने प्रमाविषयीभूतं सर्वमपि प्रमेयतया विवक्षितम् । अपितु साक्षादपवर्गोपयोगिज्ञानविषयत्वेन मोक्षार्थिभिः प्रकर्षेण मेयमेव । यद्विषयकं मिथ्याज्ञानं संसारमातनोति, यद्विषयं च तत्त्वज्ञानं तं निवर्तयति तत् प्रमेयमिति यावत् । तच्च आत्मा, शरीरम् , इन्द्रियम् , इन्द्रियार्थः, बुद्धिः, मनः, प्रवृत्तिः, दोषः, प्रेत्यभावः, फलं, दुःखम् , अपवर्गः इति द्वादशविधम् । शरीरादि दुःखान्तं दशविधं प्रमेयं हेयम् । अपवर्गः उपादेयः । आत्मा तु सुखदुःखादिभोक्तृत्वस्वभावो हेयः । भोगादिव्यवहारपराङ्मुखस्त्वात्मा उपादेयः । मोक्षमाणैः प्रमाणेन प्रमातव्यं हेयोपादेयभेदभिन्नमिदमेव द्वादशविधं प्रमेयं बोध्यम् ।

इच्छया, द्वेषेण, प्रयत्नेन, सुखेन, दुःखेन, ज्ञानेन च लिङ्गेन लिङ्गी आत्मानुमीयते । अतः इच्छादिलिङ्गकत्वमात्मनो लक्षणम् । आत्मनो भोगायतनं शरीरं द्वितीयं प्रमेयम् । हितप्राप्त्यर्था अहितपरिहारार्था च क्रिया चेष्टा । तदाश्रयत्वम्, इन्द्रियाश्रयत्वम्,

अर्थाश्रयत्वञ्चेति शरीरलक्षणानि । अर्थाश्रयत्वञ्च इन्द्रियार्थविषयकभोगावच्छेदकत्वे पर्यवस्यति । आत्मनो भोगसाधनानि इन्द्रियाणि । तानि च घ्राणं रसनं चक्षुः त्वक् श्रोत्रमिति पञ्च । एतानि चेन्द्रिमाणि भूतेभ्यो जायन्ते । पृथिवी, आपः, तेजः, वायुः, आकाशमिति पञ्च भूतानि । पृथिव्या घ्राणं, अद्भ्यो रसनं, तेजसः चक्षुः, वायोस्त्वक् च जायते। श्रोत्रन्तु आकाशमेव कर्णशष्कुल्यवच्छिन्नम् । सर्वेन्द्रियाणां नैकः अहङ्कारः प्रकृतिः । तथात्वे घ्राणेन गन्ध एव गृह्यते न रसः, रसनेन रस एव गृह्यते न गन्धः इति नियमो न स्यात् । सूत्रोक्तानि पञ्च बहिरिन्द्रियाणि । मनः आन्तरमिन्द्रियम् । यद्यपि मनः इन्द्रियमिति सूत्रे नोक्तम् । तथापि समानतन्त्रे वैशेषिके सिद्धं मनस इन्द्रियत्वं न प्रतिषिद्धमिति मनस इन्द्रियत्वमभ्युपगमसिद्धान्तः इति विभावनीयम् । घ्राणादिभिरिन्द्रियैः यथाक्रमं ग्राह्याः गन्धरसरूपस्पर्शशब्दाः पृथिव्यादीनां गुणाः इन्द्रियार्थाः । बुद्धिः,उपलब्धिः, ज्ञानम् इति पर्यायशब्दैः योऽर्थ उच्यते सा बुद्धिः । ज्ञानत्वजातिमत्त्वं बुद्धेर्लक्षणं पर्यवसितम् । चक्षुरादीनां नानेन्द्रियाणां तत्तद्ग्राह्यार्थैः संनिकर्षे सत्यपि एकस्मिन्नेव क्षणे चक्षुरादिनानेन्द्रियजन्यानि चाक्षुषरासनादीनि ज्ञानानि न जायन्ते । अतश्च ज्ञायते, इन्द्रियेण ज्ञाने जननीये कस्यचित्पदार्थस्य संनिधिरपेक्ष्यते, स च यदा येनेन्द्रियेण संगतः तदिन्द्रियं ज्ञानं जनयति, अव्यापी च स पदार्थः नैकदा अनेकेन्द्रियसंयोगार्हः, इति युगपदेव नानेन्द्रियजन्यानि ज्ञानानि न जायन्ते, इति । तथाच युगपज्ज्ञानानुत्पत्तिलिङ्गकं मनः । कायेन वाचा मनसा चारभ्यमाणा पुण्यापुण्यमयी प्रवृत्तिः । यैः रागद्वेषमोहैः पुरुषः क्रियासु प्रवर्तते, ते प्रवृत्तिहेतवो दोषाः । क्वचित् प्राणभृन्निकाये वर्तमानस्यात्मनः पूर्वोपात्तदेहसंबन्धहानरूपमरणानन्तरमन्यदेहादिसंबन्धरूपं जन्म प्रेत्यभावः । रागद्वेषादिदोषेण पुण्यापुण्यप्रवृत्त्या जनितः सुखदुःखोपभोगः मुख्यं फलम् । उपभोगश्च खलु देहेन्द्रियादिषु भवतीति तान्यपि गौणफलानि । बाधना, पीडा, तापः, इत्यादिशब्दैरभिलप्यमानः आत्मगुणः मुख्यया वृत्त्या दुःखपदबोध्यः । तद्योगाज्जन्मादिकं सर्वमपि गौणं दुःखम् । तत्र दुःखभावना कार्या मुमुक्षुभिः । दुःखस्यात्यन्तं विमोक्षः यस्मिन् सति न पुनर्दुःखं जनिष्यते सोऽपवर्गः परमपुरुषार्थः । एवं द्वादशविधं प्रमेयमुक्तं बोध्यम् ।

(४) त्रिभिः सूत्रैः न्यायपूर्वाङ्गलक्षणप्रकरणम्

विमर्शः संशयः । एकत्र विरुद्धनानाधर्मालम्बनं ज्ञानमिति यावत् । तच्चानवधारणात्मकं स्थाणुर्वा पुरुषो वा इत्यादिशब्दाभिलपनीयम् । तच्च विशेषदर्शनं निवर्त-

कतया अपेक्षते । संशयः उभयकोटिसाधारणधर्मज्ञानात्, असाधारणधर्मज्ञानात्, विप्रतिपत्तेः, उपलब्ध्यव्यवस्थातः, अनुपलब्ध्यव्यवस्थातश्च हेतोर्जायते इति पञ्चविधः ।

समानानेकधर्मोपपत्तेरिति संशयसूत्रे अनेकधर्मपदमसाधारणधर्मपरं बोध्यम् । अनेकेषु विद्यमानः एकः साधारणो धर्मः समानधर्म इत्युच्यते । न एकः अनेकः इति व्युत्पत्त्या अनेकशब्देन, अनेकसाधारणो न भवति यः प्रस्तुतधर्मिमात्रवृत्तिः असाधारणधर्मः सोऽभिधीयते । यथा शब्दस्य विभागजत्वं असाधारणो धर्मः तस्मिन् द्रव्यगुणकर्मसंशयं जनयति ।

यमर्थमाप्तव्यं हातव्यं वा निश्चित्य पुरुषः प्रवर्तते तत् प्रयोजनम् । प्रवृत्त्युद्देश्यः प्रयोजनमिति यावत् ।

लोकसाम्यमनतीताः लौकिकाः । शास्त्राधीनं बुद्ध्यतिशयमापन्नाः तर्केण प्रमाणेन चार्थं परीक्षितुं शक्ताः परीक्षकाः । उभयेषामपि साध्यवत्ताबुद्धिः यत्र समा जायते स दृष्टान्तः । साध्यवत्तया वादिप्रतिवाद्युभयाभ्युपगतोऽर्थः दृष्टान्तः इति पर्यवसितोऽर्थः ।

(५) षड्भिः सूत्रैः न्यायाश्रयसिद्धान्तलक्षणप्रकरणम्

"तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः" इति लक्षणसूत्रम् । तन्त्र्यतेव्युत्पाद्यते अनेनेति तन्त्रं शास्त्रम् इतरेतराभिसंबद्धस्यार्थस्योपदेशः । तत्र प्रतिपादकतासंबन्धेन वर्तमानाः तन्त्राधिकरणकाः शास्त्रप्रतिपाद्या इति यावत् । तेषामर्थानामभ्युपगमः सिद्धान्तः । शास्त्रीयार्थाभ्युपगमः, अभ्युपगम्यमानः शास्त्रसिद्धार्थो वा सिद्धान्तः इति पर्यवस्यति । सच (१) सर्वतन्त्रसिद्धान्तः (२) प्रतितन्त्रसिद्धान्तः (३) अधिकरणसिद्धान्तः (४) अभ्युपगमसिद्धान्तः इति चतुर्विधः । सर्वशास्त्राविरुद्धः स्वशास्त्रे उक्तोऽर्थः सर्वतन्त्रसिद्धान्तः । यथा घ्राणादीनीन्द्रियाणि, पृथिव्यादीनि भूतानि इत्यादिः । इतरशास्त्रासिद्धः स्वशास्त्रमात्रसिद्धोऽर्थः प्रतितन्त्रसिद्धान्तः । शब्दस्य नित्यत्वं मीमांसकमात्रसिद्धं नैयायिकाद्यसिद्धमिति प्रतितन्त्रसिद्धान्तः । 'समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः' इति सूत्रे समानशब्दः एकपर्यायः ।

यस्यार्थस्य सिद्धौ अन्ये अर्था अनुषज्यन्ते सोऽधिकरणसिद्धान्तः । दर्शनस्पर्शनाभ्यामेकार्थग्रहणाद्धेतोः इन्द्रियातिरिक्तः आत्मा सिद्ध्यति । तत्रानुषङ्गिणोऽर्थाः, इन्द्रियाणां भेदः प्रतिनियतविषयग्राहिता, ज्ञातुर्ज्ञानसाधनता चेत्यादयः ।

विशेषपरीक्षणाय किञ्चिदर्थजातमपरीक्षितमभ्युपगम्यते, अस्तु द्रव्यं शब्दः, स तु नित्यः उतानित्यः इति परीक्ष्यते इति सोऽयमभ्युपगमसिद्धान्तः। अयमर्थो भाष्यकाराभिमतो ज्ञेयः।

(६) अष्टभिः सूत्रैः न्यायप्रकरणम्

साधनीयस्यार्थस्य सिद्धिः यावति शब्दसमूहे परिसमाप्यते तावान् शब्दसमुदायः न्याय इत्यभिधीयते। तदेकदेशा अवयवा उच्यन्ते। प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयनः, निगमनञ्चेति पञ्चावयवाः।

साध्यनिर्देशः प्रतिज्ञा। योऽर्थः साध्यते स साध्यः। उत्पत्तिधर्मकत्वेन हेतुना शब्दस्यानित्यत्वं साध्यते। अनित्यत्वेन शब्दः साध्यते इति यावत्। अतश्च विधेयभूतानित्यत्वविशिष्टः शब्दः धर्मी साध्यः। तस्य बोधकं वाक्यं प्रतिज्ञा अनित्यः शब्द इति। न्यायसूत्रेषु सविस्तरं युक्तिभिः शब्दानित्यत्वस्य व्यवस्थापनान् तत्रैदम्पर्यावगमात् प्राचीनन्यायग्रन्थेषु शब्दे अनित्यत्वसाधकन्याय एव उदाहरणतया निर्दिश्यते।

शब्दः अनित्यः इति प्रतिज्ञावाक्यश्रवणानन्तरं कुत इति अनित्यत्वगमके जिज्ञासा जायते। तस्या निवृत्तये, उत्पत्तिधर्मकत्वस्य अनित्यत्वज्ञापकताबोधकं पञ्चम्यन्तं 'उत्पत्तिधर्मकत्वात्' इति हेतुवाक्यं प्रयुज्यते। इदञ्च हेतुवाक्यं द्विविधं उदाहरणसाधर्म्योत्थं तद्वैधर्म्योत्थञ्चेति। उभयस्मिन्नपि प्रकारे 'उत्पत्तिधर्मकत्वात्' इत्येव हेतुवाक्यं प्रयोक्तव्यम्।

हेतुवाक्ये श्रुते, कथमस्योत्पत्तिधर्मकत्वस्य अनित्यत्वगमकत्वमिति जिज्ञासा जायते। तदपनयनाय, हेतुसाध्ययोः साध्यसाधनभावापरपर्यायव्याप्तिबोधकमुदाहरणवाक्यं प्रयुज्यते। उदाह्रियते हेतुसाध्ययोः साध्यसाधनभावः अनेनेति उदाहरणमुच्यते। तद्यथा-यद्यदुत्पत्तिधर्मकं तदनित्यं दृष्टं यथा घटादिकमिति वाक्यम्। इदं साधर्म्योदाहरणमुच्यते। वैधर्म्येणाप्युदाहरणं भवति। यथा अत्रैव यदनित्यं न भवति न तदुत्पत्तिधर्मकं यथा आकाशादिकमिति।

उदाहरणश्रवणानन्तरं जातायाः साध्येन व्याप्तो हेतुः पक्षे अस्ति न वेति जिज्ञासाया निवृत्तये दृष्टान्तवत् पक्षे हेतौ सत्त्वबोधकमुपनयवाक्यं प्रयुज्यते 'तथाचायं शब्दः उत्पत्तिधर्मकः' इति। घटादिवदिति तथाशब्दार्थः। वैधर्म्योदाहरणानन्तरं तु 'न चायं तथा' इत्युपनयः प्रयोक्तव्यः। व्यतिरेकदृष्टान्तात्मवत् 'अयं शब्दः अनुत्पत्तिधर्मको न

किन्तु उत्पत्तिधर्मकः ' इति अनुत्पत्तिधर्मकत्वस्य प्रतिषेधेन उत्पत्तिधर्मकत्वं पक्षे शब्दे उपसंह्रियते ।

तदनन्तरं सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शकं निगमनम् । निगम्यन्ते संबध्यन्ते प्रतिज्ञाहेतूदाहरणोपनयाः एकत्रेति निगमनम् । हेतुमभिधाय पुनः प्रतिज्ञावचनम् ' उत्पत्तिधर्मकत्वादनित्यः शब्दः ' इति वाक्यं निगमनम् । प्रतिज्ञादिसमुदायो न्यायः विप्रतिपन्नपुरुषप्रतिपादको भवति ।

(७) द्वाभ्यां सूत्राभ्यां न्यायोत्तराङ्गलक्षणप्रकरणम् -

"अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" यस्य तत्त्वमविज्ञायमानं तादृशे वस्तुनि, किमिदमित्थम् , उत नेत्थमिति संशये सति, एकतरपक्षे अनिष्टप्रसञ्जनेन, एवं स्यात् नैवं स्यात् इत्यूहस्तर्कः । अयं तर्कः न केवलमनुमानस्यानुग्राहकः । अपितु सर्वस्य प्रमाणस्य । प्रमाणं हि प्रमायां करणम् । वास्यादिकं करणं द्वैधीभावे कार्ये जननीये उद्यमननिपातनादिकामितिकर्तव्यतां यथा अपेक्षते , तथा प्रमाणमपि प्रमायां जननीयायामितिकर्तव्यतां तर्कमपेक्षते ।

यदाहुः—

" न हि तत्करणं लोके वेदे वा किञ्चिदीदृशम् ।
इतिकर्तव्यता साध्ये यस्य नानुग्रहेऽर्थिता ॥ " इति ।

विपरीतकोटावनिष्टं प्रसञ्जयता ऊहापरनामधेयेन तर्केणानुगृहीतं प्रमाणं तत्त्वनिश्चायकं भवति ।

फलन्तु तत्त्वनिर्णयः । स च इदमित्थमेवेत्यवधारणात्मकं ज्ञानम् । तर्कविषये सन्दिह्य ततो न्यायप्रवृत्त्या प्रमाणाधीनमवधारणज्ञानं निर्णयः । एतौ तर्कनिर्णयौ लोकयात्रां निर्वहतः ।

पूर्वोत्तराङ्गसहितो न्यायो निरूपितः । इयता प्रबन्धेन प्रमाणादेः निर्णयान्तस्य पदार्थनवकस्य लक्षणं व्युदपादि । द्वितीयाह्निके अवशिष्टस्य पदार्थसप्तकस्य लक्षणं प्रासङ्गिकी छलपरिक्षा च भविष्यति ॥

इति प्रथमाध्यायस्य प्रथममाह्निकं समाप्तम् ।

द्वितीयाह्निके—

(१) त्रिभिः सूत्रैः कथालक्षणप्रकरणम्

विचारगोचरार्थविषयः नानावक्तृको वाक्यविस्तरः कथा । (१) निरूप्यनिरूपकनियमः (२) कथाविशेषव्यवस्था (३) वादिप्रतिवादिनियमः (४) सदस्यानुविधेय_संवरणम् (५) निग्रहस्थानसामस्त्यासामस्त्योद्भावनप्रतिज्ञानं (६) कथापर्यवसानसंविित्तिरिति षडङ्गानि तस्याः संगिरन्ते । निरूप्यमात्मतत्त्वादिकं, निरूपकं, तत्प्रतिपादकं प्रमाणमनुमानादिकं, तयोर्नियमः, अनेनेदं साधयामीति प्रतिज्ञानम् । कथाविशेषो वादादिः । तस्य व्यवस्थावादेन जल्पेन वा कथयिष्यामीति नियमकरणम् । अनयोरयं वादी अयं प्रतिवादी इति नियमनम् । अनुविधेयः—सभापतिः । अनु पश्चात् विधेयं निष्पन्नकथाफलप्रतिपादनरूपमस्यास्तीत्यनुविधेयः । तस्य सभ्यानाञ्च संवरणम् एते सभ्याः अयं सभापतिरिति संपरिग्रहः । जल्पे वितण्डायाञ्च निग्रहस्थानानां सामस्त्यं, वादे त्वसामस्त्यं कतिपयानामेव प्रयोगार्हत्वात् । क्वचिदेकत्र पक्षे समाप्तिरिति समयबन्धः । इति षडङ्गवती कथा ।

वादिप्रतिवादिसंमताः सिद्धान्तद्वयरहस्यवेदिनः रागद्वेषविरहिणः पराभिहितग्रहणधारणप्रतिपादनकुशलाः त्र्यवराः विषमसंख्याकाः सभ्याः स्वीकार्याः । विषमसंख्याकत्वे एव द्वैधे सति बहूनां संवादेन निर्णयः संभवति ।

(१) प्रमेयविशेषस्य, कथाविशेषस्य वादिप्रतिवादिनोश्च नियमनम् (२) पर्यनुयोज्योपेक्षणोद्भावनादिना कथकगुणदोषावधारणम् (३) भग्नप्रतिबोधनम् (४) मन्दस्यानुभाष्य प्रतिपादनमिति सदस्यानां कर्माणि । अनुविधेयस्य निष्पन्नकथाफलप्रतिपादनं कर्म ।

वादः जल्पः वितण्डा चेति त्रिविधा कथा ।

वादे उभाभ्यामपि वादिभ्यां स्वपक्षसाधनं परपक्षनिषेधश्चेत्युभयमपि प्रमाणत्वेनाभिमतैः तर्कैश्च कर्तव्यम् । सिद्धान्ताविरोधेन पञ्चावयवोपपन्नं वाक्यं प्रयोक्तव्यम् । गुरुशिष्यसब्रह्मचारिभिः सह प्रवर्तमानस्य चास्य वादस्य तत्त्वनिर्णयः फलम् । जल्पवितण्डयोरिव प्रमेयादिव्यवस्थापनार्थमङ्गतया न सदस्या वादे अङ्गीक्रियन्ते । परन्तु दैवादागताः सदस्याः प्रामादिककथाभासशङ्काव्यावर्तनायाङ्गीक्रियन्ते ।

विजिगीषमाणयोरुभयोरपि वादिप्रतिवादिनोः साधननिषेधवती कथा जल्पः । स्वयमप्रमाणतया ज्ञातेनापि व्यवहारः छलजातीनां सर्वेषाञ्च निग्रहस्थानानां प्रयोगश्चानुमन्यते केवलविजयार्थत्वादस्य ।

स एव जल्पः स्थापनाहीनो वितण्डा भवति । तत्र एकः परपक्षं केवलं दूषयति न स्वपक्षं प्रमाणैः साधयति । परपक्षदूषणेनैव अभिमतः स्वपक्षः सिद्धो भवतीति मन्यते । स प्रतिपक्षस्थापनाहीनो वितण्डा न तु प्रतिपक्षहीनः । वादजल्पवितण्डाभिः व्यवहरमाणान् कथकान् वदन्ति ।

(२) षड्भिः सूत्रैः हेत्वाभासलक्षणप्रकरणम्

पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वं अबाधितत्वं असत्प्रतिपक्षितत्वञ्चेति पञ्च रूपाणि गमकतौपयिकानि । एष्वन्यतमस्याभावेऽपि हेतुवदाभासमानाः दुष्टहेतवः हेत्वाभासा इत्युच्यन्ते । ते च सव्यभिचारः, विरुद्धः, प्रकरणसमः, साध्यसमः, कालातीतः इति पञ्चविधाः । विपक्षासत्त्वरूपाभाववान् सव्यभिचारः । सपक्षसत्त्वरूपाभाववान् विरुद्धः । असत्प्रतिपक्षितत्वरूपाभाववान् प्रकरणसमः । पक्षसत्त्वरूपाभाववान् साध्यसमः । अबाधितत्वाभाववान् कालातीतः ।

(१) अनैकान्तिकः सव्यभिचारः । एकस्मिन्नन्ते विद्यते इत्यैकान्तिकः । नैकान्तिकः अनैकान्तिकः । साध्यमेकोऽन्तः । साध्याभावः अपरोऽन्तः । यो हेतुः नैकस्मिन्नन्ते नियतः, अपितु साध्यतदभावोभयान्तव्यापकः सः अनैकान्तिको भवति । शब्दानित्यत्वसाधने सूत्रकारनिर्भरात् प्राचीनैः शब्दस्य नित्यत्वसाधको हेतुरेवानैकान्तिकस्योदाहरणं प्रदर्श्यते । यथा शब्दः नित्यः अस्पर्शत्वादिति । स्पर्शशून्यत्वं हेतुः साध्यवति नित्यात्मादाविव साध्याभाववति अनित्यबुद्ध्यादावप्यस्तीति उभयान्तव्यापकत्वादनैकान्तिकः सव्यभिचारो नाम हेत्वाभासः ।

(२) सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः । स्वाभ्युपगतसिद्धान्तस्य साध्यस्य विरोधी विरुद्धनामा हेत्वाभासः । वह्निमान् जलादित्यत्र हेतुः स्वाभ्युपगतवह्नेः विरोधी असमानाधिकरण इति विरुद्धः ।

(३) यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः । अनिर्णीतौ पक्षप्रतिपक्षौ प्रकरणम् । निर्णयाय प्रयुक्तोऽपि यो हेतुः निर्णयं जनयितुं न प्रभवति, उभयपक्षसाम्यात् प्रकरणमनतिवर्तमानः प्रकरणसम इत्युच्यते । यथा शब्दः अनित्यः नित्यधर्मानु-

पलब्धेः घटवत्, शब्दः नित्यः अनित्यधर्मानुपलब्धेः आत्मवदिति । तुल्यबलेन परेण प्रतिबन्धात् साध्यस्य तदभावस्य वा निर्णयं जनयितुमसमर्थः प्रकरणसम इत्यभिधीयते ।

(४) साध्याविशिष्टः साध्यत्वात्साध्यसमः । पक्षे सिद्धेन निश्चितेन हेतुना-असिद्धः साध्यः साधनीयो भवति । पक्षे साध्य इव हेतुरपि साधनीयश्चेत् स साध्यसमो नाम हेत्वाभासः । यथा छाया द्रव्यं, गतिमत्त्वादिति । अत्र गतिमत्त्वं छायायां साधनीयमिति साध्यसमः असिद्ध इति च व्यवह्रियते ।

(५) कालात्ययापदिष्टः कालातीतः । यो हेतुः साधनकालस्यात्यये प्रयुक्तः स कालातीतनामा हेत्वाभासः । पक्षे साध्यसन्देहकालो हि साधनकालः । वह्निरनुष्णः पदार्थत्वादिति । वह्निरनुष्ण इति श्रुते, पक्षे औष्ण्यस्य साध्याभावस्य प्रबलेन प्रत्यक्षेन निर्णीतत्वात् हेतुवचनस्यावसर एव नास्तीति पदार्थत्वं हेतुः कालात्यये अपदिष्टः व्यपदिष्टः कालातीतो भवति । पक्षे साध्याभावनिर्णयमुपजीव्य कालात्ययापदिष्टत्वमुपपादनीयमिति बाधितपदेनेमं हेत्वाभासं व्यवहरन्ति ।

नवीनाः सव्यभिचारम् 'अनैकान्तिकः सव्यभिचारः' इति सूत्रस्थलक्षणवाचकेनानैकान्तिकपदेन, कालातीतं बाधितं 'कालात्ययापदिष्टः कालातीतः' इति सूत्रस्थलक्षणबोधकेन कालात्ययापदिष्टपदेन च व्यवहरन्ति । सत्प्रतिपक्षस्य प्रकरणसमपदेन असिद्धस्य साध्यसमपदेन च निर्देशः नव्यनैयायिकप्रबन्धेषु विरलः संजात इति बोध्यम् ।

(३) अष्टभिः सूत्रैः छललक्षणप्रकरणम्

वाग्युक्तस्य वचनस्य वाचनभिमतार्थं परिकल्प्य दूषणं छलम् । तच्च वाक्छलं सामान्यच्छलम् उपचारच्छलमिति त्रिविधम् ।

(१) शक्यस्यैकस्यार्थस्य बोधे तात्पर्येण प्रयुक्तस्य वाक्यस्य शक्यार्थान्तरतात्पर्यकत्वकल्पनया दूषणं वाक्छलम् । यथा शक्त्या नूतनकम्बलवानित्यर्थतात्पर्येण प्रयुक्तस्य नवकम्बलोऽयं माणवकः इति वचनस्य, नव कम्बला अस्येति व्युत्पत्त्या नवसंख्याककम्बलवत्त्वे तात्पर्यं परिकल्प्य, अस्यैक एव कम्बलः, कुतो नव कम्बला इति प्रतिषेधवचनं वाक्छलम् ।

(२) अहो खल्वसौ ब्राह्मणो विद्याचरणसंपन्नः इत्युक्ते, कश्चिदाह संभवति ब्राह्मणे विद्याचरणसंपदिति । नानेन विद्याचरणसंपत्तौ हेतुतया ब्राह्मण्यं विवक्षितम् । अपि तु संभवमात्रेण तथोक्तम् । अनेन ब्राह्मण्यं विद्याचरणसंपत्तिहेतुतया विवक्षितमिति कल्पयित्वा, व्रात्योऽपि ब्राह्मणः, सोऽपि विद्याचरणसंपन्नोऽस्तु इति दूषणं ब्राह्मण्यरूपातिसामान्यनिमित्तकं सामान्यच्छलमित्युच्यते ।

(३) लाक्षणिकार्थतात्पर्येण प्रयुक्तस्य वचनस्य शक्यार्थतात्पर्यकल्पनया प्रतिषेधः उपचारनिमित्तकमुपचारच्छलम् । मञ्चस्थपुरुषरूपलाक्षणिकार्थतात्पर्येण प्रयुक्तस्य मञ्चाः क्रोशन्तीति वाक्यस्य, मञ्चस्थाः पुरुषाः क्रोशन्ति, न तु मञ्चाः इत्यर्थसद्भावेन प्रतिषेधः उपचारच्छलं भवति ।

वाक्छलमुपचारछलञ्चाभिन्नमेव, शब्दस्यान्यार्थकल्पनया प्रतिषेधस्य समानत्वात् । एवञ्च सामान्यच्छलं वाक्छलमिति छलद्वयमेवास्तु, न छलत्रयमित्याक्षेपो न समञ्जसः । यतः शक्यार्थान्तरकल्पनया दूषणं वाक्छले । लाक्षणिकस्य शक्यार्थकल्पनया दूषणमुपचारच्छले इति वैलक्षण्यं वर्तते । तथापि किञ्चित्साधर्म्येण द्वयोरेकच्छलत्वे, वाचनमिमतार्थकल्पनया प्रतिषेधरूपच्छलत्वस्य सर्वच्छलसाधारण्यात् एकमेव छलं स्यादिति छलद्वयमेवास्तु इत्याक्षेपः असंगतः । लक्षणप्रकरणेऽपि प्रसङ्गात् सूत्रकारैः छलपरीक्षा कृतेति बोध्यम् ।

(४) त्रिभिः सूत्रैः पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम्

हेतौ प्रयुक्ते सति सदुत्तरस्यापरिस्फूर्तौ, व्याप्तिमपुरस्कृत्य साधर्म्येण वैधर्म्येण च यः प्रसङ्गो जायते, सा जायमानत्वात् जातिरिति व्यपदेशं लभते ।

शब्दः अनित्यः कार्यत्वात् घटवत् इत्युपसंहृते सति, यदि कृतकत्वेन अनित्यघटसाधर्म्यात् शब्दः अनित्यः, तर्हि अमूर्तत्वेन नित्याकाशसाधर्म्यात् शब्दः नित्य एव किं न स्यादिति प्रसङ्गः जातिः ।

निग्रहस्थानं नाम पराजयकारणम् । वादिवाक्यस्य विप्रतीतार्थप्रतिपत्तौ सत्यां वादी दूषणासमर्थः पराजितो भवति । एवं तदुक्तमजानानोऽपि दूषणाशक्तः पराजितो भवति । विप्रतिपत्त्यप्रतिपत्तिमूलकं सर्वं निग्रहस्थानम् । साधर्म्यवैधर्म्याभ्यां प्रतिषेधस्य विकल्पाज्जातयः चतुर्विंशतिविधाः । ताश्च पञ्चमाध्यायस्य प्रथमाह्निके वक्ष्यन्ते ।

विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पात् द्वाविंशतिविधानि निग्रहस्थानानि पञ्चमद्वितीयाह्निके वक्ष्यन्ते ।

पुरुषस्याशक्तिः अज्ञानं विपरीतज्ञानञ्च । तत्सूचकदूषणानि जातयः निग्रहस्थानानि च । तेषां लक्षणमनेन प्रकरणेनाभिहितं बोध्यम् ।

"तन्त्रप्रतिज्ञा संसारस्तन्निवृत्तिश्च संविदा ।
उद्देशो लक्षणञ्चैव तत्त्वानामिह कीर्तितम्" ॥ (न्या. वा)

इति प्रथमाध्यायः समाप्तः ।

द्वितीयाध्यायस्य प्रथमाह्निके —

(१) सप्तभिः सूत्रैः संशयपरीक्षाप्रकरणम्

प्रथमेऽध्याये षोडश पदार्था उद्दिष्टा लक्षिताश्च । अथेदानीं प्रमाणादीनां परीक्षा भविष्यति । तत्रादौ, संशयं विना परीक्षाया अभावात् सर्वपरीक्षाव्यापित्वात् संशयः परीक्ष्यते ।

संशयलक्षणसूत्रे समानानेकधर्मोपपत्तेः संशयो जायते इति प्रत्यपादि । तदयुक्तम् । यतः स्थाणुत्वपुरुषत्वसाधारणस्य ऊर्ध्वत्वादेर्धर्मस्याध्यवसायात्संशयो भवति, न पुनः समानधर्मस्य उपपत्तेः सद्भावात् । एवमनेकधर्मस्याध्यवसाय एव संशयं प्रसूते, न सद्भावमात्रम् । अन्यतरधर्माध्यवसायाच्च अन्यतरावधारणमेव भवितुमर्हति, न संशीतिः । एवम् अस्त्यात्मा, नास्त्यात्मा, इति वादिनोः विरुद्धार्थविषयं प्रवादं (विप्रतिपत्तिम्) उपलभमान एव पुरुषः संदिग्धे, न केवलात् विप्रतिपत्तिवाक्यात् । उपलब्धिरव्यवस्थिता अनुपलब्धिरव्यवस्थिता इति जानान एव संदिग्धो भवति । अतः विप्रतिपत्तेः उपलब्ध्यनुपलब्ध्यव्यवस्थातश्च संशय इत्यनुपपन्नम् ।

किञ्च संशयजननीत्यभिधीयमाना विप्रतिपत्तिः संप्रतिपत्तिरेव । अस्त्यात्मेति केचन वादिनः संगिरन्ते, अन्ये तु नास्त्यात्मेति इति संप्रतिपन्नमेव । तथाच विप्रतिपत्तेः संशयः इत्यनेन संप्रतिपत्तेरेव संशय इत्युक्तं भवति ।

अपिच उपलब्ध्यव्यवस्था न संशयहेतुः । अव्यवस्था स्वात्मनि व्यवस्थितैवेति कथं सा अव्यवस्था भवितुमर्हति ।

किञ्च स्थाणुत्वपुरुषत्वसाधारणस्योर्ध्वत्वादेर्धर्मस्य सदा सत्त्वात् कारणानुच्छेदात् संशयः न विच्छिद्येत ।

इति संशयविषयाक्षेपप्रपञ्चः ।

निरुक्तस्याक्षेपप्रपञ्चस्य संक्षेपेणोद्धारः 'यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये, नासंशयः नात्यन्तसंशयो वा' इत्येकेन सूत्रेणाकारि । न साधारणधर्मादिः संशयहेतुः । अपितु तज्ज्ञानमेव । तर्हि सूत्रे समानानेकधर्मज्ञानादिति कुतो नाभिहितमिति चेत् ; विशेषापेक्ष इति सूत्रावयवेनार्थात् समानधर्मज्ञानं संशयहेतुरिति गम्यते इति नोक्तम् । अनुपलभ्यमाने अपेक्षा आकाङ्क्षा भवति । सामान्यापेक्ष इति नोक्तम् । अतश्च विशेषापेक्षाया अभिधानेन सामान्यानपेक्षता ; ततश्च सामान्यस्य ज्ञानं लभ्यते, उपलब्धे आकाङ्क्षाधा असंभवात् ।

अथवा समानानेकधर्मोपपत्तेरिति सूत्रे उपपत्तिशब्दः उपलब्धिपरः । न सद्भावपरः । अनुपलभ्यमानसद्भावस्य अविद्यमानप्रायत्वात् । अथवा समानानेकधर्मशब्दः तज्ज्ञाने लाक्षणिकः । एवं विप्रतिपत्तिशब्दोऽपि ।

पृथक् प्रवादयोः व्याहतं विरुद्धमुपलभे, येनान्यतरमवधारयेयं तं विशेषधर्मं नोपलभे । तत् कोऽत्र विशेषः स्यात्, येनैकतरमवधारयेयमिति विप्रतिपत्तिज्ञानजनितः संशयः न विप्रतिपत्तिसंप्रतिपत्तिमात्रेण निवर्तयितुं शक्यते ।

अव्यवस्था स्वात्मनि व्यवस्थितापि नात्मानं जहाति । तावता चाव्यवस्था अनुज्ञाता भवति । तस्मान्न संशयानुत्पत्तिर्दोषः । नापि अत्यन्तसंशयापत्तिः । विशेषापेक्षः इत्युक्त्या असति विशेषदर्शने संशयो जायते इति गम्यते । अवधृते विशेषधर्मे न तदपेक्षा भवति । अतो विशेषानवधारणस्यापि संशयसामाग्रीपतितत्वान्न विशेषदर्शनानन्तरं संशयो भवितुमर्हतीति ।

यत्र यत्र संशयपूर्विका परीक्षा प्रवर्तते, तत्र तत्र एवं संशये परेण प्रतिषिद्धे समाधिर्वक्तव्यः ॥

(२) त्रयोदशभिः सूत्रैः प्रमाणसामान्यपरीक्षाप्रकरणम्—

उपलब्धिहेतुः प्रमाणम्, उपलब्धिविषयः प्रमेयम् । प्रमाणप्रमेययोः पूर्वापरभावः सहभावो वा न घटते । न चान्या विधा संभाव्यते । तस्मात्प्रत्यक्षदीनां प्रामाण्यं न

संभवति । तथाहि, यदि पूर्वं प्रमाणं (प्रमाविशिष्टं) पश्चात् प्रमेयं सिद्ध्यति, तदा गन्धादेरर्थस्य प्रमेयस्य इन्द्रियसंनिकर्षात् प्रत्यक्षं न स्यात् । गन्धसिद्धेः पूर्वमेव गन्धप्रमाविशिष्टकरणस्य सत्त्वात् तत्काले गन्धाभावेन इन्द्रियार्थसंनिकर्षासंभवात् । यदि च पूर्वं प्रमेयं, पश्चात्प्रमाणम् , तदा, प्रमाणेन प्रमीयमाणो ह्यर्थः प्रमेयं भवति । असति च प्रमाणे कथं प्रमेयं भवितुमर्हति । यदि प्रमाणं प्रमेयञ्च युगपत् सिध्यतः , तदा गन्धादिषु विषयेषु प्रत्यर्थनियतानि ज्ञानानि युगपत् संभवन्तीति ज्ञानानां यौगपद्यप्रसङ्गः । तस्मान्न प्रत्यक्षादीनि प्रमाणानीति पूर्वपक्षः ।

प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः इति वाक्येन प्रत्यक्षादीनां प्रामाण्यं प्रतिषिध्यते । तत्र वदामः, प्रतिषेधप्रतिषेध्ययोः त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः । तथाहि प्रतिषेध्यात्पूर्वं प्रतिषेधसिद्धौ, प्रतिषेध्याभावे प्रतिषेध एव न संभवति । प्रतिषेध्यादनन्तरं प्रतिषेधसिद्धौ, पूर्वं प्रतिषेध्यमेव न स्यात् । असति प्रतिषेधे केन प्रतिषिध्येत ? यदि प्रतिषेध्यं प्रतिषेधश्च युगपत् सिद्ध्यतः , तदा प्रतिषेध्यस्य सिद्धत्वात् प्रतिषेधोऽनर्थकः । तथाच प्रत्यक्षादीनां प्रामाण्यं न संभवतीति वाक्यस्यानुपपद्यमानतया तेषां प्रामाण्यं सुस्थं भवति । इत्थञ्च पूर्वपक्ष्युक्तं जात्युत्तरमेवेति ।

किञ्च त्रैकाल्यासिद्धिहेतुना अप्रमाणत्वं साधयता भवता हेतोः साधकता दृष्टान्ते प्रदर्शनीया । एवञ्च उदाहरणाश्रयस्य प्रत्यक्षादेः प्रमाणस्यार्थसाधकताभ्युपगतैव । प्रामाण्यप्रतिषेधवाक्यावयवान्तर्गतान्येव प्रत्यक्षादीनि प्रमाणानि नान्यप्रत्यक्षादीनि इति च वक्तुं न शक्यते, विशेषहेतोरभावात् ।

वस्तुतः प्रमाणप्रमेययोः पूर्वापरसहभावः अनियत एव । क्वचित् पूर्वसिद्धेन आदित्यप्रकाशेन पश्चादुत्पत्स्यमानोऽर्थः प्रकाश्यते । पूर्वसिद्धं चातोद्यमन्तर्हितं, पश्चादुत्पन्नेन तदीयस्वनेन प्रमाणेन गम्यते वीणा वाद्यते इति । क्वचिच्च धूमेन प्रमाणेन स्वसमानकालिकोऽग्निः अनुमीयते । प्रमितः, प्रमीयते, प्रमास्यते अर्थः अनेनेति प्रमाणम् । प्रमितं, प्रमीयते, प्रमास्यते इति च प्रमेयं भवति ।

गुरुत्वपरिमाणस्य प्रमेयस्य सुवर्णादेः ज्ञानसाधनं तुला । यदा सुवर्णादिना तुलान्तरं व्यवस्थाप्यते, तदा तुलान्तरप्रतीतिसाधनं प्रमाणमपि भवति । तथैव उपलब्धिसाधनं प्रमाणमपि उपलब्धिविषयतया प्रमेयव्यपदेशमपि भजते ।

प्रत्यक्षादीनि प्रमाणानि विनैव प्रमाणं सिध्यन्ति ? किंवा प्रमाणान्तरैः ? आद्ये प्रत्यक्षादिवदेव विनैव प्रमाणमर्थसिद्धिसंभवान् प्रमाणानि निरर्थकानि स्युः । द्वितीये, प्रत्यक्षादीनां साधकप्रमाणान्तराणामपि प्रमाणान्तरैः सिद्धिः, एवमेव तेषामपि प्रमाणान्तरैरिति अनवस्था स्यादिति न शङ्कितव्यम् । यतः प्रत्यक्षादीनां यथासंभवं प्रत्यक्षादिभिरेवोपलम्भः, न प्रमाणान्तरैः । यथा दीपस्य प्रकाशः दृश्यस्य घटादेर्दर्शने प्रमाणम् अथ चेन्द्रियेण प्रत्यक्षप्रमाणेन गृह्यते । एवमिन्द्रियं प्रत्यक्षप्रमाणं स्वजन्यरूपाद्युपलब्ध्या अनुमीयते इति बोध्यम् ।

(३) द्वादशभिः सूत्रैः प्रत्यक्षपरीक्षाप्रकरणम्

इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानं यतो भवति तत्प्रत्यक्षप्रमाणमिति कार्यद्वारकं प्रत्यक्षप्रमाणलक्षणमभिहितम् । प्रत्यक्षज्ञाने न केवलमिन्द्रियार्थसंनिकर्षः कारणम् । अपितु आत्ममनःसंनिकर्षः इन्द्रियमनः सन्निकर्षश्च । अत एव युगपत् नानेन्द्रियैः नानार्थविषयाणि ज्ञानानि न जायन्ते । एवं प्रत्यक्षज्ञानकारणस्य संपूर्णस्यानुपादानात् प्रत्यक्षलक्षणं नोपपद्यते इति पूर्वपक्षः ।

आत्ममनःसंनिकर्षः प्रत्यक्षानुमित्यादिसकलज्ञानसाधारणं कारणम् । इन्द्रियार्थसन्निकर्षस्तु प्रत्यक्षमात्रे असाधारणकारणम् । सुप्तः किल तीव्रे ध्वनौ स्पर्शे च सति प्रबुध्यते । तत्र प्रबोधज्ञाने इन्द्रियार्थसन्निकर्षः प्रधानम्, नात्ममनःसंयोगः । न ह्यात्मा जिज्ञासमानः प्रयत्नेन मनस्तदा प्रेरयति । निःसंकल्पस्य निर्जिज्ञासस्य व्यासक्तमनसः बाह्यविषयोपनिपातात् ज्ञानं जायते । अतः इन्द्रियार्थसंनिकर्ष एव प्रधानम् ।

किञ्च चाक्षुषं ज्ञानं, रूपज्ञानमिति इन्द्रियेणार्थेन च ज्ञानविशेषाः व्यपदिश्यन्ते । अतोऽपीन्द्रियार्थसन्निकर्षः प्रधानम् । न चैवं मन्तव्यमिइन्द्रियार्थसंनिकर्ष एव हेतुः, न मनःसन्निकर्ष इति युगपज्ज्ञानानि जायेरन्निति । इन्द्रियार्थस्य तीव्रत्वादिविशेषेण सुप्तानां व्यासक्तचित्तानाञ्च ज्ञानमुदेति । तच्चेन्द्रियार्थसंनिकर्षविषयमिति इन्द्रियार्थसंनिकर्षः प्रधानमित्युच्यते । न तु मनःसनिकर्षो न कारणमिति । तस्मादसाधारणत्वात् प्रधानत्वात् प्रत्यक्षलक्षणे इन्द्रियार्थसंनिकर्ष उपात्तो नेतरः संनिकर्षः इत्युपपन्नमेव प्रत्यक्षलक्षणमिति समाधिः ।

इन्द्रियार्थसंनिकर्षाज्जायमानम् अयं वृक्षः इति ज्ञानं प्रत्यक्षमित्यभिधीयते । तच्चानुमानमेव । पुरोवर्तिनं वृक्षभागं गृहीत्वा वृक्षमुपलभते पुरुषः । न चैकदेशः पुरोवर्ती

वृक्षः । तस्मात् धूमदर्शनेन वह्निमिव, पुरोवर्तिभागदर्शनेन वृक्षमुपलभते इति न प्रत्यक्षं प्रमाणमिति पूर्वपक्षः ।

पुरोवर्तिभागस्य प्रत्यक्षं भवताप्यङ्गीकृतमिति प्रत्यक्षं न प्रमाणमिति वचनं व्याहतं भवति । प्रत्यक्षस्याभावे तत्पूर्वकस्यानुमानस्य प्रामाण्यं दूरापास्तं वेदितव्यम् । नापि वृक्षपुरोवर्तिभागमात्रस्य प्रत्यक्षम् , किन्तु अवयवातिरिक्तस्यावयविनः सत्त्वात् अवयविना वृक्षेण संनिकर्षात् अवयविनोऽपि पुरोवर्तिभागसहचरितस्य प्रत्यक्षं जायत एव । तस्मात् प्रत्यक्षं प्रमाणमेवेति सिद्धम् ।

(४) चतुर्भिः सूत्रैः प्रासङ्गिकमवयविपरीक्षाप्रकरणम्

वृक्षः इत्यादिप्रतीतेः अवयवसमुदाय एव गोचरः, न ततोऽतिरिक्तोऽवयवीति वा मन्तव्यम् । तथा सति अवयविनोऽनभ्युपगमे निरवयवपरमाणुसमुदाय एव वृक्षादिरिति स्वीकर्तव्यम् । परमाणवश्च महत्त्वाभावादप्रत्यक्षा इति तत्समुदायात्मकस्य वृक्षादेः प्रत्यक्षमेव न भवेत् । पटैकदेशधारणेन सकलपटधारणम् , एकदेशाकर्षणेन सकलाकर्षणञ्च न घटेत परमाणुपुञ्जव्यतिरिक्तस्यावयविनोऽनभ्युपगमे ।

अतिदूरस्थस्यैकस्य वृक्षस्याप्रत्यक्षत्वेऽपि तत्समुदायरूपमवयव्यनात्मकं वनमिव, सेनाङ्गस्य दूरस्थस्याप्रत्यक्षत्वेऽपि तत्समुदायात्मिका सेनेव च, परमाणोरप्रत्यक्षत्वेऽपि तत्समुदायो वृक्षादिः प्रत्यक्षो भवतीति न मन्तव्यम् । यतः दूरत्वदोषप्रतिबद्धचाक्षषाः महान्तः स्वभावतो योग्या वनाङ्गवृक्षा इति तत्समुदायप्रत्यक्षो भवति । परमाणुस्तु महत्त्वाभावात् स्वभावतोऽतीन्द्रियः इतिं तत्समुदायः प्रत्यक्षो नैव स्यादिति अवयवसमुदायव्यतिरिक्तः अवयवी स्वीकर्तव्यः इति सिद्धान्तः ।

(५) द्वाभ्यां सूत्राभ्यामनुमानपरीक्षाप्रकरणम्

नदीवृद्ध्या, पिपीलिकाण्डसञ्चारेण, मयूरशब्देन च वृष्टिरनुमीयते इत्युच्यते । तन्न संगतम् ; विनापि वर्षं मध्ये निरोधादपि नदी पूर्णा दृश्यते । नीडोपघातादपि पिपीलिकाण्डसञ्चारो भवति । मयूरशब्दमनुकरोति पुरुषः । न च तेन वृष्ट्यनुमानं भवति, व्यभिचारात् । तस्मादनुमानमप्रमाणमिति पूर्वपक्षः ।

नोदकवृद्धिमात्रेण वृष्टिमनुमिनोति । किन्तु प्रवाहस्य शीघ्रतरत्वं बहुतरफेनफलवर्णवाहित्वञ्चोपलभ्य पूर्णत्वेन नद्याः वृष्टो देवः इत्यनुमिनोति । एवं कासाञ्चित्पिपीलि-

कानां सञ्चारेण न वृष्टिरनुमीयते । मयूरशब्दसदृशशब्दः नानुमापकः । किन्तु मयूर-शब्द एव । इत्थञ्च तत्तद्विशेषणविशिष्टहेतूनां व्यभिचारो नास्तीति अनुमानं प्रमाण-मेवेति सिद्धान्तः ।

(६) पञ्चभिः सूत्रैः वर्तमानपरीक्षाप्रकरणम्

त्रिकालयुक्ता अर्थाः अनुमानेन गृह्यन्ते इत्यभ्युपगमः न संभवति, वर्तमान-कालस्यैवाभावात् । वृन्तात्प्रच्युतं फलं भूमौ पतति । तस्य वृक्षावधिकः कश्चिद्देशः पतितोऽध्वा । तत्संयुक्तः पतितकालः । तस्य भूम्यवधिकः कश्चिद्देशः पतितव्योऽध्वा । तत्संबद्धः पतितव्यकालः इत्युच्यते । तावतैवोपपत्तौ वर्तमानकालस्य प्रसङ्ग एव नास्तीति आक्षेपः । कालः नाध्वना व्यज्यते । अपितु क्रियया । यदा पतनक्रिया उपरता स पतितकालः । यदा चोत्पत्स्यते स अनागतकालः । यदा वर्तमाना गृह्यते स वर्तमानः कालः । फले वर्तमानक्रियाया अग्रहणे क्रियाया उपरमस्य उत्पत्स्यमानतायाश्चाग्रह-णात् अतीतानागतकालयोरेवासिद्धिप्रसङ्गः । न चातीतानागतौ परस्परापेक्षया सिध्यतः, येन वर्तमानाभावेऽपि तौ सिध्येताम् । किञ्च वर्तमाने वस्तुनि इन्द्रियसंनिकर्षात् प्रत्यक्ष ज्ञानं जायते । वर्तमानाभावे कस्य संनिकर्षात्प्रत्यक्षं जायेत । प्रत्यक्षाभावे तन्मूलकानुमा-नादीनामप्रवृत्तौ कस्यापि कथमपि प्रतीतिर्न स्यात् । वर्तमानघटे तद्गतरूपादीनामतीताना-गतत्वसंभवात् तदभिप्राये अयं घटः श्याम आसीत्, रक्तो भविष्यतीत्यादिव्यवहारोऽपि संगच्छते । तस्मात् वर्तमानः कालः सिद्ध्यत्येवेति सिद्धान्तः ।

(७) पञ्चभिः सूत्रैः उपमानपरीक्षाप्रकरणम्

अत्यन्तसाधर्म्ये यथा गौः तथा गौः इति उपमानं न भवति । प्रायः साधर्म्येऽपि न भवति यथा गौः तथा महिष इति । किञ्चित्साधर्म्येऽपि न संभवति प्रमेयत्वादिना, साधर्म्यस्य सर्वत्र सत्त्वात् इति न मन्तव्यम् । यतः प्रसिद्धं साधर्म्यं विवक्षितम् । महिष्यादिव्यावृत्तं गोसादृश्यं ग्राह्यम् । तज्ज्ञानमेवोपमानप्रमाणम् । क्वचित् किञ्चि-त्साधर्म्यमिति च प्रकरणानुरोधाद्बोद्धव्यम् ।

तथाप्युपमानं न प्रमाणान्तरम्, अनुमानेऽन्तर्भावात् । प्रत्यक्षेण धूमेन अप्रत्य-क्षोऽग्निरिव, प्रत्यक्षेण गवा अप्रत्यक्षो गवयो गृह्यते इति समानमित्याक्षेपः ।

वनं गतो नागरिकः यदा गोसदृशं गवयं पश्यति, तदनन्तरमेव अयं गवयपद-वाच्यः इति संज्ञासंज्ञिसंबन्धप्रतीतिमुपमानफलमाप्नोति । तस्मान्नाप्रत्यक्षस्य गवयस्य

प्रतीतिः प्रमाणफलमिति नानुमानमिदम् । यथा गौस्तथा गवयः इति समानधर्मस्योप-संहारादुपमानं सिद्ध्यति नानुमानम् । इत्थञ्च गोसादृश्ये गवयपदवाच्यत्वव्याप्तिज्ञानानि-यमादपि संज्ञासंज्ञिसंबन्धज्ञानं नानुमितिरिति उपमानं प्रमाणान्तरमेवेति सिद्धान्तः ।

(८) अष्टभिः सूत्रैः शब्दसामान्यपरीक्षाप्रकरणम्

शब्दो न प्रमाणान्तरं, किन्तु अनुमानमेव । धूमेनाप्रत्यक्षो वह्निरिव श्रुतेन शब्देनाप्रत्यक्षोऽर्थोऽवगम्यते । न च शब्दाधीनार्थोपलब्धौ अनुमितेर्वैलक्षण्यमुपलभामहे । संबद्धयोः साध्यहेत्वोः संबन्धप्रतीत्या साध्यानुमितिरिव, संबद्धयोः शब्दार्थयोः संबन्धाव-गमेन जायमाना अर्थोपलब्धिर्नानुमानसरणिमतिवर्तते इति पूर्वपक्षः ।

आप्तेनोपदिष्टः आकाङ्क्षायोग्यतादिसहकृतः शब्दः अर्थोपलब्धिं जनयन् नानुमानेऽन्तर्भावमर्हति । शाब्दयामि, शृणोमि, इत्यादिना अनुव्यवसायेन शब्दजन्यबोधे जातिविशेषः अनुभूयत एव । शब्दार्थयोश्च न धूमाग्न्योरिव संबन्धोऽस्ति । तथात्वे अन्नमित्युक्ते अर्थस्य सत्त्वेन तत्कार्यमुदरपूरणं, अग्निरित्युक्ते वह्निकार्यदाहः, असिरित्यु-च्चारिते असिकार्यं पाटनञ्च जायेत । न ह्येतानि जायन्ते । अतः शब्दार्थयोः संबन्धो नास्ति । यदि शब्दः स्वासंबद्धमर्थं प्रत्याययति, तदा सर्वोऽपि शब्दः सर्वमर्थं बोधयेद-संबद्धत्वाविशेषात् । अतः शब्दः स्वसंबद्धमेवार्थं बोधयतीति निर्वाहाय शब्दार्थयोः संबन्धः अवश्यं स्वीकरणीय इति चेत् । तथापि न तयोः प्राप्तिलक्षणः संबन्धः, परन्तु 'अस्मात् पदादयमर्थो बोद्धव्यः' इति समयात्मकः । तदधीनश्च शब्दार्थावबोधः । आर्य-म्लेच्छादीनां यवादिशब्दैः दीर्घशूककङ्ग्वादेर्भिन्नभिन्नस्यार्थस्यावबोधादपि न शब्दार्थयोः स्वाभाविकः संबन्धः, परन्तु समय एवेति प्रतीमः इति सिद्धान्तः ।

(९) द्वादशभिः सूत्रैः शब्दविशेषपरीक्षाप्रकरणम्

शब्दः दृष्टार्थकः अदृष्टार्थकश्चेति द्विविध इत्युक्तं प्राक् । तत्रादृष्टार्थशब्दस्या-प्रामाण्यमाक्षिप्य परिह्रियते ।

'पुत्रकामः पुत्रेष्ट्या यजेत' इति वेदेन विहितायामिष्टावनुष्ठितायामपि क्वचित् पुत्रजन्म न लक्ष्यते । अतस्तद्वाक्यमनृतार्थबोधकमिति तत्सामान्यात् 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिकमदृष्टार्थकं वाक्यमपि अप्रमाणम् । एवमुदितहोममनुदित-

होमञ्च विधाय तमेव स्वयं निषेधति वेदः । अतः पूर्वापरविरोधादप्रमाणम् । एवं त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यादौ पुनरुक्तदोषोऽपि दृश्यते । पुनरुक्तञ्च प्रमत्तगीतमप्रमाणम् । तत्सामान्यात्सर्वोऽपि वेदः अप्रमाणमिति पूर्वपक्षसंक्षेपः ।

अग्निकामो दारुणी मथ्नीयादिति लौकिकं विधिवाक्यं दृश्यते । मिथ्याभिमन्थने दारुणः आर्द्रतायां, प्रयोक्तुः प्रयत्नप्रमादे वा अग्निः न जायते । अथापि नैतद्वाक्यमप्रमाणमिति कोऽपि मन्यते । कर्मकर्तृसाधनानां वैगुण्ये न फलनिष्पत्तिः । तेषां साद्गुण्ये तु फलमवश्यं निष्पद्यते । एवमेव कर्मणः, कर्तुः, साधनस्य च वैगुण्ये पुत्रप्राप्तिः फलं न भवति, साद्गुण्ये तु फलमवश्यं भवत्येवेति वैदिकं वाक्यं प्रमाणम् । यः अग्न्याधानकाले उदितहोमं करिष्यामीत्यभ्युपगम्य, पुनस्तत्परित्यागेन अनुदितहोमं करोति तस्य दोष आपततीत्यनेनाभिसन्धिना प्रवृत्तं निन्दावाक्यं न व्याहतं भवति । लोक इव वेदेऽपि विधिः अनुवादः इति द्विप्रकारं वाक्यमस्ति । 'त्रिः प्रथमामन्वाह' इत्यनुवादः । तथा करण एव सामिधेनीनामृचां पञ्चदशत्वं संपद्यते । विनैव प्रयोजनमुक्तस्याभिधानं पुनरुक्तम् । कस्मैचित्प्रयोजनाय पुनरभिधानमनुवादः । शीघ्रं शीघ्रं गम्यतामित्युक्तौ क्रियातिशयः, पचति पचतीत्युक्ते क्रियाया अनुपरमः, ग्रामो ग्रामो रमणीयः इत्यभिहिते ग्रामव्याप्तिः रमणीयतायां प्रतीयते इति नैतानि वाक्यानि पुनरुक्तानि मन्यन्ते लौकिकाः । एवमेव वेदेऽपि सार्थकं पुनर्वचनमनुवादः इति न तत् प्रमत्तगीतं भवति । मन्त्रब्राह्मणात्मना द्वेधा विभक्तो वेदः । ब्राह्मणञ्च विधिः अर्थवादः अनुवादः इति त्रिविधम् । स्तुतिः निन्दा, परकृतिः पुराकल्पः इति चतस्रो विधा अर्थवादस्य ।

विषादिप्रतिषेधार्थाः बहवो मन्त्रा लक्ष्यन्ते । तैश्च प्रयुक्तैः विषं निवर्तते । आयुर्वेदोपदिष्टस्यानुष्ठानात् समीहितप्राप्तिरपि अनुभवसिद्धा । एतदुभयमपि सत्यार्थं प्रमाणमेव । तत्कस्य हेतोः ? तद्वक्तुः आप्तस्य प्रामाण्यात् । तथाच दृष्टार्थस्योपदेशस्य प्रामाण्यवत् अदृष्टार्थस्य 'अग्निहोत्रं जुहुयात्' इत्यादेरपि तादृशस्याप्तस्य प्रामाण्यादेव प्रामाण्यं निर्णेतव्यमिति सिद्धान्तः । अत्र परतः प्रामाण्यपक्षः कण्ठरवेणैव सूत्रकृताभिहित इति विभावनीयम् ।

इति प्रथमाह्निकं समाप्तम् ।

## द्वितीयमाह्निकम्

### (१) द्वादशभिः सूत्रैः प्रमाणचतुष्टयपरीक्षाप्रकरणम्

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि चत्वारि इत्युक्तमसंगतम् । यतः ऐतिह्यमर्थापत्तिः संभवः अभावः इत्यधिकानि प्रमाणानि सन्ति । इति ह्योचुरिति अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम् । यत्राभिधीयमाने योऽन्योऽर्थः प्रसज्यते सा अर्थापत्तिः । यथा मेघेषु असत्सु वृष्टिर्न भवतीत्युक्ते, सत्सु मेघेषु वृष्टिर्भवतीत्यापद्यते । आढकग्रहणात् प्रस्थस्य ग्रहणं संभवः । अभावः विरोध्यभावज्ञानेनान्यस्य ज्ञानम् । यथा नकुलाभावज्ञानेन व्यालस्य कल्पनम् । तस्माच्चत्वार्येव प्रमाणानीत्यसंगतमिति पूर्वपक्षः ।

ऐतिह्यं शब्देऽन्तर्भवति । अर्थापत्तिसंभवाभावाश्च व्याप्तिसापेक्षा अनुमानान्नातिरिच्यन्ते । अतः चत्वार्येव प्रमाणानीति सिद्धान्तः । अर्थापत्तेः प्रमाणत्वे किल तस्याः क्लृप्तप्रमाणेषु अन्तर्भावचिन्ताया अवसरः । सा तु न प्रमाणम्, अनैकान्त्यात् । तथाहि असत्सु मेघेषु वृष्टिर्न भवतीत्यतः, सत्सु मेघेषु वृष्टिर्भवतीत्यर्थादापद्यते । सत्स्वपि मेघेषु कदाचित् वृष्टिर्न भवति । अतो व्यभिचारादप्रमाणमिति शङ्का न कार्या । यतः असति कारणे कार्यं न जायते इति वाक्याद्विपरीतः सति कारणे कार्यं जायते इत्यर्थादापद्यते । तत्र च वृष्ट्या मेघज्ञानमभिमतम् । यत्र मेघेन वृष्टिज्ञानं तत्रार्थापत्तिभिन्ने अर्थापत्तिभ्रमः । अपिच अर्थापत्तिरप्रमाणमनैकान्तिकत्वादिति प्रतिषेधो न प्रमाणं, क्वचिदनैकान्तिकत्वात् । यदि यत्र कुत्रचिदनैकान्तिकत्वं न दोषाय, किन्तु स्वविषये इत्युच्यते तदा अर्थापत्तिरपि स्वविषये प्रमाणमेव ।

अभावः कथं प्रमाणं तेन प्रमेयस्यासिद्धेरिति शङ्का न कार्या । कानिचिद्वासांसि नीलादिना लक्षितानि कानिचिच्चालक्षितानि सन्ति । तत्र अलक्षितानि वासांसि आनयेत्याज्ञप्तः पुरुषः लक्षणाभावेनोपादेयानि वासांसि बुद्ध्वा आनयति । उपादेयवासःप्रतिपत्तिहेतुः लक्षणाभावः प्रमाणम् । अलक्षितं वासः प्रमेयमिति नासिद्धिः प्रमेयस्य । यत्र प्रतियोगी वर्तते तत्रैव तस्याभाव इति न भवति । परन्तु अन्येषु वासस्सु स्थितस्य लक्षणस्याभावः अलक्षितेषु भवति इति बोध्यम् ।

### (२) सप्तविंशत्या सूत्रैः शब्दानित्यत्वप्रकरणम्

शब्दः अनित्यः, कारणवत्त्वात्, इन्द्रियग्राह्यत्वात्, कृतकवत् तीव्रः शब्दः मन्दः शब्दः इति प्रयोगाच्च । कारणवानिन्द्रियग्राह्यश्च घटादिरनित्यो दृष्टः । अनित्यमेव

सुखदुःखादिकं तीव्रमन्दादिव्यपदेशं भजते । तस्मादुक्तहेतुत्रितयादनित्यः शब्दः इति सिद्धान्तः ।

कपालविभागजन्यः घटध्वंसः कारणवानपि नित्यः । न हि घटध्वंसस्य ध्वंसो भवति । तथा सति ध्वस्तस्य घटस्योन्मज्जनापत्तेः । तथाच कारणवत्त्वं घटध्वंसे व्यभिचरितम् । एवमिन्द्रियग्राह्यं घटत्वादिकमपि नित्यमेवेति इन्द्रियग्राह्यत्वं सामान्ये अनैकान्तिकम् । एवं नित्येष्वपि अनित्यवत्प्रयोगो दृश्यते । वृक्षस्य प्रदेश इतिवत् आत्मनः प्रदेशः इत्यपि प्रयोगात् । ततः कृतकवत्प्रयोगोऽपि नानित्यत्वं साधयतीत्याक्षेपः ।

त्रैकालिकत्वमेव नित्यत्वं मुख्यमात्मादेः । अविनाशित्वरूपं तु भाक्तं गौणं नित्यत्वं ध्वंसस्य । प्रकृतानुमाने त्रैकालिकत्वरूपनित्यत्वाभावः साध्यते । तच्च न व्यभिचरति कारणवत्त्वमिति न दोषः । इन्द्रियग्राह्यत्वादिति हेतौ सन्तानविशेषणं सन्तन्यमानत्वं सामान्यवत्त्वपर्यवसितं दीयते । सामान्यस्य च न सामान्ययोग इति न घटत्वादिसामान्ये व्यभिचारः । वृक्षस्य प्रदेश इत्यत्र प्रदेशशब्देन कारणद्रव्यं मुख्यया वृत्त्या अभिधीयते । आत्मनः प्रदेश इति व्यवहारस्तु न मुख्यः । किन्तूपचरितः । तीव्रः शब्दः इत्यादयस्तु मुख्या एवेति न कृतकवदुपचारस्यापि नित्येष्वनैकान्तिकता इति समाधानसंक्षेपः ।

एतावता निरुक्तेषु हेतुषु अनित्यत्वसाधकेषु अनैकान्तिकता अपसारिता । अथेदानीमप्रयोजकत्वशङ्कानिरासाय विपक्षे बाधकमुच्यते ।

शब्दो यदि नित्यः स्यात्, उच्चारणात्प्रागपि श्रोत्रेणोपलभ्येत ; श्रोत्रसंनिकर्षसत्त्वात् । यदि स्यादुपलब्धिप्रतिबन्धकमावरणं नोपलभ्येतापि शब्दः । न च प्रतिबन्धकं किमप्युपलभामहे । तस्माद्विना प्रतिबन्धकमनुपलम्भात् उच्चारणात्प्राक् नास्त्येव शब्द इति सोऽनित्यः ।

सूत्रकारैः प्रदर्शिता जातिः

यद्यावरणानुपलब्धेरावरणं नास्ति, तर्हि आवरणानुपलब्धेरप्यनुपलम्भात् आवरणानुपलब्धेरभावे, आवरणस्योपलब्धिरेव । यदि आवरणानुपलब्धेरनुपलम्भेऽपि नावरणानुपलब्धेरभावः, तदा आवरणस्यानुपलब्धावपि नावरणस्यानुपपत्तिरिति सन्नपि शब्दः आवरणान्नोपलभ्यते इति जातिवादिनः प्रत्यवस्थानमसंगतम् ।

यतः उपलम्भाभावरूपाया अनुपलब्धेः ज्ञानादेरिव मनोग्राह्यतया उपलब्धिरस्त्येवेति नानुपलब्धेरनुपलब्धिः, ततश्च आवरणे असति उच्चारणात्प्रागनुपलभ्यमानः शब्दो नास्त्येवेति बोध्यम् ।

शब्दनित्यत्वाक्षेपः

(१) स्पर्शरहितस्याकाशस्य नित्यता दृष्टेति, शब्दः नित्यः स्पर्शरहितत्वात् । (२) एवं गुरुणा अन्तेवासिने वेदादिः शब्दः संप्रदीयते । संप्रदीयमानमवस्थितं दृष्टम् । इत्थञ्च शब्दस्यावस्थितत्वे 'तावत्कालं स्थितञ्चैनं कः पश्चान्नाशयिष्यति' इति न्यायेन नित्यत्वं सिद्धं भवति । (३) अवस्थितमेव रूपादिकं पुनः पुनर्दृश्यते । दशकृत्वः अनुवाकः अधीतः इति व्यवहारात् शब्दे सिद्धः अभ्यासः तस्यावस्थानं साधयति इत्याभासः ।

(१) स्पर्शरहितत्वमुभयतो व्यभिचरितम् । न हि यद्यदस्पर्शं तन्नित्यमिति संभवति, अस्पर्शस्य कर्मणः अनित्यत्वात् । नापि यो यः स्पर्शवान् सः अनित्यः इति युज्यते, स्पर्शवतः परमाणोः नित्यत्वदर्शनात् ।

(२) उपसन्ने शिष्ये गुरुरध्यापयति । यदि शब्दः नित्यः स्यात्, तदा शिष्यागमनानन्तरम् अध्यापनात्पूर्वमपि दातृप्रतिगृहीत्रोर्मध्ये गौरिवोपलभ्येत । न चोपलभ्यते । तस्मान्न शब्दस्य संप्रदानं संभवतीति संप्रदानादिति हेतुरसिद्धः । संप्रदानाभावे अध्यापनं न घटत इति न शङ्कनीयम् । अध्यापनं हि गुरूच्चारणानूच्चारणं शिष्योच्चारणानुकूलोच्चारणं वा । तच्च शब्दस्य स्थैर्यास्थैर्ययोस्तुल्यमिति नाध्यापनं शब्दनित्यतां प्रयोजयति ।

(३) अनवस्थितस्यापि नृत्तादेः अभ्यासोऽभिधीयते, द्विर्नृत्यपि, त्रिर्नृत्यतीति, द्विर्भुङ्क्ते इति च । तथाच शब्दस्यान्यान्यत्वेऽपि अभ्याससंभवात् नाभ्यासः स्थैर्यं साधयितुं प्रभवति ।

सूत्रदर्शिता जातिः

ननु अन्यतैव जगति नास्ति । यद्वस्तु अन्यदित्यभिधीयते तत् स्वस्मादनन्यत् अभिन्नमिति तत्कथमन्यत् स्यात् भेदाभेदयोर्विरोधात् इति चेन्न । अन्यस्याभावे अनन्यता न सिद्ध्येत् । न अन्यः इति हि वक्तव्यम् । एवञ्चानन्यता अन्यसापेक्षेति तदभावे अनन्यताया असिद्धिरेव ।

न च शब्दस्य विनाशकारणं नोपलभ्यते इति शब्दः नित्यः इति वाच्यम् । तथा सति अवस्थितस्य शब्दस्य अश्रवणकारणानुपलब्धेः सततश्रवणं स्यात् । शब्दस्य सन्तानोऽनुभूयते ; तत्र जन्यः उत्तरशब्दः स्वजनकं पूर्वशब्दं निरुणद्धि ; इत्थञ्च विनाशकारणस्योपलब्ध्या तदनुपलब्धिरसिद्धो हेत्वाभासः । कांस्यादौ पात्रे शब्दायमाने पाणेः पात्रेण संयोगे शब्दो नोपलभ्यते इति शब्दाभावकारणस्य नानुपपत्तिः ।

न च पाणिना कांस्यादिपात्रसंबन्धेन शब्दनिवृत्तिदर्शनात् कांस्यादिरेव शब्दाश्रय इति मन्तव्यम् , शब्दसन्ताननिर्वाहाय शब्दाश्रयस्य निःस्पर्शत्वाङ्गीकारात् । स्पर्शादि-साहित्येन शब्दो वर्तते इति न युज्यते, यतः एकस्मिन्नेव शङ्खादौ तारमन्दादिभेदभिन्नाः नाना शब्दा जायन्ते । स्पर्शादयस्तु विना पाकं न परावर्तन्ते । अतः शब्दः न स्पर्श-रूपादिसहवृत्तिः । अपितु स्पर्शादिरहिताकाशवृत्तिरनित्यः इति सिद्धान्तः ।

(३) अष्टादशभिः सूत्रैः शब्दपरिणामप्रकरणम्

दध्यत्रेति सन्धाने ‘ इको यणचि ’ इति सूत्रेण इकारस्य यकारो विकारः इति सांख्या वदन्ति । परे तु इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्य इति आदेशं वदन्ति । तत्र किं तत्त्वमिति विचारे, आदेश एव तत्त्वं न विकारः इति सिध्यति । महत्या प्रकृत्या-रब्धो विकारः महान् भवति । अल्पया चारब्धः अल्पो भवति, विकारस्य प्रकृत्य-नुविधाननियमात् । न हि दध्यत्रेति ह्रस्वेकारविकारो यकारः, सुध्युपास्य इत्यत्र दीर्घेका-रविकारयकारान् ह्रस्वदीर्घत्वादिना विलक्षणोऽनुभूयते । तस्मान्न यकार इकारस्य विकारः ।

विकारधर्मोऽपि वर्णेषु नोपलभ्यते । यदात्मकं सुवर्णं मृदादिकं वा, तस्यात्म-नोऽन्वये सति पूर्वो व्यूहो निवर्तते । व्यूहान्तरञ्चोपजायते । तं विकारमाचक्षते । न हि वर्णसामान्ये कश्चित् शब्दात्मा अन्वयी दृश्यते । य इत्वं जहाति यत्वञ्चापद्येत ।

किञ्च, क्षीरं दध्यात्मना परिणमति । दधि च पुनः क्षीरभावं न प्राप्नोति । दध्यत्रेति सन्धाय प्रयोगे इकारः यकारतामापन्नः, पुनः दधि अत्रेति अवग्रहे विच्छिद्य प्रयोगे इत्वमापद्यते । तस्माद्वर्णविकारो नोपपद्यते । न च शङ्कनीयं, सुवर्णादिकं कटक-भावं विहाय कुण्डलतामापन्नं पुनरपि कटकतामापद्यते ; तद्वत् इकारविकारो यकारः पुनरित्वमापद्यते इति । दृष्टान्ते सुवर्णत्वविशिष्टं प्रकृतिः न कटकत्वादिविशिष्टम् । कटकं कुण्डलञ्चेत्युभयमपि सुवर्णभावं न जहाति । यदि सुवर्णतामपहाय कटकतामा-

पत्रं पुनः सुवर्णतामाप्नुयात्, तदाऽस्त्यवसरः निरुक्तशङ्कायाः। न चैवम्! प्रकृते तु इत्वं विहाय यत्वं प्राप्तस्य पुनरवग्रहे इकारभाव इति विकारवैषम्यं दुष्परिहरमेव। अपिच वर्णानां नित्यत्वपक्षमाश्रित्य विकार उपवर्ण्यते? उतानित्यत्वपक्षम्? आद्ये, नित्यस्याविकारिणो विकारो न घटते। द्वितीये, स्वप्रत्यक्षेण नष्ट इकारः कथंकारं यकारात्मना परिणमेत्?

नित्याः केचनाकाशादयः अतीन्द्रियाः, परे तु घटत्वादयः ऐन्द्रियिका वर्तन्ते। तथा नित्याः केचन न विकारभाजः, वर्णास्तु विक्रियन्ते इति स्यात्। ('अनित्यत्वपक्षे) अनवस्थायिनामपि वर्णानां श्रावणमिव विकारोऽपि स्यादिति च शङ्का न कार्या, विकारो नाम स्वरूपपरित्यागेन रूपान्तरापत्तिः। तामापन्नस्य नित्यता न घटते। यकारस्य इकारोपादेयता च न संभवति, घटकाले उपादानकपालस्येव यकारकाले इकारस्यानुपलब्धेः। तस्मान्नित्यत्वपक्षे न विकारः संभवदुक्तिकः। वर्णस्यानित्यस्यापि क्षणद्वयावस्थायिनः द्वितीयक्षणे प्रत्यक्षमुपपद्यते; कालान्तरभावी तु विकारो न संभवत्येवेति अनित्यत्वपक्षेऽपि विकारो नोपपद्यते।

अपिच विकारस्थले प्रकृतिनियमो दृश्यते। यथा क्षीरमेव दध्नः प्रकृतिः, न दधि क्षीरस्येति। दध्यत्रेत्यत्र इकारः यकारतामापद्यते। विध्यतीत्यत्र तु यकार इत्वमापद्यते इत्यनियमः। अतः वर्णविकारो न युज्यते।

सूत्रदर्शिता जातिः

न च प्रकृतेरनियमः स्वविषये नियत इति नियम एष भवतीति शङ्कनीयम्। यतः नियमतदभावयोर्विरोधात् कथमपि अनिममो न नियमो भवति।

स्थान्यादेशभावात् एकवर्णे प्रयोक्तव्ये वर्णान्तरप्रयोगः विकारशब्देन व्यवह्रियते। तादृशव्यवहारहेतवस्तु, गुणान्तरापत्तिः उपमर्दः ह्रासः वृद्धिः लेशः श्लेषः इत्यादयः इति बोध्यम्।

(४) द्वादशभिः सूत्रैः शब्दशक्तिपरीक्षाप्रकरणम्

विभक्त्यान्ता वर्णा एव पदसंज्ञका भवन्ति। व्यक्त्याकृतिजातिषु अविनाभावेन वर्तमानासु गोपदस्य प्रयोगात् व्यक्तिराकृतिर्जातिर्वा इति विचार्यते।

या गौस्तिष्ठति, या गौर्निषण्णा, गां ददाति, ब्राह्मणस्य गौः, दश गावः, गौरवर्धत, शुक्ला गौः, गोमुखम्, गौः गां जनयति, इत्यादयः प्रयोगा बहुलमुपलभ्यन्ते।

न चैते जातिविषयकतया उपपद्यन्ते । अतः व्यक्तिरेव पदार्थः इति न मन्तव्यम् । केवलव्यक्तेरव्यवस्थानात् गवादिपदादगृहीतसमयव्यक्तेर्बोधानुपपत्तेः । व्यक्तेरपदार्थत्वे व्यक्तिविषयाः पूर्वोक्ताः प्रयोगाः कथं संगच्छन्ते इति चेत् । तत्पदाश्रयेऽपि तत्पदस्य प्रयोगो दृष्टः । यथा साहचर्यात् यष्टीः प्रवेशयेत्यत्र यष्टिधरेषु यष्टिशब्दस्य, स्थानात् मञ्चाः क्रोशन्ति इत्यत्र मञ्चस्थपुरुषेषु मञ्चशब्दस्य, तादर्थ्यात् कटं करोतीत्यत्र कटार्थकवीरणेषु कटशब्दस्य, चारित्ररूपाद् वृत्तात् यमो राजा इत्यत्र राजनि यमशब्दस्य, मानात् आढकसक्तव इत्यत्र आढकपरिमितसक्तुषु आढकशब्दस्य, धारणात् तुला चन्दनमित्यत्र तुलाधृते तुलाशब्दस्य, सामीप्यात् गङ्गायां गावश्चरन्तीत्यत्र गङ्गासमीपे देशे गङ्गाशब्दस्द, योगात् कृष्णः शाटक इत्यत्र कृष्णवर्णयुक्ते कृष्णशब्दस्य, साधनात् अन्नं प्राणाः इत्यत्र प्राणशब्दस्य, आधिपत्यात् राजैवास्य कुलमित्यत्र कुलाधिपतौ कुलशब्दस्य च प्रयोगः । एवं गोपदार्थजातिसाहचर्यात् योगाद्वा गोशब्दस्य व्यक्तौ प्रयोगः संगच्छते ।

गोशब्दस्य यदि व्यक्तिर्नार्थः, तदा अवयवसंस्थानरूपा आकृतिरेवार्थोऽस्तु । अवयवसंस्थानेन हि अयं गौः, अयमश्वः, अयं मनुष्यः इति सत्त्वव्यवस्था भवति इति चेत् ; तथापि गां प्रोक्षयेदिति विधिः मृद्गवकेपि प्रवर्तेत । अस्ति हि तत्राकृतिः व्यक्तिश्च । अतः जातिः पदार्थः । सा च तत्र नास्तीति न तत्र विधिः प्रवर्तते इति वक्तव्यम् । तावता केवलजातिः पदार्थः इति न मन्तव्यम् । आकृतौ व्यक्तौ चागृह्यमाणायां शुद्धाया जातेः ग्रहीतुमशक्यत्वात् ।

तस्माज्जात्याकृतिविशिष्टव्यक्तौ गोपदस्य शक्तिः । विशिष्टमेव पदार्थः । एकैकपरित्यागेनार्थानवबोधात् त्रिष्वेका शक्तिः । रूपादीनां गुणविशेषाणामाश्रयः द्रव्यं व्यक्तिः व्यज्यते यतः । यया अवयवसंस्थानापरपर्यायया गोत्वादिजातिर्ज्ञायते, सा आकृतिः अवयवसंनिवेशरूपा । या अनेकेषु गौरिति समानां बुद्धिं प्रसूते सा अनुवृत्तिप्रत्ययहेतुः जातिरित्युच्यते ।

संशयस्य प्रमाणानां विचारस्तद्व्यवस्थितिः ।
शब्दस्य तत्त्वं प्रामाण्यं पदार्थश्चेह कीर्तिताः॥ (न्या. वा)

इति द्वितीयाह्निकम्

द्वितीयाध्यायः समाप्तः ।

## तृतीयाध्यायस्य प्रथमाह्निकम्

### (१) त्रिभिः सूत्रैः इन्द्रियव्यतिरेकात्मप्रकरणम्

पूर्वस्मिन्नध्याये प्रमाणानि परीक्षितानि। अथेदानीं प्रमेयाणि परिक्षणीयानि भवन्ति। आत्मादेः प्रमेयषट्कस्य परीक्षा तृतीयाध्यायार्थः। आत्मादिप्रमेयचतुष्क-परीक्षा प्रथमाह्निकार्थः। ज्ञानकरणत्वेन सिद्धानां चक्षुरादीनामिन्द्रियाणामेव चेतनत्व-मस्त्विति शङ्का न कार्या। योऽहमद्राक्षं चक्षुषा स एवाहं स्पर्शनेनापि स्पृशामीति अनु-भवामः। चक्षुरादेरिन्द्रियस्य चेतनत्वे चेदं प्रतिसन्धानं न घटते। अत इन्द्रियव्य-तिरिक्त आत्मा। न चासति घ्राणे गन्धो न गृह्यते इति घ्राणं गन्धं जिघ्रति, चक्षु-रूपं पश्यति इति इन्द्रियमेव चेतनमस्त्विति शङ्क्यम्। यतो व्यवस्थितविषयाणीन्द्रि-याणि, ततः तेभ्योऽन्यः चेतनः सर्वज्ञः सर्वविषयग्राही विषयव्यवस्थामतिक्रान्तः आत्मा अनुमीयते।

### (२) त्रिभिः सूत्रैः शरीरव्यतिरेकात्मप्रकरणम्

गौरोऽहं जानामीति प्रतीतेः शरीरमेवात्मास्त्विति न मन्तव्यम्। प्राणिभूतं शरीरं दहतः प्राणिहिंसाकृतं पापं जायते इति प्रमाणसिद्धम्। तस्याभावः स्यात्, तत्फलेन कर्तुरसंबन्धात् अकर्तुश्च संबन्धात्। शरीरदाहकर्तुः शरीरस्य नष्टत्वात् हिं-साकर्तुः न हिंसाफलसंबन्धः। यश्च फलेन संबध्यते न तेन हिंसा कृतेति कृतहाना-कृताभ्यागमौ प्रसज्येयाताम्। न च नित्येनात्मना सात्मकं शरीरमित्युक्तावपि शरीर-दाहे दग्धुः पातकं न भवेत्। नित्यस्यात्मनो वधासंभवात्। ततश्च शरीरात्मवादे हिंसा संभवति, परन्तु सा निष्फला, शरीरातिरिक्तात्मवादे तु हिंसैवानुपपन्नेति वाच्यम्। न नित्यस्य सत्त्वस्य वधं हिंसां ब्रूमः। अपि तु नित्यस्यात्मनः सुखदुःखाद्युपलब्ध्याश्रयस्य शरीरस्य उपलब्धिसाधनेन्द्रियाणाञ्चोपघातं पीडाम्। एवञ्च न हिंसा अनुपप-न्नेति ज्ञेयम्।

### (३) अष्टभिः सूत्रैः प्रासङ्गिकं चक्षुरद्वैतप्रकरणम्

सव्येन चक्षुषा दृष्टस्येतरेण चक्षुषा प्रत्यभिज्ञानमनुभूयते। इन्द्रियचैतन्ये तु तन्नोपपद्यते। यतो नान्यदृष्टमन्यः प्रत्यभिजानाति। तस्मादिन्द्रियव्यतिरिक्तश्चेतन इति केचिद्वर्णयन्ति। तन्न समञ्जसम्। यतः चक्षुरेकमेवेन्द्रियं मध्ये नासास्थिव्यवहितम्।

मध्यस्थसेतुना तटकास्येव मध्यस्थास्थिव्यवहितगोलकान्तरावच्छिन्नतया चक्षुषि द्वित्वभ्रमः इति चक्षुरद्वैतमेव तत्त्वमिति ।

न च सव्ये चक्षुषि उपहते उद्धृते वा द्वितीयमवतिष्ठते । चक्षुष एकत्वे, तस्मिन्नुद्धृते आन्ध्यमेव स्यादिति चक्षुषः द्वैतमेवेति वाच्यम् । यतः अवयवस्य शाखादेर्नाशेऽपि अवयविनो वृक्षादेः प्रत्यभिज्ञानात् नावयवनाशे सर्वत्रावयविनाशः । एवञ्चैकस्य नाशेऽपि नान्ध्यमिति एकदेशिनो वदन्ति । तन्न । अवयवस्य समवायिकारणस्य नाशे कार्यस्यावयविनो वृक्षादेः स्थितेरसंभाव्यमानत्वात् । परन्तु एकस्याः शाखाया नाशे अवस्थितावयवैः खण्डवृक्षोत्पत्तेरिव सव्यस्य नाशेऽपि गोलकान्तरावच्छिन्नावयवैः खण्डचक्षुषः उत्पत्तिसंभवान्नान्ध्यम् । ततश्च लाघवाच्चक्षुषः अद्वैतमेवेति ।

कस्मिंश्चिदम्लफले चक्षुषा दृष्टे, तदीयरसस्मरणात् दन्तोदकसंप्लवरूपः रसनेन्द्रियविकारो भवति । इन्द्रियान्तरविकाराच्च इन्द्रियव्यतिरिक्त आत्मा ।

(४) त्रिभिः सूत्रैः मनोव्यतिरेकप्रकरणम्

आत्मसाधकतयाभिमतानि दर्शनस्पर्शनाभ्यामेकार्थग्रहणमित्यादीनि प्रमाणानि नातिरिक्तमात्मानं साधयन्ति । नित्यस्य सर्वविषयस्य मनस एव प्रतिसन्धानाद्युपपत्तेरिति मन एव चेतनमिति चेन्न । ज्ञातुः ज्ञानसाधनानि चक्षुरादीन्युपपद्यन्ते; एवं मन्तुरपि सर्वविषयमतिसाधनं किञ्चिदभ्युपगमनीयम् । तेन साधनेन मन्ता मन्यते । इत्थञ्च ज्ञातरि आत्मेति संज्ञा नेष्यते, अभ्युपगते मतिसाधने मनः इति संज्ञा न स्वीक्रियते इति संज्ञायां विवादः, नार्थे । मतिसाधनेन (मनसा) मन्तुरन्यस्य (आत्मनः) स्वीकारात् । ज्ञातुः रूपादिग्रहणसाधनानि सन्ति, सर्वविषयं मतिसाधनं तु नास्तीत्यत्र प्रमाणं नास्ति । रूपादिप्रत्यक्षे चक्षुरादीव सुखादिप्रत्यक्षे करणमेव मनः इति तदतिरिक्त आत्मा सिद्ध्यति ।

(५) नवभिः सूत्रैरात्मनो नित्यताप्रकरणम्

देहेन्द्रियमनोव्यतिरिक्तः आत्मा नित्यः । जातमात्रः कुमारः हर्षशोकभयादीनि प्रतिपद्यते । तानि च बालकस्य मुखविकासादिना अनुमीयन्ते । हर्षादयश्च स्मृत्यनुबन्धाज्जायन्ते । स्मृत्यनुबन्धश्च पूर्वाभ्यासमन्तरेण न भवति । पूर्वाभ्यासश्च जातमात्रस्य पूर्वजन्मनि सत्येव घटते इति, शरीरग्रहणात्प्रागपि आत्मनः

सिद्धौ पूर्वजन्मन्यपि प्राथमिकहर्षादिहेतुस्मृत्यनुबन्धकारणाभ्यासाय तत्पूर्वजन्मनि सत्त्वस्यावश्यकत्वेन तस्यानादिता सिद्ध्यति। न च पद्मादिषु अनित्येषु प्रबोधः संमीलनञ्च विकारो यथा भवति तथा अनित्यस्यात्मनः हर्षादिप्राप्तिर्विकारः स्यादिति वाच्यम्। भौतिकानां पद्मादीनां प्रबोधसंमीलनविकाराः न निर्निमित्तकाः, किन्तु उष्णाद्यन्वयव्यतिरेकानुविधानात् उष्णादिनिमित्तकाः। तथा बालकस्य मुखविकासादिहेतुहर्षादयः सनिमित्ता एव। निमित्तञ्च पूर्वाभ्यस्तस्मृत्यनुबन्धादन्यन्नास्तीति पूर्वजन्मसिद्धिः। अपिच, जातमात्रो वत्सः स्तन्यपाने प्रवर्तते। प्रवृत्त्या च तस्य स्तन्याभिलाषोऽनुमीयते। स चाहाराभ्यासं विना न घटते। पूर्वशरीरमन्तरेण च नास्याहाराभ्यासो युज्यते। तस्मादितः पूर्वमपि अस्य शरीरमासीत्। तत्रानेनाहारोऽभ्यस्त इति पूर्वमप्यात्मनोऽवस्थितिरेव। न च यथा अयः विनैवाभ्यासमयस्कान्तमुपसर्पति, तथा आहाराभ्यासमन्तरेण बालः स्तन्यमभिलषति इति वाच्यम्। तथापि बालः स्तन्यपाने एव प्रवर्तते, नान्यत्रेति नियमस्य विनाभ्यासहेतुतामनुपपत्तेः।

किञ्च वीतरागो न जायते। सराग एव जायते। रागश्चेष्टसाधनताज्ञानप्रभवः। इष्टसाधनताज्ञानञ्च जातमात्रस्य नानुभवरूपं संभवतीति पूर्वानुभूतेष्टसाधनतास्मरणात्मकमेव स्वीकरणीयमिति पूर्वजन्म सिद्धं भवति।

न च घटादिः यथा स्वत एव रूपादिमान् भवति, तथात्मापि स्वत एव सरागो जायत इति वाच्यम्। विषयसेविनां प्राणिनां संकल्पेनैव रागो जायमानो दृष्टः। संकल्पश्च पूर्वानुभूतविषयचिन्तनजन्यः इति जातमात्रस्यापि बालकस्य पूर्वानुभूतार्थचिन्तनजनित एव रागः इति निश्चिनुमः। तथाच पूर्वपूर्वजन्मसिद्धौ आत्मनः अनादितायां सिद्धायाम् अनादेर्भावस्य नाशासंभवात् त्रैकालिकत्वलक्षणं नित्यत्वं सिद्धम्।

(६) पञ्चभिः सूत्रैः शरीरपरीक्षाप्रकरणम्

आत्मानन्तरं शरीरं परीक्ष्यते। मानुषं शरीरं त्रैभौतिकं, पृथिव्यप्तेजोगुणानां गन्धस्नेहोष्णस्पर्शानामुपलम्भादिति केचित् मन्यन्ते। अन्ये तु पूर्वोक्तगुणैः सह प्राणवायुव्यापारविशेषयोः निश्वासोच्छ्वासयोः दर्शनात् चातुर्भौतिकमिति वदन्ति। परे तु पृथिवीगुणस्य गन्धस्य, जलविशेषस्य क्लेदस्य, जाठरानलैः भुक्तान्नपाकस्य, निश्वासादेः, छिद्रस्य च दर्शनात् शरीरं पाञ्चभौतिकमिति संगिरन्ते। परन्तु आनाश गन्धनीलरूपकठिनत्वादीनामुपलम्भात् पार्थिवमेव मानुषादिशरीरम्। पृथिवीत्वजलत्वादिनानाजातीनां

शरीरे स्वीकारे जातिसंकरः प्रसज्येत । जलादिपरमाणुसंयोगस्तु न निषिध्यते । पृथिव्या उपादानं पृथिव्येवेति तस्य पार्थिवत्वमेव । किञ्च सूर्यं ते चक्षुर्गच्छतामिति मन्त्रे 'पृथिवीं ते शरीरम्' इति श्रूयते । तच्च प्रकृतौ लयाभिधानम् । अतः शरीरस्य प्रकृतिः पृथिवीति ज्ञायते इति पार्थिवमेव मानुषशरीरमिति सिद्धम् ।

(७) विंशत्या सूत्रैरिन्द्रियपरीक्षाप्रकरणम्

क्रमप्राप्तानीन्द्रियाणि परीक्ष्यन्ते । इन्द्रियाणि अहङ्कारप्रकृतिकानि, उत भौतिकानीति, सांख्यनैयायिकयोर्विप्रतिपत्त्या संशयः । यदापीन्द्रियाणि भौतिकानि, तदापि यदुपलभ्यते कृष्णसाराभिधानं गोलकं तदेवेन्द्रियम् ? आहो तदधिष्ठानकं तैजसमिति संशयः सौगतनैयायिकयोर्विप्रतिपत्त्या जायते ।

चक्षुषा महत्तमं न्यग्रोधपर्वतादिकमुपलभ्यते । अणु च न्यग्रोधधानादिकम् । यदि भौतिकं गोलकमेवेन्द्रियं स्यात्, तदा महतो ग्रहणं न स्यात् । भौतिकं हि यावत्तावदेव व्याप्नुयान्नाधिकम् । तस्मान्महद्ग्रहणात्, अभौतिकमाहङ्कारिकं विभु इन्द्रियमभ्युपेयम् । तच्च सर्वव्यापीति सांख्या मन्यन्ते ।

तन्न समञ्जसम् । इन्द्रियस्य भौतिकत्वेऽपि अविभुत्वेऽपि महदणुग्रहणं संभवति । प्रदीपरश्मेरर्थेन घटादिना संनिकर्षादिव, नयनरश्मेरर्थेन संनिकर्षान्महत उपलम्भो जायते । कुड्यादिभिरावृतमर्थं प्रदीपरश्मिरिव चाक्षुषो रश्मिरपि न प्रकाशयति । अतः रश्म्यर्थसंनिकर्षः हेतुर्गम्यते । इन्द्रियस्याहङ्कारिकत्वे विभुत्वेन पश्चाद्भागवर्तिनोऽप्युपलम्भः स्यात् ।

न च गोलकातिरिक्तं तैजसं चक्षुर्नास्ति अनुपलम्भादिति वाच्यम् । अध्यक्षागोचरस्य प्रत्यक्षाभावः नाभावं साधयति । सत्यावरणे विषयानुपलम्भात्त्वनुमीयते चक्षुः । महत् उद्भूतरूपवच्च द्रव्यपलभ्यते । रूपञ्चोद्भूतमुपलभ्यते । चाक्षुषं रूपमनुद्भूतं नाध्यक्षगम्यम् । उपलब्धिहेतौ सत्यपि मध्यन्दिने आदित्यप्रकाशेनाभिभूतः उल्काप्रकाशो नोपलभ्यते । तथा सत्यपि उपलब्धिकारणे नयनरश्मेः अनुद्भूतरूपवत्त्वान्नोपलम्भः जायते । न च लोष्टस्यापि रश्मिरस्ति सूर्यप्रकाशेनाभिभूतत्वान्नोपलभ्यते इति किं न स्यादिति वाच्यम् । तर्हि नक्तं लोष्टादौ रश्मिरुपलभ्येत अभिभावकाभावात् । यदुपलब्धौ बाह्यप्रकाशमनुग्राहकमपेक्षते, तस्यानुद्भूतत्त्वादेवानुपलब्धिः न त्वभिभवात् । चक्षुश्च विषयोपलब्धौ बाह्यप्रकाशमपेक्षते । तस्मादनुद्भूतत्वादेव

नोपलभ्यते। किञ्च रात्रौ नक्तञ्चराणां वृषादीनां गोलके रश्मिर्दृश्यते। तद्दृष्टान्तेन अस्मदादिनयनस्यापि रश्मिरस्तीत्यनुमीयते।

ननु इन्द्रियाणि न प्राप्यकारीणि। इन्द्रियार्थसंनिकर्षो न प्रत्यक्षहेतुः काचाभ्रपटलस्फटिकादिभिर्व्यवहितानामुपलम्भात्। ततः अप्राप्यकारीणि अभौतिकानि आहङ्कारिकाणीन्द्रियाणीति चेन्न। इन्द्रियार्थसंनिकर्षस्याहेतुत्वे, कुड्यादिव्यवहितमप्युपलभ्येत। अतः संनिकर्षमपेक्षत एवोपलम्भः। स्फटिकान्तरितेनापि दाह्येनादित्यरश्मिरिव, स्फटिकादिना अप्रतिबन्धात् स्फटिकाद्यन्तरितेनापि नयनरश्मिः संनिकृष्यते। न च स्फटिककाचाभ्रपटलादिभिरिव कुड्यादिभिरप्रतीघातः स्यात्, कुड्यादिभिरिव स्फटिकादिभिरपि वा प्रतीघातः स्यादिति वाच्यम्। यथा आदर्शे उदके च स्वच्छे मुखादीनामुपलम्भः, नास्वच्छे कुड्यादौ, तथा स्वच्छैः स्फटिकादिभिरप्रतिघातः नास्वच्छैः कुड्यादिभिः। पदार्थाश्च, 'एवं भवत' इति नियोक्तुम्, 'एवं न भवत' इति निषेद्धुं वा न शक्यन्ते, वस्तुस्वभावस्यापर्यनुयोज्यत्वात्। तस्मात् भौतिकानीन्द्रियाणि अव्यापीनीति सिद्धम्।

(८) दशभिः सूत्रैः इन्द्रियनानात्वप्रकरणम्।

विभिन्नस्थानस्थितानि घटपटादीनि भिन्नानि दृश्यन्ते। नानावयवेषु स्थितः अवयवी एको दृश्यते। उभयथा दर्शनात् विभिन्नस्थानाश्रितमिन्द्रियम् एकमुतानेकमिति संशयः।

किञ्चिदपि इन्द्रियाधिष्ठानं त्वचा अप्राप्तं न भवति। असत्यां च त्वचि विषयग्रहणं न जायते। अतः यया सर्वाणीन्द्रियस्थानानि व्याप्तानि, यस्याञ्च सत्यां विषयग्रहणं सा त्वगेकमेवेन्द्रियमिति पूर्वपक्षः। व्यापिकायाः त्वच एवेन्द्रियत्वे रूपादिभिरर्थैः इन्द्रियसंनिकर्षस्य इन्द्रियमनस्संयोगस्य च सत्त्वात् रूपरसादिविषयकग्रहणानि युगपज्जायेरन्। न च जायन्ते युगपत्। अतः इन्द्रियाणि नानैव।

इन्द्रियग्राह्या अर्थाः रूपरसगन्धस्पर्शशब्दाः पञ्च। तेषाञ्च वैलक्षण्यं चक्षुराद्येकैकेन्द्रियग्राह्यत्वेन निर्वाह्यमिति, इन्द्रियार्थपञ्चत्वादिन्द्रियाणि पञ्च।

न च स्वावान्तरभेदभिन्नानां रूपादीनां बहुत्वादिन्द्रियाणां बहुत्वप्रसङ्गः स्यादिति नेन्द्रियार्थपञ्चत्वादिन्द्रियाणां पञ्चता युक्तेति वाच्यम्। रूपत्वरसत्वादिना रूपरसादीनां

पञ्चानामनुगमेन गन्धत्वाश्रयग्राहकत्वं घ्राणस्य, रूपत्वाश्रयग्राहकत्वं चक्षुषः इति इन्द्रियार्थपञ्चत्वात् पञ्चतैवेन्द्रियाणां न बहुत्वं भवति । न च तर्हि विषयत्वेन एकेन सर्वेषामिन्द्रियार्थानामनुगमसंभवात् विषयग्राहकमिन्द्रियमेकमेव स्यादिति वाच्यम् । यतः चाक्षुषं रासनं घ्राणजं स्पार्शनं श्रावणमिति साक्षात्कारिण्यः पञ्च बुद्धयोऽनुभूयन्ते, तत्तत्करणतया च सिद्धानि इन्द्रियाणि पञ्चैव । एवमधिष्ठानभेदोऽस्ति । सर्वशरीराधिष्ठानं स्पर्शनं, कृष्णताराधिष्ठानं चक्षुः, नासाग्राधिष्ठानं घ्राणमित्यादि । प्रकारभेदोऽपि वर्तते । चक्षुर्विषयदेशं गत्वा गृह्णाति, त्वक् देहावच्छेदेन, श्रोत्रं कर्णावच्छेदेनेति । एवं परिमाणवैलक्षण्यमपि बोध्यम् । एषां समवायिकारणमपि पृथिव्यादिकं भिन्नभिन्नमेव । तस्मादिन्द्रियाणि पञ्चैवेति ।

घ्राणादीनां पृथिव्यादिप्रकृतिकत्वे पृथिवीत्वादौ तत्तद्भूतविशेषगुणगन्धादिग्राहकत्वमेव प्रमाणम् । गोघृतं पार्थिवं कुङ्कुमकेसरगतं गन्धं व्यञ्जयति । घ्राणमपि गन्धं व्यञ्जयति । ततः पार्थिवमिति रीत्या विभावनीयम् ।

(९) द्वादशभिः सूत्रैरर्थपरीक्षाप्रकरणम्

रूपरसगन्धस्पर्शाः पृथिव्याः, रूपरसस्पर्शाः अपां, रूपस्पर्शौ तेजसः, स्पर्शः वायोः, शब्दः आकाशस्य च गुणाः । ननु इन्द्रियं स्वप्रकृतिवृत्त्यशेषविशेषगुणान् गृह्णातीति नियमः । रूपादीनां चतुर्णां पृथिवीगुणत्वे, पार्थिवेन घ्राणेन गन्ध इव रूपादयोपि गुणा गृह्येरन् । तस्मान्नायं गुणविनियोगो युज्यते । अपितु पृथिव्या गन्धः, जलस्य रसः, तेजसो रूपं, वायोः स्पर्शः, आकाशस्य शब्दः इति विनियोगो घटते । तर्हि कथं पृथिव्यादौ रसस्योपलब्धिः ? रसस्य जलगुणत्वादिति न शङ्कनीयम् । भूतसृष्टिसमये एकैकमपि भूतम् अपरेण भूतेन संसृष्टमिति संयुक्तजलस्यैव रसः पृथिव्यामनुभूयते इति चेत् । मैवम् ।

यदि पृथिव्या गन्ध एव गुणः न रूपमपि, एवं जलस्य रस एव न रूपमपीत्युच्यते, तदा प्रत्यक्षसामान्ये रूपस्य हेतुतया, तदभावेन पार्थिवमाप्यञ्चाध्यक्षगम्यं न स्यात् । यदि स्वसंयुक्तभूतान्तरस्य रूपेण पार्थिवाप्ययोः प्रत्यक्षता उपपाद्यते, तदा वायुः प्रत्यक्षः स्यात् । तर्हि पार्थिवेन घ्राणेन रूपरसादयः कुतो न गृह्यन्ते इति चेत् । पृथिव्या गन्धगुण उत्कृष्टः । स च प्रधानम् । प्रकृतिगतं प्रधानगुणमेवेन्द्रियं गृह्णातीति गन्धमात्रस्य ग्राहकं घ्राणं, रसमात्रग्राहकं रसनमिति वेदितव्यम् । घ्राणं पार्थिवमिति

व्यवस्था तु पृथिव्या भूयस्त्वात्। घ्राणस्य बाह्यगन्धग्रहणे स्ववृत्तिगन्धोऽपि सहकारी। घ्राणेन्द्रियगतस्य गन्धस्य ग्राहणे घ्राणस्य सहकारी नास्ति, स्वेन स्वस्य ग्रहणासंभवात्। अतः घ्राणगतः गन्धो नोपलभ्यते घ्राणेन्द्रियेण इति बोध्यम्।

इति प्रथमाह्निकं समाप्तम्

## द्वितीयमाह्निकम्

(१) नवभिः सूत्रैः बुद्धेरनित्यताप्रकरणम्

क्रमप्राप्ता बुद्धिरिदानीं परीक्ष्यते, पञ्चभिः प्रकरणैः बुद्ध्यनुबन्धिनी, ततो द्वाभ्यां प्रकरणाभ्यां मनोऽनुबन्धिनी च परीक्षा भविष्यत्यस्मिन्नाह्निके।

बुद्धिर्नित्या वा अनित्या वेति संशयः, स्पर्शशून्यत्वस्य नित्याकाशानित्यकर्मोभय-साधारणस्य बुद्धौ सत्त्वात्।

तत्र सांख्या मन्यन्ते, योऽहं घटमद्राक्षं सोऽहं स्पृशामीति प्रत्यभिज्ञानमेकं वृत्तिमन्तं विषयीकरोति। आत्मा च न वृत्तिमान्, जन्यधर्माश्रयत्वेन कूटस्थत्वहान्यापत्तेः। तस्मात् बुद्धिरेव वृत्तिमती स्थिरा। वृत्तिस्तु बुद्धेः परिणामः। बुद्धेराविर्भावतिरोभावावेव नोत्पादविनाशाविति।

तन्न समीचीनम्। योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्यादिना अहमर्थ आत्मैव प्रतिसन्धाता सिद्ध्यति। अनादिनिधनत्वाच्च स कूटस्थः। बुद्धेः प्रतिसन्धातृत्वस्या-सिद्ध्या न प्रत्यभिज्ञानेन बुद्धेः नित्यता साधयितुं शक्यते।

किञ्च, अवस्थायिन्या बुद्धेः तत्तद्विषयेषु ज्ञानात्मिका वृत्तयः वह्नेः विस्फुलिङ्गा इव बुद्ध्यभिन्ना निश्चरन्तीति तेषामभिमतम्। नैतद्युक्तम्। वृत्तिवृत्तिमतोरभेदे, बुद्धेः वृत्ति-मत्याः सदा स्थित्या तदभिन्नायाः वृत्तेः स्थितिरावश्यकीति युगपत् सर्वपदार्थग्रहण-प्रसङ्गः। वृत्तिज्ञानस्याभावे तदात्मिकायाः बुद्धेरप्यभावः प्रसज्येत।

अस्मन्मते तु अणु मनः पर्यायेणेन्द्रियैः संयुज्यते। यदा येनेन्द्रियेण संयुज्यते तदा तदिन्द्रियं ज्ञानं जनयति। विषयान्तरासक्ते च मनसि ज्ञानं नोदेति। अन्तः-करणस्य व्यापिनश्च क्रमेणेन्द्रियसंबन्धो न संभवति गत्यभावात्। न च जपाकुसुमादि-संनिधानात् एकस्यापि स्फटिकस्य रक्ताद्यभिमानवत् वृत्तिमदभिन्नाया अपि वृत्तेः तत्तद्वि-

षयसंनिकर्षवशान्नानेव प्रतिभासः इति वाच्यम् । ज्ञानात्मिकाया वृत्तेः नानात्वबुद्धौ भ्रमत्वे साधकाभावात् । तथाच यां सांख्या वृत्तिमाचक्षते सैवास्माकं बुद्धिपदव्यपदेश्या । सा चानित्यैवेति सिद्धम् ।

(२) अष्टभिः सूत्रैः क्षणभङ्गप्रकरणम्

पूर्वप्रकरणस्य स्फटिकान्यत्वाभिमानवदिति सूत्रावयवे श्रुते सौगतः प्रत्यवतिष्ठते, स्फटिकमपि प्रतिक्षणमुत्पद्यते निरुध्यते चेति भिन्नभिन्नमेव । सर्वापि व्यक्तिः क्षणिकैवेति । यत्र शरीरादौ अवयवानामुपचयेनापचयेन वा परिमाणभेदः तत्र शरीरादौ अवयवानामुपचयेनापचयेन वा परिमाणभेदः तत्र, एकत्र विरुद्धपरिमाणद्वयसमावेशायोगात् व्यक्तिभेदोऽस्तु । स्फटिकादौ तु उपचयापचयप्रबन्धो न दृश्यते । अतस्तत्रापि अन्यान्या व्यक्तिरुत्पद्यते इति कल्पनमसंगतम् । स्फटिकनाशकारणं वा अपरस्फटिकव्यक्त्युत्पत्तिकारणं वा नोपलभ्यते, येन पूर्वविनाशम् अपरोत्पत्तिञ्चाभ्युपगच्छेम । न च क्षीरनाशकारणस्य दधिकारणस्य चानुपलम्भेऽपि क्षीराद्दध्युत्पादस्थले नाशकारणं दध्युत्पत्तिकारणञ्चाभ्यनुज्ञायते, तथैव भिन्नभिन्नस्फटिकव्यक्त्युत्पत्तिकारणं विनाशकारणञ्चाभ्यनुज्ञेयमिति वाच्यम् । तत्र क्षीरनाशस्य दध्नश्च प्रत्यक्षसिद्धतया तत्कारणं कल्प्यते । स्फटिकादेः प्रतिक्षणं नाशोत्पादयोरप्रत्यक्षतया न तयोः कारणं कल्पयितुं युक्तम् ।

न च क्षीरविनाशान्न दध्युत्पद्यते, परन्तु विद्यमान एव क्षीरे पूर्वगुणस्य मधुररसस्य निवृत्तौ, गुणान्तरस्याम्लरसस्य प्रादुर्भावः । अत एव क्षीरपरिणामः दधीति सांख्योक्तं युक्तमिति वाच्यम् । मृदवयवानां व्यूहान्तरात् द्रव्यान्तरे घटादावुत्पन्ने पूर्वं मृत्पिण्डद्रव्यं मृदवयवविभागेभ्यो निवर्तते, तथा व्यूहान्तरात् द्रव्यान्तरे दध्नि उत्पद्यमाने गृह्यमाणे, पूर्वं क्षीरद्रव्यम् अवयवविभागेभ्यो निवृत्तमित्यनुमीयते । मूर्तयोः समानदेशताविरोधात् । किञ्च क्षीरदधिदृष्टान्तेन विनाशोत्पादावकारणकाविति वक्तुं न युक्तम्, घटादौ तयोः सकारणकत्वदर्शनेन व्यभिचारात् । तस्मान्न पदार्थाः प्रतिक्षणमुत्पद्यन्ते निबध्यन्ते चेति सिद्धम् ।

(३) चतुर्विंशत्या सूत्रैः बुद्धेरात्मगुणत्वप्रकरणम्

बुद्धिरात्मनो गुणः नेन्द्रियस्य न वार्थस्य । तथात्वे इन्द्रियस्यार्थस्य च बोद्धृत्वापत्त्या, चक्षुषि घटे च नष्टे, घटमहमद्राक्षमिति स्मृतिरनुभूयमाना न घटेत । बोद्धुः इन्द्रियस्य अर्थस्य च नाशात् । न चान्यदृष्टमन्यः स्मरति ।

न चेयं बुद्धिः नित्यस्य मनसो गुणः स्वीक्रियतां, मनसो नाशाभावेन निरुक्ताक्षेपाप्रसरादिति वाच्यम् । युगपत् ज्ञानानुत्पत्त्या कल्प्यमानं मनः ज्ञातुर्ज्ञानसाधनतयैव कल्प्यते इति धर्मिग्राहकमानसिद्धकरणताकस्य मनसः ज्ञातृता न संभवति । न च ज्ञानस्यात्मविशेषगुणत्वे युगपत् ज्ञानानामुत्पत्तिः स्यात् , विभोरात्मनः सर्वेन्द्रियैः संयोगादिति वाच्यम् । यतः आत्ममनस्संयोगसत्त्वेऽपि युगपत् नानेन्द्रियैः मनसः संयोगाभावात न ज्ञानानि युगपदुत्पद्यन्ते । न चात्माश्रिताया बुद्धेर्नाशो न संभवति, तत्कारणस्याश्रयनाशस्य आत्मनित्यत्वेनासंभवात् । तथाच नित्यत्वमेव बुद्धेरिति वाच्यम् । घटादिबुद्धेरुत्पादः निरोधश्चानुभवसिद्धः । ततः तत्कारणं कल्पनीयम् । आत्ममनस्संयोगो बुद्धिकारणं, स्वानन्तरोत्पन्नबुद्ध्यादिकञ्च नाशकम् , शब्दसन्तानप्रविष्टप्रथमशब्दस्य द्वितीयशब्द इव । स्मृतिर्हि नेन्द्रियमनस्संनिकर्षमपेक्षते । तत्र स्वोत्पत्तावपेक्ष्यमाणानामात्ममनस्संयोगसंस्काराणां यौगपद्यं संभवत्येवेति युगपत् स्मरणानि जायेरन्निति पूर्वपक्षः ।

अत्र कश्चिदाह—ज्ञानाधीनसंस्कारः यदवच्छेदेन, तदवच्छेदेन मनस्संयोगः स्मृतिकारणम् । तादृशसन्निकर्षश्च क्रमिक इति न स्मरणानां यौगपद्यमिति । तन्न । अन्तश्शरीर एव मनस्संयोगो ज्ञानजनक इति शरीरातिरिक्तभागावच्छेदेनात्ममनोयोगस्याहेतुत्वात् शरीरावच्छिन्नस्यात्ममनोयोगस्य हेतुत्वे च पूर्वोक्तदोषस्य दुर्वारत्वात् । न च शरीरावच्छिन्नात्ममनोयोगस्य कारणत्वे न मानमिति वाच्यम् । कश्चिदर्थं चिरादालोचयन् शरीरं धारयति । स्मरणाय मनसः बहिर्गमने शरीरावच्छिन्नात्ममनोयोगाभावेन प्रथमस्याभावाद्धरणं न स्यात् । न च मनः शीघ्रगामि, स्मरणाय बहिर्गतमपि द्रुतमेव शरीरे परावर्तते इति स्मरतः शरीरधारणमुपपद्यते इति वाच्यम् । स्मरणे कालनियमस्याभावेन प्रणिधानेन दीर्घकालं स्मरणस्थले शीघ्रं मनसः परावर्तनस्यासंभवात् ।

यत्तु बहिःप्रदेशविशेषे मनस्संयोगो हि स्मृत्यर्थमात्मप्रेरणेन न संभवति । स्मर्तव्यार्थज्ञानपूर्वकं हि प्रेरणं वक्तव्यम् । तथाच प्रागेव स्मरणमिति स्यात् । नाप्यकस्माद्भवितुमर्हति, कुत्रापि कार्ये आकस्मिकताया अनभ्युपगमात् । तथाच बहिःप्रदेशविशेषे मनःसंयोग एव न संभवतीति ।

तन्न । नृत्यादिकं पश्यतः कण्टकादिना पादव्यथनेन मनस्संयोग इव अदृष्ट-विशेषाधीनकर्मवशात् बाह्यप्रदेशविशेषे मनस्संयोगो भवितुमर्हति ।

एवञ्च स्मरणकारणानां यौगपद्याद्युगपत् स्मरणानि स्युरिति पूर्वपक्षः पर्यवसितः।

सुस्मूर्षापरपर्यायं प्रणिधानं लिङ्गज्ञानमित्यादिकमुद्बोधकमनेकप्रकारं वर्तते । तेषां क्रमात् स्मरणानां क्रमिकता । कतिपयपदार्थविषयकसंस्कारोद्बोधकसमवधाने तावदर्थविषयं स्मरणं जायते इति समाधिः ॥

केचन दार्शनिकाः—ज्ञानं पुरुषधर्मः, इच्छाद्वेषप्रयत्नसुखदःखादयः अन्तःकरणधर्मा इति वदन्ति । तन्न समीचीनम् । यतः प्रवृत्तिरिच्छाधीना । निवृत्तिश्च द्वेषनिबन्धना । इच्छाद्वेषयोश्च ज्ञानं सामानाधिकरण्येन कारणम् । ज्ञानेच्छाप्रवृत्त्यादीनां सामानाधिकरण्यञ्चानुभाविकमिति ज्ञस्य चेतनस्य इच्छाद्वेषप्रयत्नसुखदुःखादयो धर्माः नाचेतनस्य । यस्य प्रवृत्तिनिवृत्ती तस्येच्छाद्वेषौ तस्यैव च ज्ञानमिति यदि, तदा पार्थिवादिशरीरेषु प्रवृत्तिनिवृत्तिदर्शनात् तत्रैव इच्छाद्वेषज्ञानानि वर्तेरन्निति भूतचैतनिकशङ्का न समीचीना । यतः परश्वादौ प्रवृत्तिनिवृत्त्योर्दर्शनेऽपि ज्ञानादिकं न कोऽप्यभ्युपैति । अतः ज्ञानेच्छादीनामात्मधर्माणां समवायेन हेतुहेतुमद्भावः । शरीरक्रियायान्तु अवच्छेदकतासंबन्धेन हेतुता । शरीरचेष्टैव परश्वादिक्रियां जनयतीति तत्त्वम् । तस्मात् पूर्वोक्तयुक्तेः भूतेन्द्रियमनसां धारणप्रेरणादिकासु क्रियासु पारतन्त्र्यात् अकृताभ्यागमस्यायुक्तत्वाच्च भूतेन्द्रियमनसां चैतन्ये निरस्ते, परिशेषात्, दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्यादियुक्तिभिरतिरिक्तः बुद्धिगुणकः आत्मा चेतनं सिध्यति ।

आत्मन एव ज्ञानाश्रयस्वभावत्वात् ज्ञानस्वभावं स्मरणमात्मनो धर्मः । स्मरणकारणानि उद्बोधकानि तु (१) प्रणिधानं (२) निबन्धः (३) अभ्यासः (४) लिङ्गं (५) लक्षणं (६) सादृश्यं (७) परिग्रहः (८) आश्रयः (९) आश्रितः (१०) संबन्धः (११) आनन्तर्यं (१२) वियोगः (१३) एककार्यं (१४) विरोधः (१५) अतिशयः (१६) प्राप्तिः (१७) व्यवधानं (१८) सुखम् (१९) दुःखम् (२०) इच्छा (२१) द्वेषः (२२) भयम् (२३) अर्थित्वम् (२४) क्रिया (२५) रागः (२६) धर्मः (२७) अधर्मः इत्येतानि वेदितव्यानि ।

(४) चतुर्भिः सूत्रैः बुद्धेरुत्पन्नापवर्गित्वप्रकरणम्

अनित्या बुद्धिः शब्द इवोत्पन्नापवर्गिणीति निरूप्यते । क्रियासन्तानं पश्यामः । तत्र क्रियाप्रत्यक्षधारा वक्तव्या । यदि प्रत्यक्षमवस्थितं भवति तदा क्रियाया नाशोऽपि प्रत्यक्षं स्यात् । न चैतत्संभवति । तस्सदस्थिरार्थविषयिणी बुद्धिः तथाविधैवेति निश्चिनुमः । न चाशुविनाशिविद्युत्संपाताधीनं रूपादिज्ञानमव्यक्तमनुभूयते । तथाच सर्वस्या बुद्धेराशुविनाशित्वे, सर्वापि बुद्धिरव्यक्तैव स्यात् । अतो न बुद्धिरुत्पन्नापवर्गिणीति वाच्यम् । दृष्टान्तस्य विद्युत्संपाताधीनज्ञानस्याशुविनाशिनः स्वीकारेण, सर्वा बुद्धिः आशुविनाशिनी न भवतीति निषेधो न संभवति । सन्तत्या प्रवर्तमानानां प्रदीपार्चिषां ग्रहणान्यनवस्थितानि । ग्राह्याण्यप्यनवस्थितानि । ग्रहणानि च व्यक्तान्येव । तथैव सर्वमपि ग्रहणमाशुविनाशि व्यक्तं भवति ।

(५) दशभिः सूत्रैः बुद्धेः शरीरगुणव्यतिरेकप्रकरणम्

गौरोऽहं जानामीत्यनुभवः शरीरगतत्वेन चेतनामवगाहते । चन्दनादौ द्रव्ये स्वगुणस्य रूपादेः परगुणस्य शैत्यस्य चोपलम्भो दृश्यते । अतः चेतना शरीरगुणो न वेति संशयः । रूपादिः शरीरगुणः यावद्द्रव्यभावी दृष्टः । बुद्धिः न यावच्छरीरभाविनी, मृतशरीरे अभावात् । तस्मान्न सा शरीरगुणः ।

न च शरीरेऽपि पाकादिना अयावद्द्रव्यभावि रूपं संभवतीति शङ्कनीयम् । घटादौ पाकजरूपसंभवेऽपि शरीरे तदसंभवात् । शरीरावयवानां चर्मादीनामग्निसंयोगे सति नाशावश्यंभावात् । अपिच शरीरविशेषगुणाः शरीरव्यापकाः । ज्ञानन्तु न शरीरव्यापकम् । हृदयाद्यवच्छेदेनैवानुभूयते । तस्मान्न ज्ञानं शरीरविशेषगुणः । शरीररूपादेः न शरीरव्यापकत्वं केशनखादिष्वनुपलब्धेरिति न मन्तव्यम् । त्वक्पर्यन्तस्यैव शरीरत्वात् केशनखादेः संयोगिद्रव्यत्वस्वीकारात् । अपिच, शरीरगुणो द्विविधः, अतीन्द्रियः बाह्येन्द्रियग्राह्यश्चेति । आद्यः गुरुत्वादिः । द्वितीयो रूपादिः । ज्ञानादिकन्तु प्रकारद्वयबहिर्भूतम् । ततः, बहिरिन्द्रियावेद्यत्वे सति मनोवेद्यत्वात् बुद्धिः न शरीरगुणः । न चैवं स्पर्शस्याचाक्षुषत्वात् रूपवैधर्म्यात् शरीरगुणत्वं न स्यादिति वाच्यम् । रूपरसादीनां तत्तदिन्द्रियग्राह्यत्वरूपवैलक्षण्येऽपि शरीरगुणत्वावच्छिन्नवैधर्म्यं बहिरिन्द्रियाग्राह्यत्वे सति ग्राह्यत्वं नास्ति । अतः रूपरसस्पर्शादीनां शरीरगुणत्वम् । तच्च चेतनायां वर्तते इति न सा शरीरगुण इति निष्कर्षः ।

(६) चतुर्भिः सूत्रैः मनःपरीक्षाप्रकरणम्

प्रमेयवर्गे बुद्धेरनन्तरं निर्दिष्टं मनः परीक्ष्यते । प्रतिशरीरं मनः किमेकमुतानेकमिति संशये, एकं मन इति निर्णयः ।

मनसः प्रतिशरीरमनेकत्वे तत्तदिन्द्रियमनस्संयोगार्थसंयोगानां सौलभ्यात् ज्ञानानि युगपज्जायेरन् । दीर्घशष्कुलीभक्षणादौ एकदा अनेकेषां ज्ञानानामुत्पादान्नैकं मन इति न शङ्कनीयम् । तत्रापि तत्तदिन्द्रियजानि ज्ञानानि क्रियासन्तानस्य भेदेनानुपलब्धेः चक्रबुद्धिरिव मनस आशुसञ्चाराद्दोषात् क्रमिकेऽपि प्रत्यये यौगपद्योपलब्धिर्बोध्या । ज्ञानायौगपद्यसाधकत्वादेवाणु मनः । तस्मात्प्रतिशरीरमेकमेव मन इति सिद्धम् ।

(७) त्रयोदशभिः सूत्रैः प्रासङ्गिकं शरीरस्यादृष्टनिष्पाद्यत्वप्रकरणम्

मनसः शरीरमधिकरणमिति अधिकरणीभूतशरीरपरीक्षापि मनःपरीक्षैव ज्ञेया । शरीरं तत्तत्पुरुषसमवेतादृष्टेन निमित्तेन जायते । पूर्वजन्मनि कृतयागदानहिंसादेः फलस्य धर्माधर्मादेः सहकारेण तत्फलसुखदुःखसंवेदनाय शरीरमारभ्यते । न च सिकतापाषाणादिकमिव शरीरमपि अदृष्टनिरपेक्षभूतैरारब्धमिति नास्तिकमतं युक्तम् । पाषाणादेरपि अदृष्टसापेक्षभूतैरेवोत्पत्तेरङ्गीकारेण दृष्टान्तस्यासिद्धेः । शरीरस्य पाषाणतुल्यतापि न । पुत्रदर्शनजन्यसुखानुभवजनकादृष्टं पुत्रनिमित्तम् । एवमदृष्टसहकृतः मातापित्रोराहारः शुक्रशोणितद्वारा पुत्रशरीरं निष्पादयति । दम्पत्योः संप्रयोगे गर्भधारणनियमादर्शनाच्चादृष्टस्य सहकारितावश्यं स्वीकरणीया ।

न च शरीरस्य विभुभिस्सर्वैरात्मभिः संयोगात् एकस्मिन्नेव शरीरे सर्वेषामात्मनां सुखदुःखानुभवः प्रसज्येतेति वाच्यम् । यदात्मसमवेतादृष्टेन यच्छरीरमारब्धं, तत्तस्यैवात्मनः भोगायतनं नान्यस्य संयुक्तमात्रस्येति न साधारणत्वापत्तिर्दोषः ।

एतेन शरीरं नादृष्टजन्यं प्रकृतेरारम्भस्वभावत्वादेवोपपत्तेः । प्रतिबन्धकपूर्वशरीरापगमस्तु अदृष्टाधीनः इति साङ्ख्यसंमतः पक्षोपि न समीचीनः । शरीरस्यादृष्टजन्यत्वाभावे, आत्मनः कदाचिन्मानुषशरीरसंबन्धः, कदाचिदन्यादृशः, किञ्चिच्छरीरं सकलावयवं, किञ्चिद्विकलावयमित्यनियमो न घटेत ।

पार्थिवाः परमाणवः सहिताः स्वादृष्टवशाच्छरीरमारभन्ते । मनश्च स्वादृष्टप्रयुक्तं शरीरमाविशति । तच्चादृष्टं स्वभावादेव पुद्गलस्य सुखदुःखे साधयति इत्यार्हता मन्यन्ते ।

तदपि न समञ्जसम् । तत्तदात्मगतादृष्टमनपेक्ष्य तत्तदात्मोपभोगाय परमाणवश्चे-च्छरीरमारभन्ते, तदा तदात्मनि मुक्तेऽपि तद्भोगाय शरीरमारभेरन् । किञ्च मनोगुणस्यादृष्टस्य नित्यत्वात् तत्प्रयुक्ता शरीरारम्भकज्ञानारम्भकसंयोगधारा नोच्छिद्येत । तथाच मरणस्यानुपपत्तिः, शरीरादेरविनाशित्वप्रसङ्गश्च । न च यथा परमाणुश्यामता नित्यापि निवर्तते तथा शरीरमपि निवर्तते । परमाणुनिष्ठं नित्यमदृष्टमपि निवर्तते । अदृष्टाभावाच्चापवर्गे न शरीरमिति शङ्कनीयम् । प्रमाणागोचराणामर्थानां स्वीकारप्रसङ्गात् । तस्मात् तत्तदात्मसमवेतादृष्टनिष्पाद्यमेव शरीरं तत्तदात्मोपभोगक्षममिति सिद्धम् ।

आत्मा शरीरं करणमर्थो बुद्धिर्मनस्तथा ।
यद्यथा वस्तु तत्त्वेन तत्तथेहोपपादितम् ॥ (न्या. वा)

। इति तृतीयाध्यायः समाप्तः ।

## अथ चतुर्थाध्यायस्य प्रथमाह्निकम्

### (१) द्वाभ्यां सूत्राभ्यां प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम्

मनसोऽनन्तरं प्रवृत्तिः परीक्षणीया । धर्माधर्माश्रयशरीरपरीक्षा वृत्ता । सा च प्रवृत्तिपरीक्षा वेदितव्या । प्रवृत्त्यनन्तरा दोष अपि बुद्धिसमानाश्रयत्वादात्मगुणाः । प्रवृत्तिहेतुत्वात् पुनर्भवप्रतिसन्धानहेतुत्वाच्च संसारहेतवः संसारस्यानादित्वात् अनादिना प्रबन्धेन प्रवर्तन्ते । मिथ्याज्ञानं तत्त्वज्ञानान्निवर्तते । तन्निवृत्तौ रागद्वेषप्रबन्धोच्छेदे अपवर्ग इति तत्त्वम् ।

### (२) सप्तभिः सूत्रैः दोषत्रैराश्यप्रकरणम्

प्रवर्तनालक्षणा दोषा इत्यभिहितं प्राक् । तत्र मानेर्ष्यादयोऽपि कुतो नोपसङ्ख्यायन्ते इति चेत् , तेषां त्रिष्वेवान्तर्भावात् । तथाहि, दोषाणां त्रयो राशयः । त्रयः पक्षाः तत्र । रागपक्षः, कामः, मत्सरः, स्पृहा, तृष्णा, लोभः इति । द्वेषपक्षः, क्रोधः, ईर्ष्या, असूया, द्रोहः, अमर्षः, इति । मोहपक्षः, मिथ्याज्ञानं, विचिकित्सा, मानः, प्रमादः इति ।

न चात्र प्रज्ञाशब्दोदितं तत्त्वज्ञानमेकं त्रयाणां विरोधीति एकनाश्यत्वादभेदस्त्रयाणां शङ्कनीयः । यतः परस्परं विभिन्ना रूपरसादयः एकेनाग्निसंयोगेन नाश्यन्ते । अतो व्यभिचारान्न तत्त्वज्ञाननाश्यत्वेनैषामभेदः ।

मूढस्यैव रागद्वेषौ जायेते । अतो मोह एव रागद्वेषयोर्हेतुः । तस्मान्मोहः तेषु त्रिषु पापीयान् भवति । तत्त्वज्ञानेन मोहे निवृत्ते रागद्वेषावपि निवर्तेते ।

न च कार्यकारणयोर्भेदात् दोषनिमित्तं मोहः न दोषः इति मन्तव्यम् । प्रवर्तनालक्षणा दोषाः इत्युक्तदोषसामान्यलक्षणयोगात् मोहोऽपि दोष एव । किञ्च एकजातीययोः द्रव्ययोः गुणयोश्च निमित्तनैमित्तिकभावो दृष्ट इति, रागद्वेषनिमित्तस्य मोहस्य दोषजातीयत्वे न कोपि विरोधः ।

(३) चतुर्भिः सूत्रैः प्रेत्यभावपरीक्षाप्रकरणम्

प्रेत्यभावः मृत्वा पुनर्जन्म । तच्चात्मनः न शरीरस्य । शरिरस्य नाशानन्तरं पुनस्तदुत्पत्तेरसंभवात् । आत्मा तु पूर्वं शरीरं जहाति प्रैति म्रियते । प्रेत्य च पूर्वशरीरं हित्वा भवति-जायते-शरीरान्तरमुपादत्ते इति तस्यैव प्रेत्यभावः । उत्पत्तिः सजातीयाद्भवति रूपादिगुणयुक्तेभ्यः मृदादिभ्यः तादृशगुणयुक्तस्य कुम्भादेरुत्पत्तेः । इत्थञ्च पृथिव्यादीनामपि तत्सजातीयादेव भूतसमाख्यात् पृथिव्यादितः परमसूक्ष्मादुत्पत्तिर्बोध्या ।

न च व्यक्तात् घटादव्यक्तस्य घटस्योत्पत्तिर्दृष्टेति वाच्यम् । व्यक्तादेव रूपादिगुणयुक्तात् कपालसंज्ञकात् मृद्द्रव्यात् व्यक्तो घट उत्पद्यमानो दृश्यत एवेति सजातीयात्सजातीयोत्पत्तिर्न प्रतिषेद्धुं शक्यते ।

(४) पञ्चभिः सूत्रैः शून्यतोपादानप्रकरणम् ।

केचित्—असतः सदुत्पद्यते । बीजमुपमर्द्य अङ्कुरो जायते । बीजस्योपमर्दः—नाशः यदि नाङ्कुरकारणम् , तदा अनुपमृदितेऽपि बीजे अङ्कुर उत्पद्येत । अतः अभाव एव भावोपादानमिति वदन्ति । तत्र बीजमुपमृद्याङ्कुरः प्रादुर्भवति इति प्रयोग एवासंगतः व्याघातात् । उपमर्दकस्याङ्कुरस्य पूर्वमसत्त्वे उपमर्दकत्वायोगः । सत्त्वे च परतः प्रादुर्भावो न घटते इति । ननु यथा जनिष्यते पुत्रः, जनिष्यमाणं पुत्रमभिनन्दति, अभूत्कुम्भः, भिन्नं कुम्भमनुशोचतीत्यादिप्रयोग इवायमपि प्रयोगः भाक्त इति चेत् । अस्तु प्रयोग औपचारिकः । तथाप्यत्र किं नष्टस्य बीजस्योपादानत्वमभिमतम् ? नाशस्य वा ? नाद्यः, न हि विनष्टाद्बीजादङ्कुर उत्पद्यते । न द्वितीयः, कार्ये अभावान्वयप्रसङ्गात् ।

इदन्तु तत्त्वम् । मूर्तयोः समानदेशताविरोधात् बीजावयवेषु बीजरूपमूर्ताधिकरणेषु अङ्कुरः नोत्पत्तुमर्हतीति बीजावयवाः पूर्वव्यूहं जहति, व्यूहान्तरमापद्यन्ते । व्यूहान्तरादङ्कुर उत्पद्यते इति ।

(५) त्रिभिः सूत्रैः ईश्वरोपादानप्रकरणम्

प्रपञ्चोऽयं ब्रह्मोपादानः। ब्रह्मैव प्रपञ्चरूपेण परिणमते इत्येकं मतम्। ब्रह्मैवानिर्वचनीयानाद्यविद्योपधानवशान्नामप्रपञ्चात्मना विवर्तते इत्यपरं दर्शनम्। एतदुभयमपि ईश्वरः कारणमिति सूत्रेणोच्यते। न च जीवा एव चेतनाः। तत्कर्मनिमित्तश्च नामरूपप्रपञ्चो भविष्यतीति वाच्यम्। पुरुषश्चेत् चेतयेत् नैव निष्फलं कर्मारभेत। निष्फलं विद्वान् प्रवर्तमानः कथं चेतनो नाम ? तस्मात्पुरुषकर्मवैफल्यदर्शनात् ईश्वरः कारणमिति पूर्वपक्षः।

ब्रह्मणः सर्वात्मना, एकदेशेन वा प्रपञ्चरूपेण परिणामस्वीकारे अनित्यता प्रसज्येत। सामान्यतो गृहीते विशेषतश्चागृहीते शुक्तिकादौ तदन्यरूपेण भ्रमो भवति। निरंशे स्वसंवेदनप्रत्यक्षे च ब्रह्मणि न तत्स्वरूपाग्रहः सामान्यग्रहो वा भवति। तस्मादीश्वरो जगदात्मना विवर्तते इत्यसंगतम्। परन्तु ईश्वरः जगतः निमित्तकारणम्। स च पुरुषकर्मसापेक्ष एव जनयति। पुरुषकर्माभावे फलनिष्पत्तेरदर्शनात्। तथाच परमाणूपादानस्य जगतः पुरुषकर्मापेक्षः ईश्वरो निमित्तकारणमिति सिद्धान्तः॥

(६) त्रिभिः सूत्रैराकस्मिकत्वप्रकरणम्

कण्टकस्य तैक्ष्ण्यं पर्वतधातूनां चित्रता ग्राव्णां श्लक्ष्णता इत्यादीनि अनिमित्तानि, तद्वदेव घटादिकमनिमित्तं भावत्वात्। यत्तु अनिमित्ततो भावोत्पत्तिरित्युच्यते। यतश्चोत्पद्यते तन्निमित्तम्। तस्मादनिमित्तस्य निमित्तत्वात् नानिमित्ता भावोत्पत्तिरिति। तन्न। निमित्तमनिमित्तञ्च परस्परविरुद्धम्। न ह्यनिमित्तं निमित्तं भवितुमर्हति। अतो यत्किञ्चिदेतत्।

अयमाकस्मिकत्ववादः सूत्रकारेणोपक्षिप्तः। परन्तु न दूषितः। अत्र भाष्यम् "स खल्वयं वादः अकर्मनिमित्तः शरीरादिसर्गः इत्येतस्मान्न भिद्यते। अभेदात्तत्प्रतिषेधेनैव प्रतिषिद्धो वेदितव्यः"। इति।

(७) चतुर्भिः सूत्रैः सर्वानित्यत्वप्रकरणम्

भौतिकं शरीरादिकमभौतिकञ्च बुद्ध्यादिकमुत्पत्तिविनाशधर्मकं ज्ञायते। तस्मात्सर्वमनित्यमिति कश्चन वादः। स च न समञ्जसः। सर्वस्यानित्यता किं नित्या ? उतानित्या ? यदि नित्या तदा सर्वान्तर्गतानित्यताया नित्यत्वेन सर्वमनित्यं न भवति।

अथानित्या तदा यदा सर्वस्मिन् अनित्यता व्यपगता तदा सर्वं नित्यं स्यात्। न च वह्निः यथा दाह्यमिन्धनं विनाश्य ततः स्वयं नश्यति, तथा अनित्यता सर्वं विनाश्य स्वयमपि नश्यतीति वाच्यम्। अयं वादः नित्यं प्रतिषेधति। नित्यस्य प्रत्याख्यानमशक्यम्। यस्य उत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्येत तदनित्यम्। यस्य तु प्रमाणतो नोपलभ्यते तन्नित्यम्। न हि परमसूक्ष्माणां भूतानाम् आकाशकालदिगात्ममनसां तद्गुणानां केषाञ्चित् सामान्यविशेषसमवायानाञ्च उत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते। तस्मान्नित्यान्येतानीति सिद्धम्।

(८) पञ्चभिः सूत्रैः सर्वनित्यत्वनिराकरणप्रकरणम्

परमाण्वाकाशादीनि भूतानि नित्यानि ; तथा घटादिकं सर्वं नित्यं भूतत्वादित्येकः पक्षः। सोऽप्यसंगतः। घटादीनामुत्पत्तिकारणं विनाशकारणञ्चोपलभ्यते। एवञ्चोत्पत्तिविनाशयोरावश्यकतया सर्वस्य नित्यता व्याहता।

न च परमाणुगतभूतत्वं घटादावप्यस्तीति नित्यता स्यादिति वाच्यम्। उत्पत्तिविनाशप्रतीतेः प्रामाणिकत्वात्। अन्यथा घटादीनां कादाचित्कत्वप्रतीत्यनुपपत्तिः। यद्युत्पत्तिविनाशप्रतीतिर्भ्रमरूपेत्युच्यते, तदा सार्वलौकिकप्रमात्वेन सिद्धस्यापि भ्रमत्वशङ्कायां, प्रमाभ्रमव्यवहारविलोपः प्रसज्येत। तस्मात्सर्वं नित्यमिति वादो न समञ्जसः।

(९) त्रिभिः सूत्रैः सर्वपृथक्त्वनिराकरणम्

न कश्चिदेको भावः। परन्तु सर्वं पृथक् नानात्मकमेव। सर्वो हि समाख्याशब्दः समूहवाची वनसेनादिशब्दवत्। कुम्भादिशब्दोऽपि गन्धरसरूपस्पर्शसमूहे, बुध्नपार्श्वग्रीवादिसमूहे च वर्तते। एवं सर्वत्र। संज्ञाशब्दबोध्यं सर्वमपि नानात्मकमेवेति कश्चित्पक्षः। सोऽप्यसंगतः।

अनेकस्वरूपैः रूपरसादिभिः अवयवैश्च विशिष्टः एको भावः कुम्भः निष्पद्यते। तस्य रूपरसाद्यात्मकत्वं न संभवति, रासनचाक्षुषत्वादिविरुद्धधर्मसमावेशात्। नापि तस्य बुध्नग्रीवाद्यवयवसमूहरूपत्ता, कार्यकारणयोर्भेदात्। यमहमद्राक्षं तमहं स्पृशामीति प्रत्यक्षेण व्यवस्थितः एको घटः न परमाणुसमुदायः, तस्य प्रत्यक्षागोचरत्वात्। अपि च एकभावानङ्गीकारे समूह एव न सिद्ध्यति, नानाव्यक्तिसमुदायस्यैव समूहत्वादिति बोध्यम्।

(१०) चतुर्भिः सूत्रैः सर्वशून्यतानिराकरणप्रकरणम्

सर्वमपि अभावः (असद्रूपं) घटः पटो नेति प्रतीत्या घटादीनां पटाद्यभावत्वस्य सिद्धेरिति सर्वशून्यतावादः । सोऽपि असंगतः । पृथिव्यादीनां हि गन्धादिः सिद्ध्यति । न हि तुच्छस्य गन्धादिः संभवति ; एवं तस्य सत्त्वेन प्रतीतिः न युज्यते । न च जपासापेक्षं स्फटिकारुण्यं अवस्तुसत् । एवं दीर्घं ह्रस्वापेक्षं, ह्रस्वश्च दीर्घसापेक्षमिति सर्वमपि अवस्तुसदिति वाच्यम् । सापेक्षत्वस्यावस्तुत्वव्याप्यताया एवासिद्धत्वात् । घटादेः सापेक्षत्वविरहाच्च । अपिच सापेक्षत्वं यदि सापेक्षम्, तदा तदवस्तुसदिति न तदवस्तुत्वं साधयितुं प्रभवति । यदि निरपेक्षं तदा तदेव वस्तुसदिति सर्वमवस्तु इति वादो नोपपद्यते इति बोध्यम् ।

(११) त्रिभिः सूत्रैः संख्यैकान्तवादप्रकरणम्

सर्वं सदेकमविशेषादित्ययं पक्षः एकत्वमेवैकान्तिकं विषयीकरोतीति संख्यैकान्तवाद इत्युच्यते । एतादृशवादा न संगच्छन्ते । सर्वमेकमिति प्रतिज्ञां कृत्वा, यदि प्रतिज्ञेयव्यतिरिक्तं साधनं ब्रूते, तदा साधनं प्रतिज्ञातार्थः इति द्वैतमापतितमिति सर्वमेकमित्यस्यासिद्धिः । यदि साधनं प्रतिज्ञेयव्यतिरिक्तं नास्ति, तदा साधनाभावात्सुतरामसिद्धिः । न च साधनं प्रतिज्ञातार्थस्यैकदेश इति न तेन द्वैतापत्तिरिति शङ्कनीयम्, सर्वमेकमिति सर्वस्य पक्षीकृतत्वात् पक्षैकदेशस्य च हेतुत्वाभावात् । तस्मात्संख्यैकान्तवादो न समीचीनः ॥

(१२) दशभिः सूत्रैः फलपरीक्षाप्रकरणम्

पाकादिका क्रिया सद्यः फलजनिका, कृष्यादिका तु कालान्तरभाविफलजनिका दृश्यते । अग्निहोत्रादिका क्रिया, किमैहिककीर्त्यादिमात्रफलिका ? उतामुष्मिकफला ? इति संशयः ।

अग्निहोत्रं जुहुयात्स्वर्गकाम इति श्रुतौ अग्निहोत्रस्य स्वर्गः फलं श्रूयते । दुःखासंभिन्नसुखविशेषरूपः स्वर्गः मरणानन्तरकालोपभोग्यः इति नैहिकफला अग्निहोत्रादिका क्रिया । न चाग्निहोत्रे निवृत्ते तत्फलं स्वर्गः कथमुत्पत्तुमर्हति? कार्योत्पत्तेः प्राक्क्षणे कारणसत्त्वस्यावश्यकत्वादिति वाच्यम् । फलार्थी वृक्षमूले जलसेकं करोति । तत्र मूलसेकनाशेऽपि तदधीनावयवोपचयद्वारा फलोत्पत्तिः । तथैव अग्निहोत्रादिनाशेऽपि तज्जन्यधर्म-

रूपादृष्टद्वारा स्वर्गोत्पत्तिरिति न विरोधः । न च सेकादिकं परिकर्म फलञ्चेत्युभयं वृक्षाश्रयम् । अग्निहोत्रादिकं कर्म चेह शरीरे, स्वर्गश्चामुत्रेति आश्रयभेदोऽस्तीति दृष्टान्तो विषम इति वाच्यम् । एतच्छरीरावच्छेदेनाग्निहोत्रजन्यः धर्मः यस्मिन्नात्मनि, तस्मिन्नेवात्मनि स्वर्गिशरीरावच्छेदेन प्रीतिविशेषस्वर्गः जायते इति कार्यकारणयोः सामानाधिकरण्यमक्षतमेव । पुत्रकामो यजेतेत्यादिना विहितकर्मणः फलस्य च सामानाधिकरण्यं नास्तीति न शङ्कनीयम् । यतः तत्रापि पुत्रादिसंबन्धाधीनप्रीतिरेव फलम् । तच्चात्मन्येव जायते । पुत्रादौ फलीभूतप्रीतिहेतुत्वात्फलत्वोपचारः ।

इदन्तु विचार्यते—यन्निष्पद्यते तत् प्राङ् निष्पत्तेः किमसत् ? उत सत् ? अथवा सदसदिति । नाद्यः, असतः शशशृङ्गादेरिव उत्पत्त्ययोगात् । न द्वितीयः, सतः उत्पत्तेरसंभवात् । न तृतीयः, सत्त्वासत्त्वयोर्विरोधेनैकत्रासंभवात् । तत्किमत्र तत्त्वमिति ।

प्रागुत्पत्तेरुत्पत्तिधर्मकमसदिति तत्त्वम् । इदानीं पट उत्पन्नः ; अद्य पटो नष्टः इति प्रतीतेरुत्पादनाशयोरनुभवसिद्धत्वात् । पूर्वं सत्त्वे उत्पत्तेरयोगात् । न च पूर्वमसत एवोत्पत्तिर्यदि स्वीक्रियते तदा असत्त्वाविशेषात् सिकतादावपि तैलमुत्पद्येत । तथाच प्रवृत्तेरनियम इति वाच्यम् । इह तन्तुषु पटो भविष्यतीति बुद्ध्या कुविन्दः प्रवर्तते । न तु पटोऽस्ति इति कृत्वा, तथा सति सिद्धत्वेन ज्ञाते इच्छाया अयोगात् प्रवृत्तेरनुपपत्तेः । सिकतादौ तु तैलं न भविष्यतीति जानात्येवानुभवबलात् । अतः तैलार्थी न सिकतायां प्रवर्तते । तस्मात्प्रागुत्पत्तेरसदेव कार्यमिति तत्त्वम् ।

(१३) चतुर्भिः सूत्रैः दुःखपरीक्षाप्रकरणम्

बाधनालक्षणं दुःखमित्यभिहितम् । जायते इति जन्म । शरीरेन्द्रियबुद्ध्यादिकं हीनमध्यमोत्कृष्टभेदभिन्नाभिः विविधाभिः बाधनाभिः योगात् दुःखमिति भावनं कर्तव्यम् । ततश्च वैराग्यसिद्ध्या अपवर्गः प्राप्तुं शक्यते । आत्मशरीरेन्द्रियेति प्रमेयविभाजकसूत्रे सुखस्यानुपादानात् सुखमेव नास्तीति न भ्रमितव्यम् । दुःखानुभवान्तरालसमये सुखस्यानुभूयमानतया प्रत्यक्षासिद्धस्यापलपितुमशक्यत्वात् । परन्तु सुखवाञ्छया सुखसाधनादौ प्रवर्तमानस्य विषयार्जनादौ विविधबाधनानुषङ्गात् तत्रापि दुःखभावनमुपदिश्यते वैराग्याय । सुखाङ्गभूतं दुःखम् । अतः न दुःखमनासाद्य सुखं शक्यं प्राप्तुमिति तादर्थ्यात् सुखमेवेदमिति सुखसंज्ञोपहतप्रज्ञः संसारं नातिवर्तते । तदस्याः सुखसंज्ञायाः प्रतिपक्षः दुःखसंज्ञाभावनमुपदिश्यते— दुःखानुषङ्गात् दुःखं जन्मेति ।

(१४) दशभिः सूत्रैः अपवर्गपरीक्षाप्रकरणम्

चरमप्रमेयमपवर्गं इदानीं परीक्ष्यते । अपवर्ग एव न संभवति । अपवर्गप्रापकानुष्ठानकालस्यैवासंभवात् । ' जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ' ' यावज्जीवमग्निहोत्रं जुहोति ' इत्यादिश्रुत्या यावज्जीवं पुरुषस्य ऋणानुबन्धो वर्तते । रागद्वेषादिक्लेशानुबन्धोऽप्यस्ति । यावज्जीवं वाग्बुद्धिशरीरैः कर्माण्यारभमाण एव पुरुषो दृश्यते इति प्रवृत्त्यनुबन्धश्चास्ति । ततः ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः इति पूर्वपक्षः ।

यत्र एकः प्रत्यादेयं ददाति, अन्यश्च गृह्णाति, तत्र ऋणशब्दः मुख्यार्थकः । जाययानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते इत्यत्र तु ऋणशब्दः अग्निर्माणवक इत्यत्र अग्निशब्द इव सदृशार्थको गौणः । तेन ऋणापाकरणानपाकरणाभ्यामिव अग्निहोत्रकरणाकरणाभ्यां स्तुतिनिन्दे उपपद्येते । जरामर्यमग्निहोत्रमिति यावज्जीवमग्निहोत्रं जुहुयादित्यादिकं कामिविषयं बोध्यम् । यतः आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेदिति श्रुतः विरक्तानां पुरुषाणामात्मन्यग्निसमारोपणं, पारिव्राज्यञ्च विधत्ते । अतः ऋणानुबन्धादनुष्ठानकालाभावः इति दोषो नास्ति ।

स्वप्नादर्शने सुषुप्तस्य रागानुबन्धः सुखदुःखानुबन्धश्च विच्छिद्यते । एवं ब्रह्मविदो मुक्तस्यापवर्गे क्लेशविच्छेदो भवति ।

नापि सर्वदा प्रवृत्तेरनुबन्धः । यतः रागादिरहितस्य प्रवृत्तिः धर्माधर्मौ न जनयति । न च क्लेशसन्ततेः स्वाभाविकत्वान्नाशो न संभवतीति वाच्यम् । अनादेः प्रागभावस्य , अनादेः अणुश्यामतादेश्च निवृत्तिरिव क्लेशनिवृत्तिरपि संभाव्यते । वस्तुतस्तु रागादयो मिथ्याज्ञानेनैव जायन्ते । तत्त्वज्ञानेन मिथ्याज्ञाने निवृत्ते रागादीनामनुत्पत्तिः सम्यक् घटते इति अपवर्ग उपपद्यते ।

इति प्रथमाह्निकं समाप्तम्

चतुर्थाध्यायस्य द्वितीयमाह्निकम्

(१) त्रिभिः सूत्रैः तत्त्वज्ञानोत्पत्तिप्रकरणम्

शरीरादावहमित्यभिमानः मिथ्याज्ञानमुच्यते । तच्च दोषनिमित्तानां शरीरादीनां तत्त्वस्यानात्मत्वस्य ज्ञानान्निवर्तते । शरीरादावात्मत्वेन मुह्यन् रञ्जनीयेषु रज्यति

कोपनीयेषु कुप्यति । [समीचिनमिदमिति] भाविता रूपादयः रागादेर्दोषस्य निमित्तम् । अतः रूपादयः प्रथमं हेयतया भावनीयाः । ततः शरीरात्मविवेकः । सौन्दर्यमनुभवतः सर्वस्यापि रागो दुर्वार इति तरुण्यादिशरीरे अवयविनि सपरिष्कार-बुद्धिः (रागनिमित्तं) हेया । दोषदर्शनमशुभसंज्ञा भावनीया ।

चर्मनिर्मितपेशीयं मांसासृक्पूयपूरिता ।
अस्यां रज्यति यो मूढः पिशाचः कस्ततोऽधिकः ॥

इति ।

(२) चतुर्दशभिः सूत्रैः प्रासङ्गिकमवयवायविप्रकरणम्

अवयविनः प्रत्यक्षसिद्धत्वेऽपि तत्र प्रामाण्यसन्देहात् अवयविनि सन्देहो जायते ।

तत्र द्वितीयाध्यायोक्तहेतुभ्यः अवयवी सिद्धः । स चावयवी एकैकस्मिन्नवयवे कात्स्न्र्येन वा वर्तते? उतैकदेशेन ? नाद्यः, अवयवभेदेनावयविनः नानात्वापत्तेः । द्विती-येऽपि, यस्मिन्नवयवे वर्तते तेनैवावयवेन किमस्ति ? उतान्येनावयवेन ? यदि तेनैव, तदा स्वस्मिन् स्ववृत्तिर्विरुध्यते । अवयव्याधारीभूतावयवातिरिक्तश्चावयवो नास्ति । यद्यस्ति, तत्रापि कथं वर्तते कात्स्न्र्येन ? एकदेशेन वा? इति पूर्वोक्तविकल्पावकाशो भवति । एव-ञ्चावयवेषु वृत्तेर्दुर्निरूपतया नावयवी नाम कश्चिदस्ति । यद्यवृत्तिरेवावयवी स्वीक्रियते , तदा अवृत्तेर्नित्यतया अवयवी नित्यः स्यात् । न चावयवी नित्य इष्यते । अवयवा एवावयवी इत्यपि न , तन्तवः पटः इति कस्यापि बुद्धेरनुदयात् । तस्मादवयवी नास्तीति पूर्वपक्षः ।

अवयविनः अवयवेषु वृत्तिविकल्पो न घटते । अनेकस्य अशेषता हि कात्स्न्र्यम् । समुदायिनां किञ्चित्त्वमेकदेशत्वम् । न चैकस्य एतदुभयं संभवति । अव-यवी चैकः । अतस्तस्मिन्नयं कृत्स्नैकदेशविकल्पो युज्यते । किञ्च घटत्वं घटे कात्स्न्र्येन वा एकदेशेन वा वर्तते इति वक्तुं शक्यम् । तस्मात् वृत्तेः कात्स्न्र्यैकदेशान्यतरनियमः घटत्वे व्यभिचरितः । तस्मादेकं घटत्वं स्वरूपेण घट इव अवयव्यप्येकः स्वरूपेणावयवे वर्तते इति बोध्यम् ।

ननु द्वितीयाध्याये सर्वाग्रहणमवयव्यसिद्धेरिति सर्वस्याप्रत्यक्षमापादितमवयवि-नोऽनङ्गीकारे । तन्न युक्तम् । तिमिरदोषयुक्तचक्षुषः पुंसः एकः केशः अप्रत्यक्षोऽपि

समूहतामापन्नः प्रत्यक्षो भवति । एवमप्रत्यक्षोऽप्येकः परमाणुः तत्समुदायात्मा घटादिः प्रत्यक्षः स्यादेवेति चेत्; न ।

इन्द्रियाणां पाटवे सति स्वगोचरग्रहणस्य पाटवं प्रकर्षः । तेषां मान्द्ये स्वगोचरग्रहणस्य मान्द्यमपकर्षः । न हि पटुतरं चक्षुः शब्दं गृह्णाति, इन्द्रियाणां स्वागोचरेष्वप्रवर्तनात् । तथाच स्वभावतः अतीन्द्रियं परमाणुं समूहतापन्नमपि चक्षुः न गृह्णीयादेव । किञ्चोक्तप्रकारेण वृत्तिविकल्पः अवयविनीव अवयवे तदवयवे एवं तदवयवेऽपि भवतीति सर्वाभाव एव स्यात् । तथाच न कस्यापि ग्रहणमिति साधूक्तं 'सर्वाग्रहणमवयव्यसिद्धेः' इति ।

न च सर्वाभावोऽभ्युपगन्तुं शक्यते, आश्रयनाशाभावेन परमाणोः सद्भावात् । परमाणुश्च त्रुटेरपि सूक्ष्मो ज्ञेयः ।

(३) अष्टभिः सूत्रैः औपोद्घातिकं निरवयवप्रकरणम्

सर्वगतमाकाशमणोरन्तः बहिश्च व्याप्तमिति स्वीकरणीयम् । तथाच सावयवोऽणुः । यद्याकाशमणोरन्तः न व्याप्तं, तदा न सर्वगतं स्यादिति निरवयवः अणुः नोपपद्यते इत्याक्षेपः ।

अन्तश्शब्दः कारणान्तरैः पिहितं कारणमवयवमभिधत्ते । बहिश्शब्दश्च व्यवधायकं कारणमवयवं वक्ति । तदेतत्कार्यस्य संभवति । अकार्यस्य तु अणोः अन्तः, बहिः, इत्यस्यैवाभावान्नायं प्रश्नो घटते । सर्वत्र शब्दोपलब्धेः शब्दजनकसंयोगस्य सार्वत्रिकत्वात् सर्वमूर्तसंयोगित्वरूपं विभुत्वमाकाशस्य सिद्ध्यति । न चैतद्विरुध्यते । न चाकाशस्य सर्वसंयोगित्वे व्यूहः विष्टम्भश्च स्यादिति वाच्यम् । यतः व्यूहः प्रतिहतस्य परावर्तनम् । विष्टम्भः उत्तरदेशगतिप्रतिबन्धः । तावुभौ स्पर्शवत एवोपपद्येते, नास्पर्शस्याकाशस्य । इत्थञ्च अव्यूहः अविष्टम्भः विभुत्वञ्चाकाशधर्माः ।

न च परमाणूनां मूर्तत्वात् संस्थानवत्त्वं तेन सावयवत्वं स्यात् । संयुक्तत्वादपि सावयवत्वं प्रसज्यते । संयोगस्याव्याप्यवृत्तेः अवच्छेदकभेदसापेक्षत्य अवयवरूपमवच्छेदकं विना अनुपपत्तेरिति वाच्यम् । मूर्तिमत्त्वं संयोगित्वं चेतीमौ हेतू परमाणोरवयवं तदवयवांश्च साधयत इत्यनवस्थाकारिणौ । अनवस्थितावयवपरम्परायाः स्वीकारे अनन्तावयवत्वाविशेषात् मेरुसर्षपयोः तुल्यपरिमाणप्रसङ्गः । तस्मात्पूर्वोक्तयुक्त्या अणोर्निरव-

यवत्वप्रतिषेधो न समञ्जसः । दिग्भागावच्छेदक्रमादायैवाणुसंयोगस्याव्याप्यवृत्तित्वमुपपद्यते इति समाधिः ।

(४) द्वादशभिः सूत्रैः प्रासङ्गिकं बाह्यार्थभङ्गनिराकरणप्रकरणम्

अयं पटः इत्यादीनि ज्ञानानि न बाह्यं वस्त्ववलम्बन्ते । पटे विविच्यमाने, न तन्तुभ्योऽतिरिक्तः पटो नाम कश्चनार्थ उपलभ्यते । एवं तन्तुरिति ज्ञानेऽपि तदवयवांशुव्यतिरिक्तः न कोपि प्रतीयते । अतः अयं पटः इत्यादिकं ज्ञानं न बाह्यं पटादिपदार्थमालम्बते , तस्यासत्त्वात् । अपि तु पटाकारं जायते । विषयश्च न ज्ञानातिरिक्तः इति बाह्यार्थभङ्गवादिनः सौगताः संगिरन्ते । तन्न साधु । बुद्ध्या विवेचने पटस्य तन्तुरूपता न सिद्ध्यति । न हि तन्तुः पटः इति बुद्धिरुदेति । अपितु तन्तुतः पट इति । तथाच विवेचनेन बाह्यार्थ एव सिद्ध्यति । अनुव्यवसायेनापि ज्ञानस्य पटविषयकत्वमुल्लिख्यते , न पटाभेदः । न च पटो यदि तन्तोर्भिन्नः, तदा तन्तुं विनापि प्रत्यक्षगोचरः स्यादिति वाच्यम् । पटस्य तन्त्वाश्रितत्वात् सामग्रीसत्त्वेन पटप्रत्यक्षे तन्तुर्विषयो भवति । न च ज्ञानस्योभयवादिसिद्धत्वेन तन्मात्रस्वीकारे लाघवात् तदतिरिक्तपदार्थाभाव इति वाच्यम् । बाह्यस्य घटादेरर्थस्य प्रामाणिकत्वात् तदङ्गीकारे गौरवं बाधकं न भवति । अपिच बाह्यार्थाभावः यदि प्रमाणेन साध्यते, तदा प्रमाणस्य बाह्यस्य स्वीकारात् न बाह्यार्थाभावः । यदि तत्र न प्रमाणं तदा अप्रामाणिकत्वात् बाह्यार्थाभावो न सिद्ध्यति । न च प्रमाणप्रमेयव्यवहारो न पारमार्थिकः । विज्ञानानि च वासनापरिपाकवशात् स्वाप्नज्ञानवत् ऐन्द्रजालिकनिर्मितनगरादिप्रतीतिवद्वा आविर्भवन्तीति वाच्यम् । प्रमाणाभावात् बाह्याभावो न सिद्ध्यति । चक्षुरादेः हेतोरनभ्युपगमेन घटोऽयमित्यादिज्ञानानामप्यसिद्धिरेव । स्मरणमिव स्वाप्नप्रत्ययोऽपि पूर्वोपलब्धविषय एव न निर्विषयः । एतेन बाह्यस्येव बुद्धेरप्यसत्त्वमिति सुर्वशून्यवादिमतं निरस्तं वेदितव्यत् । बुद्धेः सहेतुकत्वमुपलभ्यते । न हि निःस्वरूपमलीकं हेतुमद्भवति । अतो बुद्धिरपि सतीति बोध्यम् ।

(५) द्वादशभिः सूत्रैः तत्त्वज्ञानविवृद्धिप्रकरणम्

शास्त्राधीनं तत्त्वज्ञानं क्षणिकम् । अतस्तन्नाशे मिथ्याज्ञानमुदीयात् । अतः तत्त्वज्ञानविवृद्धिः कर्तव्या । सा च निदिध्यासनापरपर्यायात् समाधिविशेषाभ्यासाद्भवति । तत्त्वज्ञानविवृद्ध्या मिथ्याज्ञानवासना तिरोहिता भवति । न च समाधिरेव न सिद्ध्यति ;

अबुसुत्समानस्यापि अर्थविशेषप्राबल्यात् बुद्धिर्जायते ; एवं क्षुत्पिपासाभ्यामनिच्छतोऽपि बुद्धिः प्रादुर्भवति ; तस्मादैकाग्र्यं न संभवतीति वाच्यम् । जन्मान्तरकृतसमाधिजन्यसंस्कारवशात् , पूर्वकृतेश्वराराधनजन्यधर्मविशेषबलाद्वा समाधिः सिद्ध्यत्येव । समाधिप्रतिबन्धकरूपरिहारार्थम् अरण्यगुहायां नदीपुलिनादिषु वा योगाभ्यासः कर्तव्यः ।

न चार्थविशेषप्राबल्यात् यद्यनिच्छतोऽपि बुद्धिरुत्पद्यते, तदा मोक्षेऽपि इन्द्रियार्थबुद्धिरुत्पद्येतार्थविशेषप्राबल्यादिति वाच्यम् । कर्मवशनिष्पन्ने शरीरे सत्येव बुद्धिरुदेति । मुक्तौ तु कर्माभावे शरीरस्यासत्त्वान्न बुद्धेरुत्पत्तिः ।

समाधिसिद्ध्यर्थमहिंसादयो यमाः शौचसंतोषादयो नियमाश्च तथा योग शास्त्रोक्ताः आत्मतत्त्वसाक्षात्कारसाधनोपायाश्चानुष्ठेयाः । अध्यात्मविद्याग्रहणधारणयोरभ्यासः तद्विद्यैः सह संवादश्च कर्तव्यः । तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात् ।

(६) द्वाभ्यां सूत्राभ्यां तत्त्वज्ञानपालनप्रकरणम्

बीजसंरक्षणाय कण्टकशाखावरणवत् तत्त्वाध्यवसायसंरक्षणाय जल्पवितण्डे प्रयोक्तव्ये । त्रयीबाह्यैः तद्दर्शनाभ्यासाहितकुतर्कजालैरपरैर्वा यदि स्वपक्ष आक्षिप्यते , तदा जल्पवितण्डाभ्यां कथनमावश्यकमेव । तदर्थमेव जल्पवितण्डयोर्निरूपणादिति बोध्यम् ।

प्रवृत्तिदोषसंबद्धः प्रेत्यभावः प्रपञ्चितः ।
फलं दुःखं विमुक्तिश्च तदुपायश्च कीर्तिताः ॥ (न्या-वा)

इति चतुर्थाध्यायस्य द्वितीयमाह्निकम्
चतुर्थाध्यायः समाप्तः ।

## पञ्चमाध्यायः

पञ्चमाध्यायस्य प्रथमाह्निके जातिप्रभेदाः तेषामुत्तराणि षट्पक्षी च निरूप्यन्ते । द्वितीयाह्निके तु निग्रहस्थानानि । यद्यपि तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वमिति सूत्रानन्तरं जातिप्रभेदाः निग्रहस्थानप्रभेदाश्च लक्षयितुं युक्ताः , तथापि तेषां बाहुल्यात् प्रमेयपरीक्षायां विलम्बो मा भूदिति शिष्यापेक्षितप्रमेयपरीक्षां वर्तयांबभूव । तदनन्तरं जातिनिग्रहस्थानविशेषलक्षणं वर्तयति सूत्रकारः ।

वादिना हेतौ प्रयुक्ते सति, सदुत्तरापरिस्फूर्तौ प्रतिवादिनः साम्यापादनबुद्धिर्भवति। असदुक्तेन जात्युत्तरेणायं पर्याकुलितमानसः यदि स्वयमप्यसदुत्तरं ब्रूयात्, तदा ममेवास्यापि निरनुयोज्यानुयोगः स्यात्; निष्प्रतिभश्चेत् पर्यनुयोज्योपेक्षणं भवेदिति उभावपि समौ भविष्यावः। यदि सदुत्तरेणायं असमदुक्तां जातिमुद्धरेत्, तदा ममैव पूर्वमापन्नः पराजयोऽवतिष्ठते इति पाक्षिकसाम्यापादनबुद्ध्या जातिवादी प्रत्यवतिष्ठते।

(१) साधर्म्यसमा (२) वैधर्म्यसमा (३) उत्कर्षसमा (४) अपकर्षसमा (५) वर्ण्यसमा (६) अवर्ण्यसमा (७) विकल्पसमा (८) साध्यसमा (९) प्राप्तिसमा (१०) अप्राप्तिसमा (११) प्रसङ्गसमा (१२) प्रतिदृष्टान्तसमा (१३) अनुत्पत्तिसमा (१४) संशयसमा (१५) प्रकरणसमा (१६) अहेतुसमा (१७) अर्थापत्तिसमा (१८) अविशेषसमा (१९) उपपत्तिसमा (२०) उपलब्धिसमा (२१) अनुपलब्धिसमा (२२) नित्यसमा (२३) अनित्यसमा (२४) कार्यसमा चेति जातयः चर्विंतुवशतिविधाः। दिङ्मात्रमुदाह्रियते। शब्दः अनित्यः कृतकत्वात् घटवदित्युक्ते, नैतदेवं, यद्यनित्यघटसाधर्म्यात् अनित्यः शब्दः स्यात्, तदा अमूर्तत्वात् नित्याकाशसाधर्म्यात् शब्दः किं नित्यो न स्यात्, विशेषो वा वक्तव्यः इति प्रत्यवस्थानं जातिः। एवं प्रयुक्ते सदुत्तरं वक्तव्यम्। न केवलं साधर्म्यात् अनित्यत्वं साध्यते। अपितु व्याप्तिमाश्रित्य। अमूर्तत्वनित्यत्वयोस्तु न व्याप्तिरिति विना व्याप्तिं केवलसाधर्म्यमात्रान्नित्यतापादनं न युक्तमिति।

एवमेकैकस्या जातेः स्वरूपं तस्या उत्तरञ्च निरूपितम्। अन्ते कथाभासरूपा षट्पक्षी न्यरूपि। तस्यायमभिसन्धिः। सदुत्तरेण जातीनामुद्धारे तत्त्वनिर्णयः जयपराजयव्यवस्था च सिद्ध्यतः। अन्यथा कथाः विफला भवन्तीति।

द्वितीयाह्निके निग्रहस्थानानि पराजयचिह्नानि प्रतिपादितानि।

(१) प्रतिज्ञाहानिः (२) प्रतिज्ञान्तरं (३) प्रतिज्ञाविरोधः (४) प्रतिज्ञासंन्यासः (५) हेत्वन्तरम् (६) अर्थान्तरं (७) निरर्थकम् (८) अविज्ञातार्थम् (९) अपार्थकम् (१०) अप्राप्तकालं (११) न्यूनम् (१२) अधिकं (१३) पुनरुक्तम् (१४) अननुभाषणम् (१५) अज्ञानम् (१६) अप्रतिभा (१७) विक्षेपः (१८) मतानुज्ञा (१९) पर्यनुयोज्योपेक्षणम् (२०) निरनुयोज्यानुयोगः (२१) अपसिद्धान्तः (२२) हेत्वाभासः इति द्वाविंशतिविधानि निग्रहस्थानानि।

तत्र कानिचित् अप्रतिपत्तिमूलकानि । अन्यानि विप्रतिपत्तिमूलकानि । प्रथमाह्निके सप्तदश प्रकरणानि । द्वितीयाह्निके सप्त प्रकरणानि ।

पञ्चमाध्यायप्रतिपाद्याः जातिनिग्रहस्थानप्रभेदाः विस्तरेणास्मिन् न्यायरत्ने मुद्राप्यमाणे निरूपिता इति विस्तरभिया नास्माभिः पञ्चमाध्यायार्थः साकल्येन संगृहीतः ।

तदेवं षोडश पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्च । प्रयोजनादीनां परीक्षा 'यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः' इति सूत्रेण सूचितेति त्रिविधा शास्त्रस्य प्रवृत्तिः निर्व्यूढा इति बोध्यम् ।

जातीनां सप्रपञ्चानां निग्रहस्थानलक्षणम् ।
शास्त्रस्य चोपसंहारः पञ्चमे परिकीर्तितः ॥ (न्या. वा)

न्यायसूत्र-परिचयः

न्यायदर्शने सूत्राणि प्रस्फुटार्थकानि । अध्यायेषु सूत्राणां सङ्ख्या प्रायः समाना । इतरदर्शनेष्विव अध्यायेषु सूत्रसङ्ख्या विषमा । स्वयमेव शब्दानित्यत्वादिपरीक्षासु जातीनां छलानाञ्च प्रयोगं प्रदर्शयति सूत्रकारः । क्वचित्परमतमुपन्यस्यत्येव केवलं, न दूषयति । तुच्छत्वाद्दूषणमनुक्तमपि गम्यत इति मन्यते । यथा आकस्मिकतावादं निरूप्य, तन्निराकरणं न सूत्रयति । पक्षिलस्वामिनश्चाहुः 'शीलमिदं भगवतः सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न व्यवस्थापयति । तत्र शास्त्रसिद्धान्तात् तत्त्वावधारणं प्रतिपत्तुमर्हतीति मन्यते, इति ।

वैशेषिकसूत्रेषु परिपठितम् 'अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः' (४-१-८) इति सूत्रं न्यायदशने इन्द्रियपरीक्षाप्रकरणे (३ - १ - ३९) दृश्यते । वैशेषिकदर्शने आत्मनिरूपणे निरूपितस्य आत्मसाधकलिङ्गसमुदायस्य एकदेशः इन्द्रियान्तरविकारः 'इन्द्रियान्तरविकारात्' इति स्वतन्त्रसूत्रेण न्यायदर्शने प्रत्यपादि । एवम् 'आत्मेन्द्रियार्थसंनिकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्' इति वैशेषिकसूत्रोक्तार्थस्यानुवादकं 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' इति न्यायसूत्रं वर्तते ।

परीक्षोपक्रमे, विचाराङ्गसंशयप्रदर्शकानि सूत्राणि पूर्वोत्तरमीमांसासाङ्ख्ययोगदर्शनेष्वनुपलब्धानि अत्र दर्शने वर्तन्ते । यथा—'साध्यत्वादवयविनि सन्देहः' (२ - १ - ३२) 'विकारादेशोपदेशात्संशयः' (२ - २ - ४०) 'स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः' (३ - १ - ५२) 'कर्माकाशसाधर्म्या-

त्संशयः' (३-२-१) 'द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः' (३-२-४६) 'सद्यः कालान्तरे च फलनिष्पत्तेः संशयः' (४-१-४४) 'विद्याविद्याद्वैविध्यात्संशयः' (४-२-४) इत्यादीनि । परन्तु सर्वत्र परीक्षादौ संशयसूचकं सूत्रं न दृश्यते । सौगतसंमतस्य क्षणभङ्गवादस्य बाह्यार्थभङ्गवादस्य सर्वपृथक्त्ववादस्य असतः सदुत्पत्तिवादस्य सर्वशून्यतावादस्य संघातवादस्य (वारद्वयं द्वितीयचतुर्थाध्याययोः) च निरासः बाह्यसमये महान्तं प्रद्वेषं सूचयति, सूत्रकारस्य । उद्देशक्रमानुसारेण पदार्थानां लक्षणपरीक्षादिनिरूपणञ्चातिरमणीयं वर्तते ।

## न्यायभाष्यम्

भाष्यकार-परिचयः

वात्स्यायनो महर्षिः न्यायसूत्राणां भाष्यमवर्तयत् । तं पक्षिलस्वामी पक्षिलमुनिरित्यपि व्यवहरन्ति प्रबन्धारः ।

'योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥'

इति भाष्यावसानश्लोकेन स्वस्य वात्स्यायननामतां ब्रूते । आचार्यवाचस्पतिमिश्रास्तु पक्षिलस्वामिपदेन व्यवहरन्ति भाष्यकृतं तात्पर्यटीकायाम् । मल्लिनाथः तार्किकरक्षाव्याख्यायां निष्कण्टकायां पक्षिलमुनिपदेन एनं निर्दिशति । सूत्रकार इव भाष्यकारोऽपि मैथिलः नेपालादागतोऽयं नवकम्बलवत्त्वादित्युदाहरणदानादित्यपि वदन्ति । लघुभिर्गभीरैश्च वाक्यैः संदब्धं भाष्यं ग्रहणकवाक्यविवरणेन 'स्वपदानि च वर्ण्यन्ते' इति भाष्यलक्षणलक्षितं वर्तते । हेत्वाभासानामुदाहरणानि सूत्रोक्तानि सिद्धान्तानुबन्धीनि च प्रदर्शयति; न तु नव्यग्रन्थेष्विवापूर्वाणि कल्पितान्युदाहरणानि । शब्दानित्यत्वप्रकरणे, अस्पर्शत्वस्य शब्दे नित्यत्वसाधकता व्यभिचारेण निराकृता सूत्रकृता । शब्दः नित्यः अस्पर्शत्वादित्येव सव्यभिचारस्योहरणं प्रदर्शयति भाष्ये । एवं सूत्रेषु साधयिष्यमाणासत्कार्यवादविरोधिसत्कार्यवादानुबन्धिनं हेतुं सोऽयं विकारो व्यक्तेरपैति इत्यादिना विरुद्धलक्षणयोजनया प्रतिपादयति । सूत्रकारेण निराकृतमेव संयोगव्यङ्ग्यत्वेन शब्दनित्यत्वानुमानं कालात्ययापदिष्टनिदर्शनं ब्रूते । अनुमानसूत्रे नदीवृद्ध्या वृष्टेरनुमानमुदाजहार । अनुमानाप्रामाण्याक्षेपपरस्य 'रोधोपघातसादृश्येभ्यो व्यभिचारादप्रमाणम्' इति सूत्रस्य पर्यालोचने इदमनुमानं सूत्रकाराभिमतमिति प्रतीयते । रोधेन व्यभिचारस्य

शङ्कितत्वात् । रोधादपि नदी पूर्णा दृश्यते । ततः भूता वृष्टिरिति मिथ्यानुमानमिति हि तत्र विवक्षितम् ।

एवमेव आत्मादिपरीक्षोपयोग्येव तर्कः तर्कलक्षणस्योदाह्रियते । न तु यदि वह्निर्न स्यात्, तदा धूमोऽपि न स्यादित्यादिः । शब्दानित्यत्वसाधने सूत्रकारनिर्भरस्याव-गमात् शब्दे अनित्यत्वसाधकन्यायावयवा एव न्यायप्रकरणे विस्तरेण प्रतिपादिताः। जातीनां समीचीनमुत्तरं पञ्चमाध्याये सूत्रकारेण प्रतिपादितम् । छलस्य प्रत्यवस्थान-प्रकारो न सूत्रोपदिष्ट इति छलप्रकरणे स्वयं तं निरूपयति । मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति सूत्रकारेण सूचितं न्यायदर्शनरहस्यं परतः प्रामाण्यवादं भाष्यस्योपक्रम एव 'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्' इति वाक्येन व्यवस्थापयति । प्रत्यक्षज्ञानेऽपि शब्दानुविद्ध एवार्थो भासते इति वैयाकरणादिपक्षनिरा-सपरतयापि सूत्रावयवान् योजयति । सर्वथा महर्षिवात्स्यायनापराभिधानपक्षिलस्वामि-रचितं भाष्यं नातिसंक्षिप्तं नातिविस्तृतं प्रसन्नं गम्भीरञ्च व्युत्पन्नमतीनां चेतांसि कर्षति ।

## न्यायवार्तिकम्

न्यायभाष्ये वसुबन्धुदिङ्नागादिभिः शाक्यैः दूषिते, शाक्यदूषणमेव मुख्यं प्रयोजनमालम्ब्य, भारद्वाजः उद्द्योतकराचार्यः भाष्यव्याख्यानरूपं न्यायवार्तिकं निबन्ध । आह च ग्रन्थोपक्रमे,

वार्तिक-कारपरिचयः

'यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद ।
कुतार्किकाज्ञाननिवृत्तिहेतुः करिष्यते तस्य मया निबन्धः ॥' इति ।

अत्र तात्पर्यटीका 'अथ भगवता अक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते, व्युत्पादिते च भगवता पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्तिकारम्भः इति शङ्कां निराचि-कीर्षुः सूत्रकारोक्तप्रयोजनानुवादपूर्वकं वार्तिकारम्भप्रयोजनं दर्शयति —यदक्षपाद इति । यद्यपि भाष्यकृता कृतव्युत्पादनमेतत् तथापि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतुसन्तमस-समुत्थापनेनाच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्याप्तमिति उद्द्योतकरेण स्वनिबन्धोद्द्योतेन तदपनीयते इति प्रयोजनवानयमारम्भः' इति । बौद्धैः न्यायदर्शने खिलीकृते सति, तस्य स्थितिं चकारायं वार्तिककारः इति सुप्रसिद्धम् । अत एव 'न्यायस्थितिमिवोद्द्यो-तकरस्वरूपाम्' इति वासवदत्ताख्यायिकावचने सुबन्धुः उद्द्योतकरस्य न्यायदर्शनस्थापन-कौशलं वर्णयति । स्वयं भारद्वाजनामानं वक्ति वार्तिकान्ते—

'यदक्षपादप्रतिमो भाष्यं वात्स्यायनो जगौ ।
अकारि महतस्तस्य भारद्वाजेन वार्तिकम् ॥ ' इति श्लोकेन ।

श्रीवाचस्पतिमिश्रप्रभृतमः प्रबन्धारः उद्द्योतकराभिधानेन वार्तिककारमामनन्ति । एवञ्च सूत्रकारस्य गोतमः अक्षपादः इति नामद्वयमिव, भाष्यकृतः वात्स्यायनः पक्षिलस्वामी इत्यभिधानयुग्ममिव, वार्तिककारस्यापि भारद्वाजः उद्द्योतकरः इति आख्याद्वितयं बोध्यम् । ग्रन्थान्ते भारद्वाजपाशुपताचार्यश्रीमदुद्द्योतकरकृताविति लेखनादयं शैव इति अवगच्छामः । अयं श्रीवाचस्पतिमिश्रेभ्योऽतिप्राचीनः, यतः वार्तिकवाचामति-जरतीत्वमभिहितं तैः तात्पर्यटीकोपक्रमे,

' इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥ ' इति श्लोकेन ।

न्यायभाष्यस्य प्रायः छायाव्याख्यानमेवेदं वार्तिकम् । अत्र स्वीयानि ग्रहण-कवाक्यानि विन्रियन्ते । वचनधोरणी सरला व्युत्पादिका गभीरा च लक्ष्यते ।

' उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रसज्यते ।
तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः ॥ '

इत्युक्तवार्तिकलक्षणस्य संपूर्णस्य लक्ष्यभावमापन्नोऽयं ग्रन्थः । अत्र प्रथमाध्यायः विस्तृतः । द्वितीयः ततः किञ्चिदूनः । ततोऽप्यीषदल्पः तृतीयाध्यायः । तदपेक्षया संक्षिप्तः चतुर्थः । पञ्चमस्तु अतिसंक्षिप्तः ।

प्रत्यक्षानुमानादिप्रमाणव्युत्पादकेषु अवयवप्रतिपादकेषु प्रकरणेषु न केवलं वसु-दिङ्नागादिभिरुद्घाटितान् दोषानुद्धरति, अपितु तदीयान्यपि लक्षणानि विभज्य पराक-रोति । ईदृशप्रमेयेषु भदन्तादिविचारबाहुल्यादेव प्रथमाध्यायः विस्तृतोऽजनि । प्रति-वादिनः शाक्यान् विनैव नामग्रहणं केचिदित्यादिपदैरेव निर्दिशति । वैभवात्सूत्राणामर्थं बहुधा वर्णयति ।

न केवलं प्रत्यक्षानुमानादिलक्षणसूत्रविवरणावसरे सौगतसंमतानि लक्षणानि पराकरोति ; अपितु मीमांसकसांख्यादिसंमतान्यपि पराचष्टे । क्वचित् भाष्यकारेण विसंवदते वार्तिककारः । संशयसूत्रे पञ्चविधः संशयः इति भाष्यमतमाक्षिप्य, त्रिविधः संशय इति निर्धारयति । ' अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः'

इति सूत्रे भाष्योक्तम् 'अस्तु द्रव्यं शब्दः, अथापि किं नित्यः उतानित्यः इति परावज्ञानात्प्रवर्तते' इत्यादिकमुदाहरणमयुक्तं मन्यते। सामान्यतो दृष्टानुमानस्य भाष्योक्तमुदाहरणं निराकरोति। दुरुक्तचिन्तनेन वार्तिकलक्षणं समग्रमपि स्फुटीकरोति। भाष्यमतमिव शाक्यमतमपि 'तत्र बुध्यामहे' इत्यादिना सबहुमानं निराकुर्वन्नयं वार्तिककारः स्वस्य निराकरणकौशलम् उदारताञ्च प्रकटयति। अवयविव्यवस्थापनादौ महान्तं संरम्भं करोति। 'तत्कारितत्वादहेतुः' इति सूत्रव्याख्यानावसरे ईश्वरस्य सद्भावे मानं स्वरूपं सापेक्षत्वनिरपेक्षत्वे शरीरादिप्रसङ्गञ्चाधिकृत्य बहु प्रपञ्चयति। शब्दशक्तिपरीक्षाप्रसङ्गेन सूत्रभाष्यादौ अनिराकृतः भदन्ताभिमतः अपोहवादः उद्भाव्य निराकारि। न्यायदर्शनस्य मूलस्तम्भभूतमिदं न्यायवार्तिकं शाक्यादिसमयविज्ञानाय बहूपकुर्वत् सचेतसां समीचीनां व्युत्पत्तिमादधाति।

## त्रिलोचनः

तात्पर्यटीकायां प्रत्यक्षलक्षणसूत्रविवरणावसरे,

'त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः।
यथावस्तु यथामानं व्याख्यातमिदमीदृशम्॥'

इति वाचस्पतिमिश्रैरभिधानात् तेषां गुरुः त्रिलोचन इति अवगच्छामः। 'किं नामात्र त्रिलोचनगुरोः सकाशादुपदेशरसायनमासादितममूषां पुनर्नवीभावाय दीयते इति युज्यते' इति उदयनाचार्याणां न्यायनिबन्धवाक्यं व्याचक्षाणाः वर्धमानोपाध्यायाः न्यायनिबन्धप्रकाशे 'त्रिलोचनः टीकाकृतो विद्यागुरुः' इति निरूपयन्ति।

पर्यनुयोज्योपेक्षणलक्षणकारिकाव्याख्यानावसाने 'अत्र त्रिलोचनवाचस्पतिप्रभृतीनां न काचिद्विप्रतिपत्तिः' इति तार्किकरक्षासारसंग्रहे वरदराजाभिधानात् त्रिलोचनः न्यायदर्शनान्तर्गतप्रबन्धनिर्माता इति प्रतीमः।

## न्यायवार्तिकतात्पर्यटीका

न्यायवार्तिकग्रन्थं जीर्णं षड्दर्शनीवल्लभाः श्रीवाचस्पतिमिश्राः न्यायवार्तिकतात्पर्यटीकया युवानमकार्षुः। एते भगवति विश्वेश्वरे भक्ताः। स्वकीयग्रन्थनिर्माणफलं सर्वमपि भगवत्यर्पयन्ति—

'यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥
संसारजलधिसेतौ वृषकेतौ सकलदुःखशमहेतौ ।
तस्य फलमखिलमर्पितमेतेन प्रीयतामीशः ॥' इति ।

सर्वज्ञैः माधवाचार्यैः सर्वदर्शनसंग्रहे अक्षपाददर्शनप्रतिपादनावसरे 'दिगन्तविश्रान्तकीर्तिरुदयनः' इति सबहुमानमभिहितः उदयनाचार्यः तात्पर्यटीकाव्याख्यानस्य न्यायनिबन्धस्योपक्रमे, स्वीयवाचः मनसश्च वाचस्पतिवाचि स्खलनराहित्याय वाग्देवतायाः सावधानतयावस्थानं प्रार्थयते—

'मातः सरस्वति पुनः पुनरेव नत्वा बद्धाञ्जलिः किमपि विज्ञपयाम्यवेहि ।
वाक्चेतसोर्मम तथा भव सावधाना वाचस्पतेर्वचसि न स्खलतो यथैते ॥' इति ।

अतश्चैतेषां वैखरीविषये नान्यैः किमपि वक्तव्यमस्ति ।

एते प्रसन्नगम्भीरया सरण्या शास्त्रीयसिद्धान्तान् निरूपयन्ति । सौगतमतनिरूपणावसरेषु तेन तेन शाक्येन स्वीयग्रन्थेषु निबद्धाः श्लोकाः विशदीक्रियन्ते । सर्वोऽपि समयः तत्तत्समयसिद्धप्रामाणिकवचनाद्युपन्यासपूर्वकमेव प्रतिपाद्यते । तत्तन्मतप्रविष्टैरिव तत्तन्मतविशेषाः प्रतिपाद्यन्ते । अद्वैतस्थापकानामप्येषां संख्यैकान्तवादनिराकरणावसरे अद्वैताभिमानगन्धलेशोऽपि नानुभूयते । तत्र शुद्धैर्नैयायिकैर्भूयते ।

न केवलं तात्पर्यटीका न्यायवार्तिकस्य व्याख्या । किन्तु अवतरणार्थनिरूपणादिभिः भाष्यस्यापि ब्रह्मसूत्रशाङ्करभाष्यव्याख्यां भामतीमपेक्ष्य सुबोधैवेयं टीका व्यरचि । स्वातन्त्र्येण काव्यनिर्माणावसरानवाप्त्या, काव्यसरणिरेभिः शास्त्रग्रन्थेष्वाहृता दृश्यते । यथा संशयसूत्रे 'यदा खल्वयं द्रष्टा प्रतिपरुडङ्कुरोद्भेदपुलकिताभिः मन्दमलयमारुतान्दोलनललितलास्यशालिनीभिः शाखाभिः मधुमदमुदितमधुपमालागुञ्जितवल्लकीवाद्यमनोहराभिः मत्तपुंस्कोकिलकुलविपञ्चयमानपञ्चमाभिरारब्धसंगीतकं सहकारतरुमालोक्य अथ विदूरवर्तीं कुञ्जरसदृशधर्मवन्तमनुभवति, तदा अस्यास्ति समानधर्मोपलब्धिः, अस्ति च करितरुरूपविशेषस्मृतिः न तु साधकबाधकप्रमाणाभावः इति न संशेते' इति ।

प्रत्यक्षसूत्रे 'इन्द्रियमनस्संयोगस्याग्रहणं भेदेऽभेदात्' इति वार्तिकविवरणं 'यदा हि नगरयोषितः कुतूहलात्मणिहितमनसः विकसितनस्पन्दनयनोत्पलाः सौधमाला-

गवाक्षकैरवनिपतिं सबलवाहनमतिचिरप्रोषितपरावृत्तं गोपुरेण निविशमानमालोकयन्ति, तदा खल्वासामेकेनैवेन्द्रियमनस्संयोगेन क्रमवदनेकेन्द्रियार्थसंनिकर्षसहकारिणा भिन्न-क्रमवन्ति हास्तिकाश्वीयादिप्रत्यक्षज्ञानानि जायन्ते ' इति च ।

न्यायवार्तिकतात्पर्यटीकाया अर्धभागः प्रथमाध्यायः । द्वितीयतृतीयाध्यायौ समानग्रन्थौ । चतुर्थः ताभ्यां स्वल्पपरिमाणः । पञ्चमस्स्वल्पतरो दृश्यते । ग्रन्थेऽस्मिन् दिङ्नागस्य वसुबन्धोः धर्मोत्तरस्य च वचनान्युदाह्रियन्ते । क्वचित् तेषां भावः विव्रियते । तत्त्वबोधानन्तरं विभ्रमो न भवतीत्यत्रापि बाह्यानां वचनं संमतिप्रदर्शनमुखेनो-दाहरन्ति —

' निरुपद्रवभूतार्थस्वभावोऽस्य विपर्ययैः ।
न बाधोऽयत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥ ' इति ।

संभावितो हि पक्षः हेतुना साध्यते नासंभावितः इत्यत्रापि गाथां प्रमाणयन्ति—

' संभावितः प्रतिज्ञायां पक्षः साध्येत हेतुना ।
न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः ॥ ' इति ।

एवं प्रतिज्ञाहेत्वादीनां दिङ्नागोक्तानि दूषणानि तदीयवचनव्यक्तिविवरणपूर्वकमुपक्षिप्य निराकुर्वन्ति । किं बहुना ? एतेषां ग्रन्थपरिशीलनेनैव शाक्यसमयः सुष्ठु अवगम्यते । एवं सांख्यादिमतोपन्यासेऽपि प्रमाणवचनोदाहरणं बोध्यम् ।

अतस्मिन् तत्प्रत्ययः इति भाष्यवार्तिकयोरुक्तं विपर्ययस्वरूपम् अन्यथाख्यातिरेवेति अख्यात्यान्तरख्यात्यसत्ख्यात्यनिर्वचनीयख्यातिनिराकरणेन प्रसाधितमत्र निबन्धे । परन्तु ' यथाहुरन्यथाख्यातिवादिनः —

' तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते ।
तन्निरालम्बनज्ञानमसदालम्बनञ्च तत् ॥ '

इत्यन्यख्यातिवादिनां कारिका उदाहृता । कारिकाकारं न जानीमः । नैयायिक-जीवातुः परतः प्रामाण्यपक्षः, शास्त्रारम्भे निपुणतरं व्यवस्थापितः । सविकल्पस्य प्रत्यक्ष-त्वसमर्थनं, ' ते विभक्त्यन्ताः पदम् ' इति सूत्रे वर्णाः पदमित्युक्त्या स्फोटव्यवच्छेदस-मर्थनं, ' विधिर्विधायकः' इति सूत्रे चोदकं वाक्यमिति वार्तिकव्याख्याव्याजेन इष्टसाध-नताया लिङर्थताव्यवस्थापनं, नव्यनैयायिकजीवितस्य साध्यसाधनसंबन्धस्य लिङ्गलिङ्गि-

संबन्धपदमात्रेण भाष्यवार्तिकाभ्यामुक्तस्य विवरणापदेशेन, तादात्म्यतदुत्पत्तिनिबन्धनः अविनाभावः इति सौगतमतस्य, वैशेषिकसंमतस्य चतुष्प्रकारस्य, सांख्याभिमतसप्तविधस्य च संबन्धस्य निराकरणेन स्वाभाविकः संबन्धः गमकतौपयिकः प्रतिबन्धः इति व्यवस्थापनञ्चैतान् न्यायशास्त्रजीवातुभूतान् प्रकटीकुर्वन्ति ।

प्रत्यक्षसूत्रे अव्यपदेश्यपदं व्यवसायात्मकपदञ्च अविकल्पसविकल्परूपलक्ष्यसंग्राहकमिति तात्पर्यटीकाकाराणां व्याख्यानसरणिरेवाद्रियते सर्वैः नैयायिकैः ।

एतेषां वाचस्पतिकल्पानां विरोधिनः मत्सरिणः आसन्निति एतग्रन्थान्तिमश्लोकादवगच्छामः—

'क्रूराः कृतोऽञ्जलिरयं बलिरेष दत्तः कायो मया प्रहरतात्र यथाभिलाषम् ।
अभ्यर्थये वितथवाच्मयपांसुवर्षैर्मा माविलीकुरुत कीर्तिनदीः परेषाम् ॥' इति ।

भामतीग्रन्थोक्तः—

'नाभ्यर्थ्या इह सन्तः स्वयं प्रवृत्ता न चेतरे शक्याः ।
मत्सरपित्तनिबन्धनमचिकित्स्यमरोचकं येषाम् ॥'

इति श्लोकोऽप्यमुमर्थं द्रढयति ।

श्रीनृगमहाराजाश्रितानामेषां स्थितिसमयः न्यायसूचीनिबन्धे

'श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ।
न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ॥'

इति एतदीयवचनानुरोधेन ८४१-A.D. इति निर्णीतोऽस्ति ।

### न्यायवार्तिकतात्पर्यटीकापरिशुद्धिः

न्यायवार्तिकतात्पर्यटीकां न्यायाचार्याः श्रीमदुयनाचार्याः तात्पर्यटीकापरिशुद्धिनामकव्याख्यानेन भूषयामासुः । परिशुद्धेः न्यायनिबन्ध इत्यपरा समाख्या । यदाहुः लिसूत्रीप्रकरणान्ते प्रकाशे वर्धमानोपाध्यायाः—

'यस्तर्कतन्त्रशतपत्रसहस्ररश्मिर्गङ्गेश्वरः सुकविकैरवकाननेन्दुः ।
तस्यात्मजः पितुरधीत्य निबन्धमित्थं प्राकाशयत्कृतिमुदे बुधवर्धमानः ॥' इति ।

न्यायाचार्य-परिचयः

'निबन्धे तु हेत्वाभासानां फलद्वारकं लक्षणमुक्तम्' इत्यादिना ग्रन्थेन इयमेव परिशुद्धिः श्रीगङ्गेशोपाध्यायैः तत्त्वचिन्तामणौ उद्धृता । उदयनाचार्याश्चेमे न्यायाचार्यपदेन चाचार्यपदेन च सबहुमानं न्यायग्रन्थेषु प्रतिपाद्यन्ते ।

एषां वैखरी नव्यन्यायग्रन्थनिष्णातानामपि अनधिगतगैर्वाणवाणीरसतत्त्वानामसुलभ-प्रतिपत्तिभावा प्रौढपण्डितकुलास्वाद्यरसा विजयते । विभज्य वस्तुप्रतिपादनसरणिरन्यादृशी । कामस्य दुःखहेतुत्वप्रतिपादनपद्धतिः सहृदयानानन्दयति । ज्ञानश्रीप्रज्ञाकर-प्रभृतीनां शाक्यानामाक्षेपाः सुदूरं निष्कासिताः । टीकाकारभक्ताश्चैते । ग्रन्थादौ मङ्गला-चरणेन शिष्टाचारेण 'प्रारब्धपरिसमाप्तिकामो देवतां नमस्कुर्यात्' इति श्रुतिः कल्पिता मङ्गलस्य समाप्तिफलकत्वे प्रमाणमिति सिद्धान्तः न्यायाचार्योपज्ञमेव विलसति । ईश्वरनिरूपणोपयोगितया न्यायदर्शनप्रतिपाद्यैराकस्मिकक्षणभङ्गादिवादैः सर्वैः संदृब्धं न्यायदर्शनसारं न्यायकुसुमाञ्जलिनामानं प्रबन्धम् ईशस्य पदयुगे समर्पयन् । प्रतिबन्दी-मुखेन प्रतिवादिमतनिराकरणे आदराशयो लक्ष्यते । क्वचित् कालक्रमेण धर्मादीनां ह्रासो दृश्यते इति गद्यकाव्यसरण्या प्रत्यपादयन् 'पूर्वं चतुष्पाद्धर्म आसीत् । ततस्त-नूयमाने तपसि त्रिपात् । ततो म्लायति ज्ञाने द्विपात् । ततो जीर्यति यज्ञे दानैकपात् । सोऽपि पादः दुरागमादिविपादिकाशतदुःस्थः अश्रद्धामलकलङ्कितः कामक्रोधादि-कण्टकशतजर्जरितः इतस्ततः स्खलन्निवोपलभ्यते' इति ।

न्यायकुसुमाञ्जलिग्रन्थावसाने

'इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक त्वयैव कृपया ते भावनीया नराः ॥'

इति श्लोकेन स्वीयग्रन्थानवाप्तदृढतरेश्वरास्तित्वबुद्धीनामपि त्वयैव कृपया ईश्वरास्तित्व-बुद्धिरुत्पादनीया इति भगवन्तं प्रति प्रार्थना एतेषां समेषामपि सन्मार्गप्रवर्तने अनितर-साधारणीं व्यसनितां प्रकटयति ।

'अस्माकं तु निसर्गसुन्दर चिराच्चेतो निमग्नं त्वयी-
त्यद्धानन्दनिधे तथापि तरलं नाद्यापि संतृप्यते ।
तन्नाथ त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नवाम शतशो याम्याः पुनर्यातनाः ॥'

इति श्लोकेन प्रायणसमये भगवदेकाग्रचित्ततां, ततः यमयातनाभावञ्च प्रार्थयमाना आचार्याः आस्तिककुलललामभूता विराजन्ते । 'आसंसारं प्रसिद्धानुभावे भगवति भवे

सन्देह एव कुतः ', ' तन्मे प्रमाणं शिवः ' इत्यादौ ईश्वरे अभिधानीये शिवे रूढं पदं प्रयुञ्जानाश्चैते शिवभक्ततां प्रथयन्ति । न्यायकुसुमाञ्जलिः न्यायनिबन्धमपेक्ष्य दुरूहः । आहुश्च वर्धमानोपाध्यायाः

' यस्तर्कतन्त्रशतपत्रसहस्ररश्मिर्गङ्गेश्वरः सुकविकैरवकाननेन्दुः ।
तस्यात्मजोऽतिविषमं कुसुमाञ्जलिं तं प्राकाशयत्कृतिमुदे बुधवर्धमानः ' ॥ इति ।

वरदराजोऽपि कुसुमाञ्जलिबोधिनीनाम्न्याः टीकायाः प्रारम्भे

' औदयने पथि गहने विदेशिकः प्रतिपदं स्खलति लोकः ।
तस्य कृते कृतिरेषा कुसुमाञ्जलिबोधिनी जयति ॥ '

इति श्लोकेन न्यायाचार्यमार्गस्यातिगहनतामुद्घोषयति ।

न्यायकुसुमाञ्जलिव्याख्यानं प्रकाशः वर्धमानकृतः रुचिदत्तोपाध्यायविरचित-मकरन्देनोद्भासितोऽस्ति । परिमलनामकं व्याख्यान्तरमपि कुसुमाञ्जलेः ग्रन्थपरिशीलनेनावगच्छामः । बौद्धसमयापाकरणबद्धदीक्षा न्यायाचार्याः बौद्धधिक्कारापराभिधानम् आत्मतत्त्वविवेकं रचयामासुः । तत्र मोक्षोपयोगितत्त्वज्ञानविषयीभूतमात्मतत्त्वं विविच्य निरूपितम् । ' अत्र बाधकं भवदात्मनि क्षणभङ्गो वा, बाह्यार्थभङ्गो वा, गुणगुणिभेद-भङ्गो वा,' अनुपलम्भो वा, इति चतुर्धा विकल्प्य सौगतमतसिद्धक्षणभङ्गादिवादाः सुदूरं विस्तरेण निष्कासिताः । परन्तु बाह्यार्थभङ्गवादे,

' न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधके बलिनि वेदनये जयश्रीः ।
नो चेदनित्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः ॥ '

इति, ' अस्तु शून्यतैव निर्वाणम् ' इत्यादिना प्रवृत्तस्य विचारस्यावसाने, ' तत्किमार्द्र-कवणिजो वहित्रचिन्तया ' इति चाभिधानं तेषां वेदान्तदर्शने महतीं श्रद्धां प्रकटयति । पराक्रान्तश्चात्र लघुचन्द्रिकायां ब्रह्मानन्दसरस्वतीभिः ।

न्यायसूत्रविवरणरूपं न्यायपरिशिष्टं, प्रशस्तपादभाष्यटीका किरणावली, लक्षणावली चेति अपरान्ग्रन्थान् जग्रन्थुः । तानधिकृत्य यथावसरं निवेदयिष्यामः ।

' तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥ '

इति आचार्यवचनं तेषां स्थितिकालं (984-A-D) निर्णयति। एते मैथिलाः। अद्यापि तद्वंशीयाः मिथिलायां वसन्तीति शृणुमः। कदाचित् भगवतो जगन्नाथस्य मन्दिरं प्राप्तानां भगवद्दर्शनालाभनिर्विण्णमानसानामेषां,

'ऐश्वर्यमदमत्तोऽसि मामवज्ञाय वर्तसे।
पुनर्बौद्धे समायाते मदधीना तव स्थितिः॥'

इति भगवत्संनिधौ वचनं समनन्तरमेव भगवद्दर्शनलाभश्चेत्यैतिह्यमपि एतेषां परमार्थभक्ततां शाक्यनिराकरणदक्षताञ्च द्रढयति॥

न्यायनिबन्धप्रकाशः

वर्धमान-परिचयः नवीनन्यायमार्गप्रतिष्ठापकानां गङ्गेशोपाध्यायानां तनयाः तेषामेव सकाशादधिगतन्यायविद्याः उदयनाचार्यरचितप्रबन्धानां व्याख्यातारः वर्धमानोपाध्यायाः पितुः सकाशात् निबन्धम् (न्यायवार्तिकतात्पर्यटीकापरिशुद्धिम्) अधीत्य, न्यायनिबन्धप्रकाशाभिधानेन व्याख्यानेनाचार्यपद्धतीः सुगमा अकार्षुः। यदाहुः त्रिसूत्रीप्रकरणान्ते वर्धमानोपाध्ययाः—

'यस्तर्कतन्त्रशतपत्रसहस्ररश्मिर्गङ्गेश्वरः सुकविकैरवकाननेन्दुः।
तस्यात्मजः पितुरधीत्य निबन्धमित्थं प्राकाशयत्कृतिमुदे बुधवर्धमानः॥'

इति। न्यायाचार्यसमयं यावच्छाक्याः वैदिकमतदूषकान् प्रबन्धान् निबबन्धुः, ततः पश्चात् तदीया दूषणग्रन्था न प्रादुरभूवन्निति प्रतीयते। एषां वैखरी न पुरातनग्रन्थेष्विव नृत्यत्पदप्राया, किन्तु अविगणय्य भाषासौन्दर्यं विवक्षितार्थबोधनपरा लक्ष्यते। एते च स्वगुरौ पितरि, शिवे च भक्ताः स्वीयग्रन्थारम्भे सर्वत्र पितुः शिवस्य च प्रणामं निबध्नन्ति। निबन्धप्रकाशे आचार्यपद्धतीनां विवरणं विधाय तत्र तत्र पितृचरणानामभिसन्धिं विवृण्वन्ति। न कोऽपि स वर्धमानोपाध्यायविरचितः प्रबन्धोऽस्ति, यत्र पितृचरणानामभिसन्धिभेदा नोद्घाटिताः।

तत्त्वचिन्तामणिटीका, न्यायकुसुमाञ्जलिप्रकाशः, लीलावतीप्रकाशः, आत्मतत्त्वविवेकटीका, आन्वीक्षिकीनयतत्त्वालोकः इत्यादयः प्रबन्धाः एतैर्विरचिताः न्यायदर्शनस्य महान्तमुपकारमादधति।

न्यायनिबन्धप्रकाशस्य मैथिलैः पद्मनाभमिश्रैर्वर्धमानेन्दुनामकं व्याख्यानं, शङ्करेण न्यायतात्पर्यमण्डनाभिधञ्च व्याख्यानं विरचितमिति न्यायवार्तिकतात्पर्यटीकापरिशुद्धिग्रन्थस्य भूमिकातोऽवगम्यते । प्रबन्धद्वयमपि नाद्य यावन्मुद्रितमुपलभ्यते ।

तदेवं न्यायदर्शनव्याख्यानपरम्परा निरूपिता ।

न्यायभाष्यस्य रामचन्द्रविरचितं भाष्यचन्द्रनामकमसंपूर्णं व्याख्यानं, गङ्गानाथझामहोदयरचितं खद्योताभिधानमपरं, सुदर्शनाचार्यविरचितमपरञ्च व्याख्यानं मुद्रितमुपलभ्यते ।

अथ न्यायसूत्रवृत्तयः निरूप्यन्ते

मुक्तापीडनाम्नः काश्मीरनराधिपस्यामात्यपदमलङ्कृतवतः शक्तिस्वामिनः प्रपौत्राः जयन्तभट्टाः न्यायमञ्जर्याख्यं न्यायसूत्रवृत्तिग्रन्थं विरचयामासुः । एते चात्मानं वृत्तिकारं ब्रुवते न्यायमञ्जर्या उपान्तिमश्लोकेन—

'वादेष्वाप्तजयो जयन्त इति यो विख्यातकीर्तिः क्षिता-
वन्वर्थो नववृत्तिकार इति यं शंसन्ति नाम्ना बुधाः ।
सूनुर्व्याप्तदिगन्तरस्य यशसा चन्द्रस्य चन्द्रत्विषः
चक्रे चन्द्रकलावचूडचरणध्यायी स धन्यां कृतिम् ॥' इति ।

जयन्तपरिचयः

न्यायमञ्जर्यां न सर्वाणि न्यायसूत्राणि सावतरणं व्याख्यातानि । परन्तु प्रमाणादयः षोडश पदार्थाः तत्तत्सूत्रार्थवर्णनपूर्वकं प्रतिपादिताः । सूत्रेष्विव न सर्वेषां पदार्थानां लक्षणकथनानन्तरं परीक्षा प्रवर्तिता । अपि तु तत्तल्लक्षणानन्तरमेव । न्यायमञ्जर्यां द्वादशाह्निकानि । प्रथमे आह्निकषट्के प्रमाणानि विचारितानि । द्वितीये तु षट्के प्रमेयादीनि निग्रहस्थानान्तानि तत्त्वानि निरूपितानि । प्रमाणनिरूपकः प्रथमषट्कग्रन्थः विस्तृतः । तस्यार्धभागपरिमित एवोत्तरषट्कग्रन्थः । शाक्यमीमांसकादिमतनिरासपूर्वकं प्रमाणसामान्यलक्षणं, प्रत्यक्षादिविशेषलक्षणं, प्रमाणचतुष्ट्वं, तेषां परतः प्रामाण्यं, वेदस्य पौरुषेयत्वम्, ईश्वरस्थापनमित्येवमादयः न्यायदर्शनस्य सारभूता बहवः प्रमेयाः सविस्तरं नृत्यत्पदप्रायया पद्यमालागुम्भितया गभीरया मधुनिष्यन्दिन्या सरण्या व्युदपादिषत । अथर्ववेदस्य प्रामाण्यं प्राथम्यञ्च निरधारि युक्तिभिः । वेदापौरुषेयत्वविचारप्रसङ्गे कालिदासरचना कालिदासपद्यानुकारिणा

'अमृतेनेव संसिक्ताश्चन्दनेनेव चर्चिताः ।
चन्द्रांशुभिरिवोद्घृष्टाः कालिदासस्य सूक्तयः ॥'

इति पद्येन, बाणभट्टरचना च तदनुकारिण्या 'प्रकटरसानुगुणविकटाक्षररचनाचमत्कारितसकलकविकुला बाणस्य वाचः' इति फक्किकया च निरूपिता तेषां वश्यसरस्वतीकतां स्फुटयति । महाकवयोऽप्येते व्यञ्जनानिरूपणावसरे,

'अथवा नेदृशी चर्चा कविभिः सह शोभते ।
विद्वांसोऽपि विमुह्यन्ति वाक्यार्थगहनेऽध्वनि ॥'

इति वदन्तः कवीनधिक्षिपन्तीव लक्ष्यन्ते ।

'नमः शाश्वतिकानन्दज्ञानैश्वर्यमयात्मने ।
संकल्पसफलब्रह्मस्तम्भारम्भाय शम्भवे ॥'

इत्याद्यश्लोकेन मध्ये ईश्वराभिधानप्रसङ्गे चन्द्रार्धमौलिपदप्रयोगेन, अन्ते चन्द्रकलावचूडचरणध्यायी इत्यभिधानेन चैषां शिवे भगवति निरतिशयभक्तिमत्तां स्पष्टमवगच्छामः। एषां स्थितिकालः ८५०—९१० A.D. निर्धारितो विपश्चिद्भिः ।

## न्यायपरिशिष्टम्

न्यायाचार्यैः उदयनाचार्यैः न्यायसूत्राणां वृत्तिरपि बोधसिद्धिरिति न्यायपरिशिष्टमिति चाभिधानेन विख्याता व्यरचि । तस्याञ्च वार्तिकादिषु संक्षेपेण प्रदर्शितानि जातिनिग्रहस्थानानि तत्तदङ्गसाहित्येन सावान्तरप्रभेदं विस्तरेण निरूपितानि । जातीनां सामान्यतो दूषकताबीजं, तत्तज्जातीनामसाधारणं दूषकताबीजञ्च सुविशदं प्रत्यपादि । यदाहुः जातिनिग्रहस्थानपरिच्छेदयोः असकृत् न्यायपरिशिष्टं प्रमाणयन्तः वरदराजाः तार्किकरक्षायां

'प्रमादः प्रतिभाहानिरासामवसरः स्मृतः ।
सुलभं परिशिष्टेऽन्यद्वयं विस्तरभीरवः ॥'

इत्युपन्यस्य तद्विवरणे सारसंग्रहे, 'अन्यदुत्थानबीजं कुत्रचिद्धेत्वाभासे निपातनं प्रयोगफलं दोषमूलञ्चेति चतुष्टयं प्रबोधसिद्धिनामनि न्यायपरिशिष्टे विस्तृतमिति तत्परिश्रमशालिभिर्भाव्यम् । तत्र ह्येवमुक्तम्—

'लक्ष्यं लक्षणमुत्थितिः स्थितिपदं मूलं फलं पातनं
जातीनां सविशेषमेतदखिलं प्रव्यक्तमुक्तं रहः ॥' इति ।

वयन्तु संग्रहाधिकारिणः विस्तराद्भीत्या न व्याकृतवन्तः' इति । जातिनिग्रहस्थाननिरूपणे परमां प्रमाणपद्धतिमध्यास्ते न्यायपरिशिष्टम् ।

आन्वीक्षिकीनयतत्त्वबोधः

न्यायनिबन्धप्रणेतॄणां स्वातन्त्र्येण सूत्रवृत्तिप्रणयनमिव, निबन्धप्रकाशकृतामपि वर्धमानोपाध्यायानाम् आन्वीक्षिकीनयतत्त्वबोधाभिधाया न्यायसूत्रवृत्तेः प्रणयनमामनन्ति विपश्चितः ।

न्यायतत्त्वालोकः

१२९३ शकाब्देभ्यः पूर्वं मिथिलादेशाभिजनः खण्डनोद्धारन्यायसूत्रोद्धारादिप्रबन्धप्रणेता षड्दर्शनीवल्लभादाचार्यवाचस्पतिमिश्रादन्यः वाचस्पतिमिश्रः न्यायतत्त्वालोकाभिधां न्यायसूत्रवृत्तिमतनोत् । सुरेन्द्रलालशर्मभिः न्यायसूत्रनिर्णयविषये राधामोहनविद्यावाचस्पतिगोस्वामिभट्टाचार्यविरचितन्यायसूत्रविवरणस्य टिप्पण्यां प्रायः प्रमाणतयोपन्यस्तोऽयं न्यायतत्त्वालोकनामा वृत्तिग्रन्थः ।

विश्वनाथवृत्तिः

विद्यानिवासभट्टाचार्यसूनुः विश्वनाथन्यायपञ्चाननः बृन्दावनवासी न्यायसूत्रवृत्तिं व्यतनोत् । तत्र सूत्रपाठः भाष्यानुसारिसूत्रपाठात् कुत्रचित् विलक्षणः समुपलभ्यते । भाष्यस्थग्रहणकवाक्यानि क्वचित् सूत्रतया परिपठितानि । सूत्रपाठभेदविषये पक्षभेदा अत्र प्रदर्श्यन्ते । सूत्रार्थावधारणे अत्यन्तमुपकरोतीयं वृत्तिः । वाक्यरचना च नातिप्राचीनानामिव भाषासौन्दर्यपक्षपातिनी । एतत्कृतसिद्धान्तमुक्तावल्यां व्याप्तिलक्षणप्रस्तावे दीधितिग्रन्थस्योद्धारदर्शनादयं दीधितिकारानन्तरकालिक इति सामान्यतोऽवगम्यते । एतद्वृत्तेरवसाने स्वयं स्थितिकालोऽप्युक्तः—

'रसबाणतिथौ शकेन्द्रकाले बहुले कामतिथौ शुचौ सिताहे ।
अकरोन्मुनिसूत्रवृत्तिमेतां ननु बृन्दाविपिने स एव विश्वनाथः ॥' इति ।

अद्वैतवंशप्रसूतः मणिदीधितिव्याख्याता जगदीशतर्कालङ्कारादनन्तरकालिकः धर्मशालादिषु बहुनिबन्धप्रणेता राधामोहनगोस्वामिभट्टाचार्यः नवीनसरण्या न्यायसूत्रा-

णामर्थं विवृण्वन् न्यायसूत्रविवरणाभिधानं वृत्तिग्रन्थं रचयामास । तत्र ' संस्कारोद्भवा प्रत्यभिज्ञा ' इत्यधिकसूत्रमुपलभ्यते । विश्वनाथवृत्तिग्रन्थस्योद्धारोऽप्यत्र लक्ष्यते । अन्यच्च चतुर्थाध्यायस्यान्ते ' ननु वेदज्ञा अपि नानाविधतत्त्वमाचक्षते, तत्र किं समीचीनमित्यत आह ' इति पातनिकापूर्वकं ' तत्त्वं तु बादरायणात् ' इति सूत्रमुपन्यस्य तद्विवरणावसरे ' तथार्थदर्शी भगवानेव वेदं प्रणीतवानिति वेदस्यैव प्रधानप्रमाणतया तेन स्वमुखत एवोक्तानां तत्त्वानां व्यासेन युक्तिभिः दृढीकृततया तदुक्तानि तत्त्वान्यादरणीयानि । अस्माभिस्तु वेदविमुखे विवादनिरासाय वेदाभिहितमन्यथापि व्याख्याय प्रत्यक्षानुमाने पुरस्कृत्य तत्त्वान्यभिहितानिति नात्रादरणमिति सूचितम् ' इति निरूपयन्नयं स्वस्य वेदान्तदर्शने महतीं श्रद्धामाविष्करोति । तत्त्वं तु बादरायणादिति न्यायसूत्रं कुत्रापि अन्यत्र न्यायग्रन्थे सूत्रतया न निर्दिष्टमस्ति । परन्तु श्रीब्रह्मानन्दसरस्वतीविरचितलघुचन्द्रिकाव्याख्याने श्रीविठ्ठलेशोपाध्यायानां ' तदुक्तं तत्त्वं तु बादरायणात् ' इति निर्देशेन वाक्यस्यास्य प्रामाणिकतामवगच्छामः ।

### न्यायसिद्धान्तमाला

जगदीशतर्कालङ्कारादनन्तरकालिकः जयरामभट्टाचार्यः षोडशपदार्थनिरूपकाणां न्यायसूत्राणां व्याख्यानमयीम् आचार्यवर्धमानमणिकारदीधितिकारन्यायरहस्यकारप्रभृतीनां प्राच्यानां नव्यानाञ्चाभिसन्धिनिरूपिकां न्यायसिद्धान्तमालां निबबन्ध । तत्र वादादिकरणप्रकारः सम्यङ् निरूपितः । जातिनिग्रहस्थानानि लक्षितानि । मणिकण्ठवचनमुद्धृतं जातिनिरूपणप्रस्तावे । क्वचिच्च विना सूत्रं जातिलक्षणान्यभिहितानि । अन्ते मतान्तरमपि संगृहीतं वर्तते । परन्तु Prince of wales series विभागे मुद्रितोऽयं ग्रन्थः प्रमेयनिरूपणोपक्रमो दृश्यते । पूर्वं प्रमाणनिरूपकेणापि ग्रन्थभागेन भवितव्यमिति प्रतीयते ।

जगदीशतर्कालङ्कारगुरुभिः रामभद्रसार्वभौमैः न्यायरहस्याभिधानो वृत्तिग्रन्थः रचितः ; यं प्रबन्धं शब्दशक्तिप्रकाशिकायां ' न्यायरहस्ये अस्मद्गुरुचरणाः' इत्युद्घोषयन्ति जगदीशतर्कालङ्काराः ।

नव्यवैयाकरणमूर्धन्यैः नागेशभट्टैः न्यायसूत्राणां काचन वृत्तिर्विरचितेति ऐतिह्यविदो वदन्ति ।

इत्येवं निरूपिताः न्यायसूत्रवृत्तिग्रन्थाः ।

सूत्रकारकल्पस्य भासर्वज्ञस्य परिचयः

दशमे शतके काश्मीराभिजनो भासर्वज्ञः अपर इव सूत्रकारः न्यायसाराभिधं संक्षिप्तं सूत्रप्रायैर्वाक्यैः संदृब्धं प्रबन्धं निबबन्ध। तस्य अष्टादश व्याख्यानान्यासन्नित्याचक्षते ऐतिहासिकाः। ग्रन्थेऽस्मिन् न्यायसूत्रोदितान् षोडश पदार्थान् परिच्छेदत्रयेण निरूपयामास। प्रमाणे हेत्वाभासे अपवर्गे च प्राचीननैयायिकैः विसंवदते। प्रत्यक्षमनुमानमागम इति त्रीणि प्रमाणानि, तेषु उपमानादीनामन्तर्भावः, प्रमाणान्तरत्वानङ्गीकारेऽपि अर्थापत्तिप्रामाण्यपरीक्षावत् उपमानस्यापि प्रामाण्यपरीक्षा सूत्रकाररीया संगता, सूत्रकाराणां प्रमाणचतुष्ट्यत्वोक्तिः अधिकप्रमाणव्यवच्छेदपरा; उपमानादीनां त्रिषु प्रमाणेषु अन्तर्भावः इति सिद्धान्तस्तु ऊहापोहकुशलैः शिष्यैः स्वयमवगन्तुं शक्यत्वान्न कण्ठरवेणाभिहितः इति प्रत्यपादयत् ; तदुक्तं न्यायसारे तृतीयपरिच्छेदे, ‘ चतुष्ट्वाभिधानं सूत्रेषु पञ्चत्वादिनिराकरणार्थम्। न त्रित्वप्रतिषेधार्थम्। प्रमाणसिद्धत्वादन्तर्भावस्य। त्रित्वानभिधानादयुक्तमिति चेत् ; न, अस्य सूत्रकारस्यैवंस्वभावत्वात् यत् सिद्धान्तमपि कचिन्नाभिधत्ते। यथा कृत्स्नैकदेशविकल्पादिना अवयविनिराकरणे शिष्याणामूहनाशक्त्यतिशययुक्तानामधिकारः इति ज्ञापनार्थम् ’ इति। अनध्यवसितेन सूत्रानुक्तेन सह षट् हेत्वाभासाः ‘ असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः ’ इत्यादिना ग्रन्थेन सावान्तरप्रभेदं प्रपञ्चिताः। केवलायाः आत्यन्तिकदुःखनिवृत्तेः मोक्षस्वरूपत्वं निराकृत्य निजसंवेद्यमानसुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्षः इति व्यवस्थापयामास। अपिच सूत्रोक्तं द्वादशविधमपि प्रमेयं, चतुर्धा भाव्यमानस्य निःश्रेयसहेतुत्वमिति ज्ञापयितुं, संग्रहेण हेयं तस्य निर्वर्तकं, हानमात्यन्तिकं, तस्योपायः, इति चतुर्धा विभज्य प्रदर्शयामास। यदाह न्यायसारे, ‘ यद्विषयं ज्ञानमन्यज्ञानानुपयोगित्वेनैव निःश्रेयससाधनं भवति तत् प्रमेयम्। तदेव तत्त्वतो ज्ञातव्यं सर्वदा भावयितव्यञ्च। न तु कीटकसङ्ख्यादि, तज्ज्ञानस्यानुपयोगित्वात् ’ इति। अन्यच्च आत्मा द्विविधः परः अपरश्च। अपरः जीवः। तदीयज्ञानं परलोकसद्भावेन परलोकप्रवृत्त्युपयोगित्वात् अधर्मक्षयहेतुत्वाच्च निःश्रेयसाङ्गम्। परमात्मतत्त्वज्ञानञ्च परमात्मोपासनाङ्गत्वेनापवर्गसाधनम्। योगाभ्यासेन शिवसाक्षात्कारं प्राप्य मुक्तो भवति पुरुषः इति निःश्रेयसपद्धतिं प्रादर्शयत्।

परमात्मन्यभिधानीये महेश्वरपदं शिवपदञ्च प्रयुञ्जानः, ईश्वरसद्भावे 'एक एव रुद्रो न द्वितीयाय तस्थे' इति श्रुतिं परमात्मसाक्षात्कारस्य मोक्षहेतुत्वे च

'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥'

इति श्वेताश्वतरोपनिषदञ्च प्रमाणीकुर्वन्नयमात्मनः शिवभक्ततां प्रकटीचकार ।

न्यायसारस्य न्यायसारपदपञ्चिकाभिधानं लघु व्याख्यानमकरोत् भासर्वज्ञकालादनतिविप्रकृष्टकालिकः काश्मीराभिजनः वासुदेवपण्डितः । न्यायभूषणस्य न्यायसारव्याख्यानस्य अवबोधसामर्थ्यरहितानां कृते पदपञ्चिका विरचितेति स स्वयं व्याख्यानावसाने निरूपयति

'न्यायभूषणमहाम्बुधौ बुधा येऽलमाविचरितुं न जानते ।
तत्कृते कृतिरियं मया कृता न्यायसारपदपञ्चिकाभिधा ॥'

इति श्लोकेन ।

न्यायभूषणनामा प्रौढः प्रबन्धः, यमनेके प्रौढा प्रबन्धारः अनुवदन्ति । किन्तु केषुचिद्ग्रन्थेषु भूषणकार इति, लीलावत्यान्तु भूषणः इति चानुवादो दृश्यते । लीलावतीपर्यालोचनायां भूषणः इति ग्रन्थकर्तुर्नामेव भाति ।

न्यायभूषणनामकं व्याख्यानं स्वयमेव भासर्वज्ञो रचयामास ; यतः बहुषु निबन्धेषु भूषणोक्तस्य भासर्वज्ञोक्ततयानुवादो दृश्यते इति बहवो मन्यन्ते ।

अन्ये तु पदपञ्चिकाकारः, वासुदेव एव न्यायभूषणकारः निग्रहस्थाननिरूपणावसरे 'एवं प्रतिज्ञाविशेषहान्यादयः अस्माभिः न्यायभूषणे अभिहिताः इति तत्रैव ज्ञातव्याः' इति तेनाभिधानादिति वदन्ति । परन्तु अनन्तशयनसंस्कृतसीरीसूविभागे मुद्रिते न्यायसारव्याख्याने पदपञ्चिकाभिधाने 'एवं प्रतिज्ञाविशेषहान्यादयः अस्माभिः भूषणभूषणेऽभिहिताः' इति पाठदर्शनात् न्यायसारस्येव न्यायभूषणस्यापि भूषणभूषणनामकं व्याख्यानं तेन विरचितमिति भाति ।

### न्यायदर्शनसमानतन्त्रं वैशेषिकदर्शनम्

न्यायदर्शन-
समानतन्त्र-
परिचयः

कणादनामा चिरन्तनो महर्षिः योगाचारविभूत्या महेश्वरं तोषयामास । स च महेश्वरः उलूकरूपधारी पदार्थतत्त्वं तस्मै उपदिदेश । उपदिष्टं तत्त्वं दशाध्यायीरूपेण सप्तत्युत्तरत्रिशतसूत्रसंदृब्धेन वैशेषिकशास्त्रेणाधि-

कारिणो व्युत्पादयामास कणभक्षः । अत एवेदं दर्शनमौलूक्यदर्शनमिति व्यपदिशन्ति । अत्र द्रव्यादीनां षण्णां पदार्थानां साधर्म्यवैधर्म्यनिरूपणेन तत्त्वं व्युत्पादितम् । देहातिरिक्तस्यात्मनः सद्भावे प्रमाणानि बहुलं प्रतिपादितानि । उपक्रमे अवसाने च 'तद्वचनादाम्नायस्य प्रामाण्यम्' इति निरूपयदिदं शास्त्रं वेदप्रामाण्यस्थापने निर्भरमाविष्करोति । इदं दर्शनं न्यायदर्शनस्य समानतन्त्रमिति व्यवहरन्ति । न्यायमञ्जर्यां 'वैशेषिकास्तु अस्मदीया एव' इति जयन्तभट्टा घोषयन्ति । वैशेषिकोक्तपरमाण्वादिकं नैयायिकाभिमतमेव । अत एव निरवयवपरीक्षापि विहिता न्यायदर्शने । वैशेषिकदर्शने अभिधानादेव न्यायसूत्रे अनुक्तमपि मनसः इन्द्रियत्वं नैयायिकसिद्धान्तः इति व्यवस्थापयन्ति न्यायदर्शनव्याख्यातारः । यद्यपि प्रत्यक्षमनुमानमिति द्वे प्रमाणे स्वीकुर्वन्ति वैशेषिकाः ; नैयायिकास्तु चत्वारि प्रमाणान्यभ्युपगच्छन्ति इति अनयोर्दर्शनयोर्विमतिरस्ति, तथापि सा बहुषु संवाददर्शनात् न तयोः अत्यन्तविलक्षणतन्त्रतां प्रयोजयति । यतः नैयायिकेष्वेव क्वचन प्रमेये विवाददर्शनेऽपि दर्शनभेदो नाङ्गीक्रियते विपश्चिद्भिः । अतः वैशेषिकदर्शनं न्यायदर्शनकल्पमेवेति बोध्यम् । वैशेषिकदर्शनस्य चिरन्तनं रावणप्रणीतं भाष्यमस्तीति 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्' इति सूत्रस्य शाङ्करभाष्यटीकायां रत्नप्रभायां रामानन्दसरस्वतीवचनपर्यालोचनया ज्ञायते । वैशेषिकशास्त्रस्य प्रशस्तदेवाचार्यः पदार्थधर्मसंग्रहापराभिधानं भाष्यं व्यतानीत् । एनं मुनिं व्यपदिशन्ति केचित् । परे तु मुनिकल्पं वदन्ति ।

'प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।
प्रवक्ष्यते महोदयः पदार्थधर्मसंग्रहः ॥'

इति सूत्रकारप्रणामेनोपक्रम्य

'योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥'

इति सूत्रकृन्नमस्कारेणैव भाष्यमुपसंहरन्नयं प्रशस्तपादापराभिधानः प्रशस्तदेवाचार्यः स्वस्य सूत्रकारे महतीं भक्तिमाविष्करोति । श्रीवाचस्पतिमिश्राश्च न्यायवार्तिकतात्पर्यटीकायां 'यदाहुः पदार्थविदः' इति पदार्थवित्पदेनैनं व्यवहरन्ति ।

सूत्राहतप्रतिपादनक्रममरोचयमान इवायं भाष्यकारः सूत्रोक्तार्थप्रतिपादनमुखेन क्रमेण द्रव्यादीनां षण्णां पदार्थानां लक्षणानि साधर्म्यादीनि च व्युत्पादयति। क्वचिदेव किंचित्सूत्रमुपन्यस्यति। भाष्यशैली प्रसन्ना प्रौढा च।

वैशेषिके तन्त्रे हेत्वाभासाः अनपदेशा इति; अवयवाः प्रतिज्ञा, अपदेशः, निदर्शनम्, अनुसन्धानम्, प्रत्याम्नायः इति; द्रव्यगुणकर्माणि अर्थः इति च व्यवह्रियन्ते। बुद्धिः विद्याविद्याभेदेन द्वेधा विभक्ता। अविद्या संशयविपर्ययानध्यवसायस्वप्नभेदेन चतुर्विधा। विद्यापि प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा चतुष्प्रकारा। कोटिद्वयोल्लेखिनी स्थाणुर्वा पुरुषो वेत्यादिबुद्धिः संशयः। किंस्विदिति बुद्धिरनध्यवसायः इति वैशेषिकपद्धतिः। नवमाध्याये सूत्रेषु निरूपितमपि अभावप्रपञ्चं भाष्यकारो न व्युत्पादयांबभूव। प्रशस्तपादभाष्यस्य अष्टौ टीका वर्तन्ते।

भाष्यव्याख्यान परम्परापरिचयः

१ व्योमशिवाचार्यगुम्भिता व्योमवती, २ श्रीधराचार्यग्रथिता न्यायकन्दली, ३ न्यायाचार्योदयनाचार्यसंदब्धा किरणावली, ४ श्रीवत्सविरचिता लीलावती इति चतस्रः प्राचीनाः टीकाः। असंपूर्णतया प्रसिद्धा किरणावली गुणनिरूपणे प्रतिज्ञाव्याख्यानेऽवसिता लक्ष्यते।

(१) जगदीशतर्कालङ्कारनिबद्धा सूक्तिः, (२) पद्मनाभमिश्रविरचितः सेतुः, (३) कोलाचलमल्लिनाथसूरिग्रन्थितः भाष्यनिकषः यं मल्लिनाथ स्वयं तार्किकरक्षाव्याख्यायां निष्कण्टकाभिधायां स्मरति, (४) श्रीशङ्करमिश्रकृतं कणादरहस्यम् (तात्पर्यतो भाष्यविवरणपरम्) इति नवीनाः चतस्रः टीकाः।

किरणावल्यपि (१) पद्मनाभमिश्रविरचितकिरणावलीभास्करेण (२) वर्धमानोपाध्यायकृतकिरणावलीप्रकाशेन च व्याख्यानेन भूषितास्ति। किरणावलीप्रकाशश्च, (१) पक्षधरमिश्रान्तेवासिना भगीरथठक्कुरेण सन्दब्धया द्रव्यप्रकाशिकया (२) शिरोमणिभट्टाचार्यरचितया गुणदीधित्याख्याविख्यातया गुणप्रकाशविवृत्या च विलसति।

गुणप्रकाशविवृतिरपि, (१) मथुरानाथतर्कवागीशविरचितेन गुणदीधितिमाथुरीसमाख्याविख्यातेन गुणप्रकाशविवृतिरहस्येन, (२) रुद्रभट्टाचार्यग्रथितेन गुणप्रकाशविवृतिपरीक्षापराख्येन गुणप्रकाशविवृतिभावप्रकाशिकाव्याख्यानेन, (३) रामकृष्णकृतेन, (४) जयरामभट्टाचार्यकृतेन च व्याख्यानेन जेजीयते।

वृत्तिग्रन्थाः

सामान्यतः वैशेषिकदर्शनानुबन्धिग्रन्थपरिचयः

वैशेषिकसूत्रोपस्कारपर्यालोचनया वैशेषिकसूत्राणां प्राचीना (१) भारद्वाजवृत्तिरासीदित्यवगच्छामः । शङ्करमिश्रग्रथितः अवतरणार्थविवरणपरः (२) वैशेषिकसूत्रोपस्कारः वृत्तिग्रन्थः सूत्रार्थावधारणेऽतीवोपकारमादधानः व्युत्पादको जागर्ति । (३) जयनारायणतर्कपञ्चाननविरचिता विवृतिः, (४) चन्द्रकान्तभट्टाचार्यविरचिता भाष्यसंज्ञिता वृत्तिश्च मुद्रिते स्तः ।

न्यायलीलावती

एकादशे शतके मिथिलादेशमलङ्कृतवता वल्लभाचार्येण प्रौढां सरणिमवलम्ब्य वैशेषिकसिद्धान्तव्यवस्थापकः न्यायलीलावत्यभिधानः प्रबन्धो निरमायि । तच्चादरेण पुरातनसमये अध्यापयामासुः नैयायिकाः ।

(१) (१२५० A.D) वर्धमानोपाध्यायस्य न्यायलीलावतीप्रकाशः , (२) (१२७५ A.D) पक्षधरमिश्रस्य न्यायलीलावतीप्रकाशः, (३) (१४५० A.D) शङ्करमिश्रस्य न्यायलीलावतीकण्ठाभरणम् , (४) (१४५० A.D) वाचस्पतिमिश्रस्य द्वितीयस्य न्यायलीलावतीवर्धमानेन्दुः, (५) (१४७० A.D) रघुनाथस्य न्यायलीलावतीविभूतिः, (६) (१५७० A.D) मथुरानाथस्य न्यायलीलावतीरहस्यम् , (७) रामकृष्णभट्टाचार्यस्य न्यायलीलावतीप्रकाशः इति टीकासप्तकमतितरां भूषयति न्यायलीलावतीम् ।

रत्नकोशोऽपि वैशेषिकसिद्धान्तानुसारी प्रामाणिकः प्रबन्धोऽस्ति, यमनेके प्रौढाः प्रबन्धारः स्वीयग्रन्थेषु स्मरन्ति । एवं संक्षेपेण न्यायदर्शनसमानतन्त्रं वैशेषिकदर्शनं निरूपितं बोध्यम् ।

नव्यन्यायग्रन्थाः

त्रयोदशे शतके मिथिलाजनपदावयवदरभङ्गामण्डलान्तर्गतकरिजनग्रामाभिजनाः गङ्गेशोपाध्यायाः विहाय न्यायसूत्रव्याख्यानसरणिं, स्वातन्त्र्येणाक्षपादोपदिष्टस्य प्रमाणचतुष्टयस्य तत्त्वं मीमांसकादेः प्राचीननैयायिकानाञ्च मतविशेषनिरसनपूर्वकं पूर्वापरिशीलितया पद्धत्या व्युत्पादयन्तं द्वादशसहस्रग्रन्थपरिमितं महान्तमन्वर्थनामानं तत्त्वचिन्तामणिं प्रबन्धं निर्माय, नव्यन्यायमार्गप्रवर्तकतया महर्षिकल्पा विरेजिरे । यदीयतत्त्व-

चिन्तामणिग्रन्थस्याध्ययने अध्यापने व्याख्याने च समाकृष्टान्तरङ्गाः समेऽपि विद्वांसः मूलं न्यायदर्शनं तद्भाष्यं तद्व्याख्यानपरम्पराञ्चापरिशीलयन्तः सूत्रभाष्यादिकान् प्रबन्धान् गुहानिहितानकार्षुः । परन्तु प्रपौत्रेण पराजय इव नव्यन्यायग्रन्थेभ्यः चिरन्तनन्यायग्रन्थाभिभवोऽपि दर्शनप्रवर्तकानामाचार्याणां महते प्रमोदायैव कल्पेत । न्यायाचार्योदयनसमयं यावत् शाक्यपण्डिताः प्रतिपक्षाः न्यायदर्शनदूषका आसन् । अतः तेषां मतनिराकरणे, तदुद्भावितदूषणगणपरिहारे च बद्धहृदयः प्राञ्चः प्रबन्धारः प्रबन्धान् रचयामासुः । ततः परमुपरते शाक्यदिगम्बरादिकोलाहले, वैदिकदर्शनानुयायिनां दूषणप्रकारा एव समालोचयितव्या अभूवन् । तत्त्वचिन्तामणिग्रन्थे नैदम्पर्येण शाक्यसमयः निराकारि । परन्तु प्राभाकरमीमांसकमतनिरासे महानादरो लक्ष्यते गङ्गेशोपाध्यायानाम् । यदाहुः ते ग्रन्थोपक्रमे

' अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम् ।
तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरु-
र्गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम् ॥ ' इति ।

एतत्तनयानां वर्धमानोपाध्यायानां ग्रन्थेषु,

' न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने ।
गङ्गेश्वराय गुरवे पित्रेऽत्रभवते नमः ॥ ' इति ।

' यस्तर्कतन्त्रशतपत्रसहस्ररश्मिर्गङ्गेश्वरः सुकविकैरवकाननेन्दुः ।
तस्यात्मजोऽतिविषमं कुसुमाञ्जलिं तं प्राकाशयत्कृतिमुदे बुधवर्धमानः ॥ '

इति च दर्शनात् एतेषां मीमांसायामनितरसाधारणं वैदुष्यमवगम्यते । तच्च तत्त्वचिन्तामणौ सम्यक् प्रतिफलति । एतेषां मीमांसावैदुष्यं तन्मतनिराकरणायैवेति वयं प्रतीमः । मङ्गलवादादिषु प्रमाणचतुष्टयवादावसानेषु वादेषु, प्रायः गुरूणां मतस्य तदीयावान्तरमतप्रभेदनिरूपणपूर्वकं निरसनेन ' न्यायशास्त्रं गुरुमतञ्च ज्ञात्वा तयोः सारांशं निर्णीय न्यायसिद्धान्तं निरूपयामीति ' प्रतिज्ञातं निर्व्यूढमुपलभ्यते ।

### तत्त्वचिन्तामणिप्रतिपाद्यसंग्रहः

अथेदानीं साकल्येनाध्ययनाध्यापनागोचरस्य तत्त्वचिन्तामणेः प्रतिपाद्यार्थः संगृह्यते सुमनसां प्रीतये ।

प्रबन्धेऽस्मिन् मङ्गलफलं निरूप्य, आदिमे न्यायसूत्रे निःश्रेयसाधिगमहेतुतयाभिहिततत्त्वज्ञानविषयाणां सर्वेषामपि व्यवस्थितेः प्रमाणाधीनत्वात् प्रमाणतत्त्वमत्र विविच्यते इति प्रतिज्ञाय चतुर्भिः खण्डैः सूत्रोक्तं चतुर्विधमपि प्रमाणं तत्त्वतो विवेचितम् । अनुमानशब्दखण्डौ विस्तृतौ । ताभ्यामीषन्न्यूनः प्रत्यक्षखण्डः । अतिसंकुचितश्चोपमानखण्डः ।

प्रत्यक्षखण्ड-प्रतिपाद्यसंग्रहः

स्वतः परतो वा प्रमात्वस्यावधारणासंभवेन प्रमाणतत्त्वं दुरवधारणमित्याक्षेपोद्भावनमुखेनोपक्षिप्तः, न्यायभाष्यादिमवाक्योक्तस्य 'परतः प्रामाण्यं ज्ञायते' इति सिद्धान्तस्य स्थापकः प्रामाण्यवादः प्रमायाः परतः उत्पत्तिं प्रमालक्षणं च निरूप्य समापितः । ततश्च प्रमालक्षणप्रविष्टदलवैयर्थ्याक्षेपमिषेण अवान्तरपक्षभेदोपपादनपूर्वकं विशदीकृतं गुरुसंमतख्यातिवादं दूषयित्वा, अन्यथाख्यातिपक्षः व्यवस्थापितः । तदेवं सामान्यतो निरूपितायाः प्रमायाः प्रत्यक्षादिभेदेन चातुर्विध्यमभिधाय, प्रत्यक्षप्रमायाः सूत्रोक्तलक्षणपरिशीलनदिशा इन्द्रियार्थसंनिकर्षवादमुपक्षिप्य, संनिकर्षमध्यपतितं समवायं प्रसाध्य, विशेषणतासंनिकर्षेण इन्द्रियेणैवाभावो गृह्यते इति व्यावस्थापयितुं अनुपलब्धेः प्रमाणान्तरत्वं निरस्य, प्रसङ्गात् मीमांसकसंमतमभावस्याधिकरणात्मकत्वं निरस्यातिरिक्तत्वं प्रसाध्य, प्रत्यक्षविशेषे कारणानि सुखादिप्रत्यक्षे प्रत्यक्षलक्षणयोजनाय मनसः इन्द्रियत्वमणुत्वञ्च प्रतिपाद्य, प्रत्यक्षप्रमायां निरूपितायां प्रत्यक्षसूत्रे अव्यपदेश्यपदेनाभिहितस्य निर्विकल्पकस्य, व्यवसायात्मकपदोक्तस्य सविकल्पकस्य च तत्प्रभेदस्य तत्त्वं तत्तच्चोद्यपरिहारेण विशदीकृत्य प्रत्यक्षखण्डं समापयामासुः गङ्गेशोपाध्यायाः ।

अनुमान-खण्डप्रतिपाद्यसंग्रहः

अनुमितिलक्षणकथनपूर्वकमनुमानप्रामाण्यं व्यवस्थाप्य, तदुपयोगितया परसंमतलक्षणापाकरणपूर्वकं व्याप्तिस्वरूपं निरूप्य, व्याप्तिलक्षणसमन्वयप्रसङ्गेन सामान्याभावस्यातिरिक्ततां व्युत्पाद्य, विशेषव्याप्तिनिरूपणेन व्याप्तिवादः समाप्तिं नीतः । ततः मीमांसकाभिमतं व्याप्तिग्रहोपायं दूषयित्वा व्यभिचारज्ञानाभावसहकृतस्य सहचारज्ञानस्य तत्त्वं व्युत्पाद्य, व्यभिचारशङ्कानिवर्तकः तर्कः सपरिकरं व्युदपादि । ततः पक्षधर्मे हेतौ व्याप्तिज्ञानोपपत्तये सामान्यलक्षणप्रत्यासत्तिर्व्यवस्थापिता । ततः उपाधिज्ञानेन व्यभिचारावगमे व्याप्तिनिर्णयो न भवतीति उपाधिस्वरूपं तस्य दूषकताबीजञ्च निरणायि । इयता प्रबन्धेन हेतोः

गमकतानियामके व्याप्तिस्वरूपे निरूपिते, गमकतौपयिकी पक्षधर्मता पक्षतानिरूपणेन विशदीकृता । ततश्च ज्ञानद्वयादेवानुमितिरिति मीमांसकमतापाकरणपूर्वकं व्याप्तिविशिष्ट-पक्षधर्मतावगाहिनः परामर्शस्यानुमिहेतुता प्रसाधिता । इत्थमनुमाने निरूपिते, तत्प्रभेदः केवलान्वयी, केवलव्यतिरेकी, केवलव्यतिरेकिस्थापनप्रसङ्गेन तत्रैवार्थापत्तेरन्तर्भावश्च वर्णितः । ततः परार्थानुमानस्य न्यायसाध्यत्वात् प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मक-पञ्चावयवसमुदायो न्यायः सपरिकरं व्युदपादि । अवयवान्तेन ग्रन्थेन सद्धेतौ निरूपिते, अहेतवः हेत्वाभासाः पञ्च सावान्तरप्रभेदं लक्षिताः परीक्षिताश्च । एवं हेतुतदाभास-विवेचनेनानुमाने निरूपिते, 'एवमनुमाने निरूपिते तस्माज्जगन्निर्मातृपुरुषधौरेयसिद्धिः क्षित्यादौ घटवत्कार्यत्वेन सकर्तृकत्वानुमानात्' इति ग्रन्थेन ईश्वरसाधकमनुमान-मुपक्षिप्तं पक्षसाध्यहेतुनिष्कर्षनिरूपणपूर्वकं विस्तरेण व्युदपादि । ततः ईश्वरवत् कार्येण शक्तिरप्यतिरिक्तः पदार्थः सिद्ध्यतु इति मीमांसकशङ्कोत्थापिता, सहजाधे-यशक्तिसाधकयुक्तिदूषणेन सुदूरमुत्सारिता च । ततः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतेः अनुमानस्य परमप्रयोजनमपवर्गः' इत्यादिना प्रबन्धेन अपवर्गस्वरूपं तत्साधनञ्च निर्णीय, 'तदस्यापवर्गस्य परमपुरुषार्थस्य श्रुतिसिद्धं कारणमनुमानमिति विविक्तम्' इति वचनेनानुमानखण्डमुपसमहार्षुर्मणिकाराः ।

उपमानखण्ड-प्रतिपाद्यसंग्रहः

मीमांसकसंमतां सादृश्यस्यातिरिक्तपदार्थतां मीमांसकजरन्नैया-यिकादिसंमतमुपमानस्वरूपञ्च निराकृत्य, उपमानप्रमाणं सुष्ठु निरू-पितं परिमितेनोपमानखण्डेन ।

शब्दखण्ड-प्रतिपाद्यसंग्रहः

बौद्धवैशेषिकमते निराकृत्य, वैदिकशब्द एव प्रमाणं लौकिक-स्त्वनुवादकः इति मीमांसकमतं च व्युदस्यादौ शब्दखण्डे शब्दस्य प्रामाण्यमवधारितम् । ततः शब्देन संसर्गबोधे जननीये सहकारि-तया अपेक्षितानामाकाङ्क्षायोग्यतासत्तितात्पर्याणां व्युत्पादनमकारि । तात्पर्यनिरूपण-प्रसङ्गेन वेदस्य पौरुषेयत्वं प्रसाध्य तत्सिद्धये न्यायसूत्रेषु ऐदम्पर्येणोक्तं शब्दानित्यत्वं युक्तिनिकुरुम्बैः निर्व्यूढम् । ततः शब्दस्यानित्यत्वात् पुरुषविवक्षाधीनानुपूर्व्यादिविशिष्ट-वर्णसमूहात्मकपदसमुदायस्वरूपवाक्यनिकुरुम्बस्य वेदस्यानित्यत्वमुक्त्वा, तस्य प्रवाहावि-च्छेदलक्षणापि नित्यता, अप्रत्यक्षश्रुतिमूलकाचारमूलानां श्रुतीनामुच्छेदस्थापनेन निरा-कारि । ततः वेदस्याचारमूलत्वं प्रवर्तकज्ञानजनकतयेति प्रवर्तकं ज्ञानं निरूपितम् ।

तत्रापि गुरूणामभिमतं कार्यताज्ञानं प्रवर्तकमिति पक्षः सविस्तरमुपपाद्य दूषितः । ततः स्वमतेन बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वसहितेष्टसाधनताज्ञानस्य प्रवर्तकत्वं व्युत्पाद्य लिङर्थः स्पष्टीकृतः। ततः अपूर्वं लिङर्थ इति गुरुमतञ्चोपपाद्य निराकारि। ततः प्रसङ्गात् अर्थवादानां प्रामाण्यं व्यवस्थापयितुं पदानां कार्यान्विते शक्तिरिति प्राभाकरपक्षम् अन्विते शक्तिरिति पक्षञ्च निराकृत्य, तत्प्रसङ्गात् भाट्टप्राभाकरश्रीकरमण्डनमिश्रादिमतभेदेन विशदीकृतं जातिशक्तिवादं दूषयित्वा जात्याकृतिविशिष्टव्यक्तौ पदानां शक्तिः व्यवस्थापिता । तत्प्रसङ्गात् शक्तिस्वरूपं लक्षणास्वरूपं तत्र पक्षभेदाश्च सविस्तरं निरूपिताः। ततः समासे एकार्थीभावं निराकर्तुं समासपदाधीनान्वयबोधसरणिः प्रदर्शिता । ततः आख्यातस्य धातोश्चार्थं निर्णीय, उपसर्गस्य द्योतकतां व्युत्पाद्य शब्दप्रमाणं साकल्येन व्युदपादि । ततः चेष्टादीनामतिरिक्तप्रमाणतां व्युदस्य 'अतः सिद्धं चत्वारि प्रामाणानीत्युपरम्यते ' इति उपसमहारि तत्त्वचिन्तामणिः।

मणिकार-परिचयः

ऐदम्पर्येण प्रमाणतत्त्वविवेचने प्रवृत्ता अपि मणिकाराः सुवर्णतैजसत्ववायुप्रत्यक्षत्वसमवायाभावादिप्रमेयानुबन्धिविचारानपि स्वग्रन्थे योजयामासुः । अत्र एकैकोऽपि वादः महापूर्वपक्षतत्सिद्धान्तनिरूपणात्मना प्रवर्तितः। इदमन्यादृशमेषां गाम्भीर्यं यत् दूषणावसरे प्रलपितविलपिततुच्छादिशब्दाः न जातु प्रयुज्यन्ते, प्रायः दूषणीयग्रन्थप्रणेतृनामधेयमपि नोल्लिख्यते । ईदृक्षे महति निबन्धे वाचस्पतिमिश्राः जयन्तभट्टः रत्नकोशकार, इत्यादिकतिपयग्रन्थकारनामैव निर्दिष्टं लक्ष्यते । प्रायः सर्वत्र प्रदेशे रत्नकोशकारमतं दूष्यते । नवीनपदेन सौन्दडोपाध्यायाः निर्दिश्यन्ते । एतच्च मथुरानाथकृतरहस्यव्याख्यया अवगच्छामः । व्याप्तिवादे पूर्वतनानां शाक्यवाचस्पतिमिश्रोदयनाचार्यलीलावतीकारभूषणकारादीनां सर्वेषां लक्षणान्यनूद्य दूषितानि । परन्तु तत्तलक्षणकर्तुर्नाम नोट्टङ्कितम् । सहजाधेयशक्तिनिरूपणादिषु आचार्यसरणिमवलम्ब्य प्रवृत्तेषु वाक्यान्यपि तदीयान्येव कचिल्लक्ष्यन्ते । प्रतिपाद्यानां प्राचीनन्यायग्रन्थोक्तापेक्षया दुरूहत्वात् प्रतिपादनशैली साधारण्येवादृता न विकटा । एषां परिष्कारश्च न गदाधरभट्टाचार्यादिविरचितग्रन्थनिरूपित इव परिष्कृतः । किन्तु विलक्षणः । यथा साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गत्वमित्यादि । एते चोपाध्यायाः मणिकाराभिधानेन ग्रन्थेषूपनिबध्यन्ते । न्यायदर्शननव्यमार्गप्रतिष्ठपकानामेषां ग्रन्थावसाने

'धीराः कुशाग्रधिषणा भवतः प्रणम्य
मौलौ विधाय करवारिरुहे समीहे ।
वाणीयमर्थरहितापि विशृङ्खलापि
सानुग्रहेण हृदयेन विलोकनीया ॥'

इति प्रार्थना विद्याफलं विनयातिशयमन्तर्वाणिकुलासुलभं प्रकटीकरोति ।

अथ तत्त्वचिन्तामणिव्याख्या निरूप्यन्ते—

चिन्तामणिप्रकाशः

गङ्गेशोपाध्यायात्पितुरेवाधिगतन्यायविद्याः वर्धमानोपाध्यायाः प्रायः उदयनाचार्यरचितग्रन्थानां व्याख्यातारः चिन्तामणिप्रकाशनामकं व्याख्यानं विरचयामासुः । तेषां गुरुः पितैवेति तदीयेषु ग्रन्थेषु 'गङ्गेश्वराय गुरवे पित्रेऽत्रभवते नमः' इति तदीयवचनादवगम्यते । त्रयोदशशतकस्य द्वितीयभागः एषां स्थितिकालः इति वदन्ति ।

चिन्तामण्यालोकः

त्रयोदशशतकान्त्यभागे महादेवसूनुः पितृव्यात् हरिमिश्रादधिगतन्यायतत्त्वः मैथिलः जयदेवमिश्रः पक्षधरमिश्रापराख्याविख्यातः चिन्तामण्यालोकनाम्नीं टीकां व्यातेने । अयञ्च कविः प्रसन्नराघवनाटकस्य चन्द्रालोकस्य च प्रणेता पीयूषवर्षापरनामधेयः । एवं नैयायिकाः प्रामाणिकमूर्धन्यं मन्यन्ते । अस्यान्तेवासिनः वासुदेवमिश्ररुचिदत्तोपाध्यायभगीरथठक्कुरप्रभृतयः बहवो मैथिलाः अन्तर्वाणिकुलललामभूताः प्रबन्धप्रणेतार आसन् ।

न्यायसिद्धान्तसारः

पक्षधरमिश्रस्य भ्रातृपुत्रः तस्यान्तेवासी च वासुदेवमिश्रः न्यायसिद्धान्तसाराभिधां चिन्तामणिव्याख्यां निर्ममे ।

चिन्तामणिप्रकाशः

पक्षधरमिश्रान्तेवासी मैथिलः रुचिदत्तोपाध्यायः कुसुमाञ्जलिमकरन्दादिप्रणेता चिन्तामणिप्रकाशनाम्नीं टीकां रचयामास । सा च शब्दखण्डस्य कचिद्भागे मुद्रिता, यामसकृत् मुद्राप्यमाणन्यायरत्नव्याख्याता नृसिंहयज्वा प्रमाणतयोपन्यस्यति द्युतिमालिकायाम् ।

चिन्तामणिमयूखः

पक्षधरमिश्रसमानकालिकः दरभङ्गाप्रदेशाविदूरवर्तिनि ग्रामे लब्धजन्मा मैथिलः खण्डनखण्डखाद्यव्याख्यावैशेषिकसूत्रोपस्कारकणादरहस्यादिबहुनिबन्धनिर्माता शङ्करमिश्रः चिन्तामणिमयूखनाम्नीं व्याख्यां निर्ममे । अयञ्च शिवभक्तः; यदाह उपस्कारग्रन्थावसाने

'अकृत भवानीतनयो भवनाथसुतो भवार्चने निरतः ।
एतं कणादसूत्रोपस्कारं शङ्करः श्रीमान् ॥' इति ।

शङ्करमिश्रसमकालिकः खण्डनोद्धारादिप्रबन्धप्रणेता वाचस्पतिमिश्रः द्वितीयः चिन्तामणिव्याख्यां कामपि चकारेति वदन्ति ।

इदानीन्तनदरभङ्गाराजकुलमूलपुरुषः पक्षधरमिश्रान्तेवासिभगीरथठक्कुरस्यानुजः वाग्देवीकृपया मिथिलादेशसंपादकः मेघठक्कुरापराभिधानो महेशठक्कुरः मिश्रकृतस्यालोकस्य दर्पणनाम्नीं टीकां व्यातेने, यत्रालोकदूषणानि पराकृतानि ।

एवं मधुसूदनठक्कुराभिधेन विदुषा चिन्तामण्यालोककण्टकोद्धारो रचित इति वदन्ति ।

सारावली

वङ्गदेशीयाः नवद्वीपवासिनः महेश्वरविशारदसूनवः वासुदेवसार्वभौमाः मिथिलायां पक्षधरमिश्रसहपाठिनः सारावलीनाम्नीं चिन्तामणिटीकां निर्ममिरे । तत्र च यज्ञपत्युपाध्यायादीनां मतं निरूपितमस्ति । एतेषां समयमारभ्यैव वङ्गदेशे नव्यन्यायशास्त्रस्य महती अभिवृद्धिः समजायत । एभ्यः पूर्वं यज्ञपत्युपाध्यायप्रगल्भविशारदचक्रवर्तिप्रभृतयः चिन्तामणिव्याख्यातार आसन्निति तत्र तत्र ग्रन्थे तेषां लक्षणानुवाददर्शनात् ज्ञायते । ते ग्रन्थविशेषाः न लभ्यन्ते । 'येन चिन्तामणौ टीका दशटीकाविभञ्जिनी' इति वेदान्तपरिभाषापद्यव्याख्यानस्य श्रीरामकृष्णदीक्षितीयस्य पर्यालोचनया यज्ञपत्युपाध्यायकृतटीकायाः प्रभा इति नामधेयमवगम्यते ।

न्यायशास्त्राध्ययने निर्वृत्ते मिथिलायां प्रवर्तितशलाकापरीक्षया परीक्षिता एते वासुदेवविद्वांसः सार्वभौमबिरुदेनालङ्कृता विरेजिरे ।

वासुदेवसार्वभौमसूनुः ज्ञानेश्वरवाहिनीपतिमहापात्रमहोदयः पक्षधरमिश्रविरचितस्य शब्दखण्डमण्यालोकस्य उद्द्योतनामकं व्याख्यानं व्यातेने ।

वङ्गदेशीयैः हरिदासन्यायालङ्कारभट्टाचार्यैः तत्त्वचिन्तामणिप्रकाशः, जानकीनाथभट्टाचार्यचूडामणिभिः मणिमरीचिनिबन्धश्च व्यरचि ।

तर्कचूडामणिः

द्रविडदेशीयैः कण्डरमाणिक्याग्रहाराभिजनैः विख्यातैः वेदान्तपरिभाषाकारैः धर्मराजाध्वरीन्द्रैः चिन्तामणिप्रकाशस्य तर्कचूडामणिनामकं व्याख्यानं विरचितमस्ति, यत्र दशटीका दूषिताः तत्र तत्र ।

तदुक्तं वेदान्तपरिभाषायाम्,

'येन चिन्तामणौ टीका दशटीकाविभञ्जिनी ।
तर्कचूडामणिर्नाम कृता विद्वन्मनोरमा ॥' इति ।

दीधितिः

शिरोमणिभट्टाचार्यपरिचयः

वङ्गदेशीयाः वासुदेवसार्वभौमान्तेवासिनः रघुनाथतार्किकशिरोमणिभट्टाचार्याः सकलटीकातिशायिनीमतिगभीरां दीधितिनाम्नीं चिन्तामणिटीकां वितेनिरे । यदाहुः गदाधरभट्टाचार्याः अनुमानदीधितिव्याख्यानोपक्रमे

'अभिवन्द्य मुहुः समादरात्पदपाथोजयुगं मुरद्विषः ।
विवृणोति गदाधरः सुधीरतिगम्भीरगिरः शिरोमणेः ॥' इति ।

एतेषां संक्षेपेणार्थजातनिरूपणे अत्यन्तं कौशलं गदाधरभट्टाचार्याः प्रत्यक्षचिन्तामणिव्याख्योपक्रमगतेन,

'नत्वा नन्दतनूजसुन्दरपदं स्मृत्वा गुरोरादरा-
दुर्वीमण्डलमण्डनायितयशोराशेरशेषा गिरः ।
संक्षिप्तोक्त्यतिदक्षदीधितिकृतः प्रत्यक्षचिन्तामणि-
व्याख्यां व्याकुरुते गदाधरसुधीर्मोदाय विद्यावताम् ॥'

इति पद्येन वर्णयन्ति । प्राचीनानां व्याख्यानभेदाः पराक्रियन्ते दीधितौ । विषयशोधनतत्पराः स्वगुरूणां सार्वभौमानामपि मतं दूषयन्ति । व्याप्तिपक्षधर्मतादिनिरूपकेषु प्रकरणेषु महता संरम्भेण तन्मतनिराकरणं दृश्यते । अयन्तु विशेषः यत् सार्वभौमनामनिर्देशो वा गुरुचरणशब्देनाभिधानं वा न क्रियते इति । दीधितिः न सर्वमपि चिन्ता-

णिग्रन्थं विवृणोति । केवलव्यतिरेकिप्रकरणम्, अर्थापत्तिप्रकरणं, हेत्वाभासानामसाधकतासाधनप्रकरणं, शक्तिमोक्षादिप्रकरणम् इत्यादयो मणिभागाः मनागपि न व्याख्याताः ।

एतैश्च अनुमितिलक्षणव्याप्तिस्वरूपसामान्याभावहेत्वाभासलक्षणादिनिरूपकेषु प्रकरणेषु द्वित्राणि चिन्तामणिवाक्यान्युपादाय, सकलनैयायिकहृदयानन्ददायिनी परिष्कार कल्पनापद्धतिरुद्धाटिता, यथैव दार्शनिकास्सर्वेऽपि सञ्चरन्ते । बहुषु स्थलेषु मूलकारेण विसंवदमाना एते मूलोक्तं केवलान्वयिनं दूषयन्ति । हेत्वाभासप्रकरणेषु मूलव्याख्यानन्तरं मूलदूषणं स्वातन्त्र्येण तत्तद्विभाजकनिरूपणञ्च बहुलमुपलभ्यते । दीधितिग्रन्थोऽयं व्याख्यापदेशेन प्रवृत्तोऽपि मूलग्रन्थव्यपदेशमर्हति । युक्तिप्रधाने चास्मिन्न्यायशास्त्रे मूलकारादिदूषणं न दोषाय । आहुश्च गदाधरभट्टाचार्या व्युत्पत्तिवादे, 'न हि कस्यचिद् ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद्वस्तुसिद्धौ बाधकम्' इति । इमे च शिरोमणिभट्टाचार्याः आख्यातवादः नञ्वादः एवकारवादः इत्यादीन् शाब्दबोधानुबन्धिप्रमेयव्युत्पादकान् प्रबन्धान् निर्ममिरे । एते विद्वन्मण्डले तार्किकशिरोमणिबिरुदेन संभाविताः आत्मानं कविं वदन्ति 'रघुनाथकवेरपेतदोषा' इति पद्ये । एते पक्षधरमिश्रापराभिधजयदेवमिश्रपाण्डित्यसमाकृष्टचित्ताः मिथिलां गत्वा जयदेवमिश्रसकाशादपि न्यायविद्यायां प्रकृष्टं नैपुणमवापुरिति वदन्ति । मणिदीधितिप्रचारणेन प्राक्तनाः सर्वेऽपि आलोकादयः मणिव्याख्याननिबन्धाः नैयायिकलोकेऽन्तर्हिता अभूवन् । आत्मतत्त्वविवेकविवृतिः किरणावलीप्रकाशः इत्यादयोऽपि प्राचीनन्यायग्रन्थ व्याख्यारूपा निबन्धाः एभिः संदृब्धाः । सर्वग्रन्थेषु

'ओं नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥'

इति मङ्गलश्लोकनिबन्धनं, खण्डनखण्डखाद्यटीकाकरणञ्चैतेषामद्वैतशास्त्राभिनिवेशं स्फुटयति । स्वातन्त्र्येण तत्त्वार्थचिन्तका एते न श्रद्धामात्रेण महर्षिप्रोक्तमप्यनुमन्यन्ते ।

अत एव पदार्थखण्डननामा प्रबन्धः वैशेषिकशास्त्रसंमतपदार्थदूषणपरः व्यरचि । स्वयञ्चाहुः अनुमानदीधितिसमाप्त्यवसरे,

' विदुषां निवहैरिहैकमत्याद्यदुदुष्टं निरटङ्कि यच्च दुष्टम् ।
मयि जल्पति कल्पनाधिनाथे रघुनाथे मनुतां तदन्यथैव ॥ ' इति ।

दीधितिग्रन्थस्यान्यापरिशीलितसरण्या निर्माणं

' परजुष्टनयान्निवर्तमाना मननास्वाद्यरसा विशुद्धबोधैः ।
रघुनाथकवेरपेतदोषा कृतिरेषा विदुषां तनोतु मोदम् ॥ '

इति पद्येन, कतिपयसुधीमात्रसंवेद्यरहस्यार्थत्त्वं च,

' न्यायमधीते सर्वः कुरुते कुतुकान्निबन्धमप्यत्र ।
अस्य तु किमपि रहस्यं केचन विज्ञातुमीशते सुधियः ॥ '

इति पद्येन च स्वयं घोषयन्ति ।

' मान्यान्प्रणम्य विहिताञ्जलिरेष भूयो
भूयो विधाय विनयं विनिवेदयामि ।
दूष्यं वचो मम परं निपुणं विभाव्य
भावावबोधविहितो न दुनोति दोषः ॥ '

इति पद्येनाभिसन्धिवेदिनां दूषणं मनो न क्लेशयतीत्युक्तिः मत्सरिणां बहूनां तद्ग्रन्थदूषणलम्पटानामवस्थितिं लोकोत्तरप्रतिभाशालिविद्वज्जनसुलभां सूचयति । एते च शिरोमणिभट्टाचार्यपदेम शिरोमणिपदेन च न्यायग्रन्थेषु दर्शनान्तरनिबन्धेषु च सबहुमानं प्रतिपाद्यन्ते ।

## तत्त्वचिन्तामणिरहस्यम्

मथुरानाथतर्कवागीशाः व्युत्पादकं पाठनोपयुक्तं सरलया शैल्या संदृब्धं रहस्यनामकं चिन्तामणिव्याख्यानं तेनिरे । एतान् शिरोमणिभट्टाचार्यान्तेवासिनो वदन्ति केचित् । व्याख्यानवैमत्यनिरूपणे भट्टाचार्याभिधानेनैव रघुनाथशिरोमणीन् प्रतिपादयन्ति । परन्तु तद्ग्रन्थेन तेषां पिता श्रीराम एव गुरुरिति ज्ञातुं प्रभवामः । यदाहुः रहस्योपक्रमे,

' न्यायाबुधिकृतसेतुं हेतुं श्रीराममखिलसंपत्तेः ।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा ॥

श्रीमता मधुरामाथतर्कवागीशधीमता ।
विशदीकृत्य दर्श्यन्ते प्रत्यक्षमणिफक्किकाः ॥ ' इति ।

नात्र तातस्येव रघुनाथशिरोमणेर्नामनिर्देशगन्धोऽप्यस्ति । स्वीयग्रन्थस्याध्यापनोपयोगितां स्वयमेव निरूपयन्ति,

' आन्वीक्षिकीपण्डितमण्डलीषु सत्ताण्डवैरध्ययनं विनापि ।
मदुक्तमेतत्परिचिन्त्य धीराः निश्शङ्कमध्यापनमातनुध्वम् ॥ '

इति पद्येन । अनुपूर्व्येण मूलार्थविशदीकरणादत्यन्तमुपकरोति व्युत्पित्सूनामयं रहस्यग्रन्थः । एतैः आख्यातवादस्य शिरोमणिग्रथितस्य व्याख्या निरमायि । सापि रहस्येन सहैव मुद्रितास्ति ।

### तत्त्वचिन्तामणिदीपनी

अष्टादशशतकस्यावसाने संभाव्यमानस्थितिकाः वङ्गदेशीयाः शब्दशक्तिप्रकाशिकाव्याख्यातारः श्रीकृष्णकान्तविद्यावागीशाः तत्त्वचिन्तामण्युपमानखण्डस्य दीपनीं व्याख्यां रचयामासुः । ग्रन्थोपक्रमे ' तृतीयचिन्तामणिमाधुरी पुनः सुदुर्लभा चेति परिश्रमो मम' इति उपमानखण्डमाधुर्या अलाभस्य स्वस्य व्याख्याकरणे निमित्ततां ब्रुवाणा एते तदानीं माधुर्याः सकलविद्वज्जनसमादरं सूचयन्ति । सरलया सरण्या आनुपूर्व्येण मूलार्थनिरूपिका दीपनी माधुरीप्रतिनिधिभावं सम्यगर्हति ।

एवं संक्षेपेण तत्त्वचिन्तामणिव्याख्या निरूपिताः ।

अथ दीधितिव्याख्या निरूप्यन्ते—

(१) भवानन्दवागीशेन संक्षिप्ता दीधितिव्याख्या निरमायि । सा च मुद्रिता व्याप्तिग्रहोपायपर्यन्तम् । भवानन्दं केचिन्मधुरानाथान्तेवासिनं मन्यन्ते । परे तु शिरोमणिभट्टाचार्यान्तेवासिनं मन्वते ।

(२) श्रीकृष्णदाससार्वभौमविरचिता दीधितिप्रसारिणी संक्षिप्ता व्याख्या कलिकातानगर्यां व्याप्तिग्रहोपायप्रकरणपर्यन्तं मुद्रिता वर्तते ।

(३) न्यायरहस्यप्रणेतुः रामभद्रसार्वभौमस्यान्तेवासिनः जगदीशतर्कालङ्काराः दीधितिं व्याचख्युः । एते शिरोमणिभट्टाचार्यवदेव संक्षिप्तोक्तिप्रियाः गुरुचरणास्त्व-

त्यादिना गुरूणामाशयमनूद्य दूषयन्ति । प्राच्यानां व्याख्यातॄणां यथाभूतदीधिति-ग्रन्थाशयापरिज्ञानमेव स्वस्य व्याख्यानिर्माणे प्रेरकमिति वदन्ति ।

यदाहुः अनुमानदीधितिव्याख्यानावसाने—

‘कुर्वन्ति नित्यमनुमानमणेरनेके प्रायः प्रयासमधिदीधिति नीतिभाजः ।
एषा पुनस्तदपि नैव निजं निरूढमर्थं प्रकाशयति तेन ममैष यत्नः ॥’

इति,

‘प्राच्यैरनुचितविविधक्षोदैः कलुषीकृतोऽप्यधुना ।
दीधितियुतमणिरेष श्रीजगदीशप्रकाशितः स्फुरतु ॥’ इति च ।

इयञ्च व्याख्या जागदीशीति विख्याता उत्तरदेशेष्वध्याप्यते । तस्मिंश्च समये वङ्गदेशे सर्वेऽपि नैयायिकाः स्वपाण्डित्यं तत्त्वचिन्तामणिव्याख्यादीनां व्याख्यानकरणेन प्रकटीचक्रुः ।

सप्तदशशतके जगदीशतर्कालङ्काराणां वार्धकसमये प्रादुरासन् गदाधरभट्टाचार्याः, यान् विश्वविख्यातकीर्तेः चिन्तामणिव्याख्यातुः हरिरामतर्कवागीशस्यान्तेवासिनो वदन्ति । स्वान्तेवासिने पाण्डित्यख्यापकं विरुदमवितीर्यैव दिवं गते हरिरामतर्कवागीशे, तदीयान्तेवासिषु अप्राप्तविरुदानां गदाधरभट्टाचार्याणां शिष्यभावमरोचयमानेषु प्रस्थितेषु, गङ्गातीरप्रापणमार्गवर्तिन्यारामे वृक्षान् अनितरसाधारण्या विषयपरिशोधनपरिपाट्या अध्यापयामासुर्गदाधरभट्टाचार्याः । तदा अन्यापरिशीलितया तदीयप्रतिपादनपद्धत्या समाकृष्टा बहवस्तेषां विनेया बभूवुः । एते चातीव विनीताः न कस्यापि मतं नामधेयनिर्देशपुरस्सरं दूषयन्ति, न वा प्रलपिताद्यरुन्तुदशब्दान् प्रयुञ्जते दूषणावसरे । सरला विस्तृता च भट्टाचार्याणां वैखरी । न कापि दीधितिपङ्क्तिरस्ति, या भट्टाचार्यैरवतार्य न विवृता । प्रतिवाक्यं तदर्थविषयविचारपूर्वपक्षसमाधाननिरूपणप्रणाली सर्वामपि व्याख्यानशैलीमतिशेते । व्युत्पन्नमतयः तदीयग्रन्थार्थावधारणाय न टीकामपेक्षन्ते । उपरितनाक्षेपसमाधानावगतये परमपेक्षन्ते । न किमपि प्रकरणमस्ति यत्र शाब्दबोधो न विचारितः । प्रामाण्यवादोपक्रमे ‘नत्वा नन्दतनूजसुन्दरपदम्’ इत्यादेः, नञ्वाददीधितिव्याख्यानोपक्रमे

‘राधामुखाब्जमधुमत्तमधुव्रतश्रीकृष्णस्य पादयुगलं शिरसा प्रणम्य ।
नञ्वादसंगतशिरोमणिगूढभावं श्रीमान् गदाधरसुधीर्विशदीकरोति ॥’

इति मङ्गलश्लोकनिबन्धनेन च श्रीकृष्णभक्ता एते इत्यवगच्छामः । भगवत्याः पार्वत्याः प्रसादेन स्वस्य बुद्धिकौशलं सञ्जातमिति बाधग्रन्थावसाने

'गिरीन्द्रदुहितुर्नमत्सुरवरावतंसीभवत्पदाम्बुजरजःकृपाकलिततीक्ष्णधीसंपदा ।
गदाधरविनिर्मिता कठिनतर्कदुर्गाटवीनवीनपदवी मुदं वितनुतां सदा धीमताम् ॥'

इति पद्येन वर्णयन्ति । एतैश्च दीधितिव्याख्या, शब्दमणिव्याख्या, शब्दमण्यालोकव्याख्या, आत्मतत्त्वविवेकदीधितिटीका इत्यादयो व्याख्यानग्रन्थाः, विधिस्वरूपविचारः विषयतावादः, मुक्तिवादः, प्रतिबन्धकतावादः, विशिष्टवैशिष्ट्यवादः, व्युत्पत्तिवादः, शक्तिवाद इत्यादयः चतुःषष्टिः स्वतन्त्रग्रन्थाश्च विनिर्मिता राजन्ते ।

चिन्तामणेरनुमानखण्डस्यैवातीव प्रचारः पण्डितमण्डलीषु । यतः अनुमानप्रधानायामान्वीक्षिक्याम् अनुमाननिरूपणस्यैव मुख्यतयोपादेयता । यदाहुः मथुरानाथभट्टाचार्याः अनुमानमणिव्याख्यानप्रारम्भे 'यद्यपीदं बहुभिः बहुषु बहुधा चर्वितं, ज्ञायते च कैश्चित् हेत्वाभासान्तम्; तथापि तन्नानास्थानविततमशेषाप्रकाशकं बहुतरकुतर्कसंवलितमसांप्रदायिकञ्च । अतो व्यामोहायैव केवलं सर्वेषां भवति' इति । आहुश्च जगदीशतर्कालङ्काराः 'कुर्वन्ति नित्यमनुमानमणेरनेके प्रायः प्रयासमधिदीधिति नीतिभाजः' इति ।

अनुमानदीधितिव्याख्या गादाधरी अनुमानजागदीश्यपेक्षया द्विगुणग्रन्थसंख्यापरिमिता चकास्ति । दक्षिणदेशे गादाधरीमेव पठन्ति पाठयन्ति च विद्वांसः । दीधितिकाराणां मणिकारैरिव, एषामपि दीधितिकारैः सह बहुत्र विमतिरस्ति । एतदीयग्रन्थानामतिव्युत्पादकत्वात्, गदाधरभट्टाचार्यविरचितग्रन्थशकलमनधीयानः न पण्डितव्यपदेशमर्हतीति अभियुक्ता मन्यन्ते । हेत्वाभाससामान्यलक्षणबोधकं मणिवाक्यद्वयमवलम्ब्य किञ्चिदिव विस्तृतं दीधितिवचनमुपजीव्य भट्टाचार्यसंदृब्धः हेत्वाभाससामान्यनिरुक्तिभागः विविधपरिष्कारमालालङ्कृतः सर्वानपि निबन्धानतिशेते । जागदीशीपठनतत्परा अपि ग्रन्थमेनमादरेण पठन्ति । अमुं प्रबन्धं गौडगायत्रीं संप्रचक्षते । अयं चापरिमितैः क्रोडपत्रैर्भूषितोऽस्ति । एषा गादाधरी कालीशङ्करचन्द्रनारायणप्रभृतिभिरुत्तरदेशीयैः कृष्णंभट्टरघुनाथजगन्नाथकृष्णताताचार्यप्रभृतिभिः दाक्षिणात्यैश्च विद्वद्भिः क्रोडपत्रव्याख्यानादिरचनेन परिकर्मिता लक्ष्यते । सत्प्रतिपक्षविभाजकविचारमधिकृत्य महीशूरराजकीयविद्वद्भिः दक्षिणदेशीयनैयायिककुलपरमगुरुभिः रामशास्त्रिचरणैः शतकोटि-

नामकं क्रोडपत्रं व्यरचि । यन्मूलैवात्र देशे अनुगमसंप्रदायावगतिर्नैयायिकानाम् । सा चानुगमसरणिः अद्यत्वे लुप्तप्राया लक्ष्यते ।

कालक्रमेण अतिविस्तृताया गादाधर्याः अनुमानखण्डमपि संपूर्णमध्येतुमध्यापयितुञ्चाशक्नुवानाः, गदाधरभट्टाचार्यप्रपञ्चितान् कतिचन भागान् अधीयाना अध्यापयन्तश्च, तान् पञ्चवादपदेन व्यपदिशन्तः पण्डिताः तेष्वेव भागेषु ऊहापोहादिविचारं सभासु अकार्षुः । यदाहुः शङ्करपादभूषणस्यातिप्रौढस्य निबन्धनेन प्रकटिताद्वैतदर्शन तत्त्वाः महाराष्ट्रदेशीयाः पर्वतेत्युपनामकरघुनाथसूरयः स्वीयपञ्चवादन्यायरत्नस्योपक्रमे, ‘ शिरोमणिव्याख्याः सन्ति बह्व्यः । तासां मध्ये संप्रति गादाधर्येव प्रबला । तस्यामेवाध्ययनाध्यापनयोः बहुशः प्रचारदर्शनात् । गादाधर्यामपि सामान्यनिरुक्तिपञ्चलक्षणीचतुर्दशलक्षणीसिद्धान्तलक्षणावयवपक्षताख्याः पञ्च वादा मुख्याः, तदध्ययनाध्यापनयोः तत्रत्यविषयेष्वेव सभायामूहापोहात्मकविचारस्य च प्रायशो दर्शनात् ; गदाधरभट्टाचार्यैः तेष्वेव बहु प्रपञ्चितत्वाच्च । पञ्चवादेषु हि सन्ति दुर्बोधविचारणीयानि ऊहापोहार्हाणि बहुस्थानानि वाक्यानि च । तानि च कृष्णंभट्टैरतिविस्तरतः प्रकाशितानि । इतरैश्च क्वचित् क्वचित् । तत्र तत्र स्थितानामूहापोहानां व्यस्तत्वेन दुरवबोधत्वेन चालोचनालसानां पञ्चवादेषु ऊहापोहकौशलेच्छावतां कृते, कृष्णंभट्टादिविवरणवाक्यान्यालोच्य, तदुदितान् क्वचित् स्वकल्पितांश्च पूर्वपक्षसमाधानसिद्धान्तान् संगृह्य समारभ्यते सामान्यनिरुक्त्यादिक्रमेण न्यायरत्नाभिधेयमभिनवा टिप्पणी ’ इति ।

एवं तत्त्वचिन्तामणिव्याख्यापरम्परा संक्षेपेण निरूपिता ।

मण्यनुसारिग्रन्थपरिचयः

तत्त्वचिन्तामण्युक्तसरण्या तदुक्तार्थनिरूपकाः त्रयः प्रबन्धाः समुपलभ्यन्ते ।

(१) न्यायकौस्तुभः । अयं महादेवपुणतामकरमहोदयैर्विरचितः । अस्य शब्दखण्डः बहुतरविचारगर्भितः अतीव व्युत्पादकोऽस्ति । प्रत्यक्षखण्डं मुद्रितम् ।

(२) मणिसारः मैथिलो गोपीनाथः मण्युक्तार्थं मिश्राद्यभिप्रायवर्णनपूर्वकमत्र प्रबन्धे निरूपयति । अनुमानखण्डः अनन्तशयने मुद्रितोऽस्ति ।

(३) मणिदर्पणः । रघुनाथसार्वभौमे तञ्जापुरीं शासति, द्रविडदेशीयाः मीमांसादिशास्त्रेषु बहुतरनिबन्धप्रणेतारः राजचूडामणिदीक्षीताः तत्त्वचिन्तामण्युपन्यासरूपमिमं प्रबन्धं रचयामासुः । अस्य शब्दखण्डभागः अनन्तशयने मुद्रितोऽस्ति ।

अवयवग्रन्थव्याख्याने कृष्णंभट्टीये 'गोपालनाथानां द्वितीयावयवलक्षणावतरणं संगच्छते' इति वचनेन गोपालनाथः कश्चित् दीधितिव्याख्यातासीदित्यवगच्छामः। एवं बहवो नव्यन्यायग्रन्थाः आसन्निति तत्तद्ग्रन्थपरिशीलनेन विज्ञायते।

एवं संक्षेपेण निरूपिता नव्यन्यायग्रन्थाः

शाब्दबोधग्रन्थाः

शाब्दबोधनिरूपणाभिवृद्धिपरिचयः

एकपदार्थस्यापरपदार्थेन संसर्गरूपान्वयस्य वाक्यार्थापरनामधेयस्यावगाहिनं, शाब्दयामि, शृणोमित्याद्यनुव्यवसायसाक्षिकं ग्रहविशेषं शाब्दबोधमामनन्ति। तदनुबन्धि प्रमेयनिरूपकग्रन्थाः शाब्दबोधग्रन्था इत्युच्यन्ते। त इह संक्षेपतो निरूप्यन्ते। 'विधिर्विधायकः' इति न्यायसूत्रविवरणावसरे लिङर्थेष्टाभ्युपायतायाः क्रियायामन्वयकथनेन निगूढा शाब्दबोधसरणिः सूचिता तात्पर्यटीकायां वाचस्पतिमिश्रैः। उदयनाचार्यैः न्यायकुसुमाञ्जलौ कृतेराख्यातार्थतास्थापनपूर्वकं भावना यमन्वेति तमेवाख्यातार्थसङ्ख्यापीति नियमविशेषनिरूपणेन सा किञ्चिदिव प्रकटा समजनि। तत्त्वचिन्तामणिकारैस्तु समासे विनैवैकार्थीभावं समस्यमानपदार्थान्वयकथनेन उपसर्गाणां द्योतकतायाः जानातीत्यादौ लकारस्य साधुतासंपादकतायाश्च व्यवस्थापनेन धात्वर्थविचारेण च सा परिष्कृता। मिश्रादिभिः तत्तद्विभक्त्यर्थान्वयनिरूपणेन प्रयोगानुरोधात् विभक्त्यर्थनिर्णयञ्च कुर्वद्भिः अभिवृद्ध्युन्मुखीकृता शाब्दसरणिः। शिरोमणिभट्टाचार्यैस्तु मणिकारानुक्तविशेषख्यापनपूर्वकं स्वातन्त्र्येण ग्रथितेषु आख्यातवादनञ्वादैवकारवादादिषु निबन्धेषु अर्थविशेषव्यवस्थापनपूर्वकं शाब्दबोधनिरूपणेन, अनुमानदीधितावपि शाब्दबोधोपयोगिव्युत्पत्तिविशेषाणां, तत्तद्वाक्याधीनशाब्दबोधानाञ्च वर्णनेन, उत्पत्तेरपि लडाद्यर्थत्वव्यवस्थापनादिना च सा अभिवृद्धा समपद्यत। ततः जगदीशतर्कालङ्कारगदाधरभट्टाचार्यादिभिः शाब्दबोधसरणिः शशिकान्तोपलमयी सञ्जाता।

शब्दशक्तिप्रकाशिकापरिचयः

जगदीशतर्कालङ्काराः शाब्दबोधोपयोगिसकलप्रमेयनिरूपकं सुबर्थतिङर्थसमासार्थादेः विस्तरेण प्रतिपादकं शब्दशक्तिप्रकाशिकाभिधं प्रबन्धं ग्रथयित्वा शाब्दसरणिं सर्वजनमनोहारिणीमकार्षुः। 'जगदीशस्य सर्वस्वं शब्दशक्तिप्रकाशिका' इति चाभाणकः।

तत्र च निबन्धे साकाङ्क्षैः सार्थकशब्दैः शाब्दबोधाभिधा विलक्षणप्रमितिर्जायते इति प्रसाध्य, सार्थकशब्दानामवान्तरभेदनिरूपणमुखेनागाधः शाब्दबोधमहोदधिः सागैररिव वर्धितः ।

तत्रायं तेषां विभागप्रकारः — सार्थकशब्दः प्रकृतिः प्रत्ययः निपात इति त्रिविधः । प्रकृतिः नामधातुभेदेन द्विविधा । नाम च रूढलक्षकयोगरूढयौगिकभेदा-च्चतुर्विधम् । रूढं संज्ञेत्यभिधीयते । सा नैमित्तिकी, पारिभाषिकी, औपाधिकीति त्रिविधा । लक्षकं च जहत्स्वार्थाजहत्स्वार्थनिरूढाधुनिकादिलक्षणाभेदेनानेकप्रकारम् । सामासिकतद्धितान्तभेदेन द्विविधं योगरूढम् । यौगिकन्तु समासः तद्धितान्तं कृतन्त-मिति त्रिविधम् । आत्मनेपद्यादिभेन धातुरपि त्रिविधः । एतावता प्रकृतिर्विभज्य दर्शिता । प्रत्ययस्तु विभक्तिः, धात्वंशः, तद्धितः, कृदिति चतुर्विधः । विभक्तिः सुप्तिङ्भेदेन द्विविधा । सुब्विभक्तिः सप्तविधा । अथवा कारकार्था तदितरार्था चेति द्विविधा । तिङ् दशविधः । धात्वंशस्तु नामप्रकृतिकः धातुप्रकृतिकश्चेति द्विविधः । तद्धितस्तु अपत्याद्यर्थभेदेन बहुविध इति ॥

स्वयं कारिकया लक्षणानि निरूप्य, संक्षिप्तया गम्भीरया वाण्या विचारान्प्रवर्त-यन्ति । पूर्वोक्तविभागक्रमेणैव तत्तदर्थविचारः प्रवर्तितो दृश्यते । प्रबन्धानां प्रबन्धॄणाञ्च नामनिर्देशपूर्वकमेव मतान्तरं निरूप्यते । तत्रोदिता बहवः प्रबन्धाः प्रबन्धारश्चाद्यत्वे विदुषामपरिचिता एव सन्ति । तत्तद्विभक्त्यर्थनिरूपणावसरे वैयाकरणानुशासनं प्रमाणयन्त एते न पाणिनीयमनुशासनं प्राधान्येन प्रदर्शयन्ति । 'अपृथग्रूपक्रियाविशेषणं कर्म' 'कालभावयोः सप्तमी' 'यत्र प्रकाशनं प्रभवः' इत्यादिकं कातन्त्रादिव्याकरणसूत्र-मुदाहरन्ति । तत्र तत्र कौमारकालापादीनामभिसन्धिभेदांश्च वर्णयन्ति ।

विशेषणविभक्तेः तादात्म्यं, भावे विहितघञादीनां स्वरूपञ्चार्थः, राजपुरुष इत्यादौ विनैव लक्षणां नामार्थयोर्भेदान्वयबोधः, इत्यादयोऽर्थाः तर्कालङ्काराभिमताः । दीधितिकारोक्तं परसमवेतत्वस्य कर्मप्रत्ययार्थत्वं दूषयन्ति । एभिः सनर्थनिरूपणप्रस्तावे सौन्दडमतनिरूपणात् मणिकारात्प्रागपि किञ्चिदिव परिष्कृतसरण्या शाब्दबोधः निरूपित इति प्रतीमः ।

सहृदयमनःप्रीतये तेषां वैखरी उदाह्रियते —

'अनुभवहेतुः सकले सद्यः समुपासिता मनुजे ।
साकाङ्क्षासन्ना च स्वार्थे योग्या सरस्वती देवी ॥

इतरा तावद्देवता सम्यगुपासितापि उपासके न साकाङ्क्षा। साकाङ्क्षापि वा नासन्ना आसन्नापि वा न स्वस्योपासितुरभिलषितार्थे योग्या। योग्यापि वा न समस्तोपासके अनुभवस्य जनिका। जनिकापि वा न सद्यः। किन्तु कालक्रमेणैव। सरस्वती तु देवी सकलमनुजे एव साकाङ्क्षा आसन्ना योग्या चोपासिता सती सद्य एवानुभवं तनुते। अतो देवतान्तरमपेक्ष्योत्कर्षवतीयमवश्यमुपास्येत्यत्र तात्पर्यम्' इति।

व्युत्पत्तिवाद-परिचयः

शब्दबोधवर्णनकुतूहलिनः गदाधरभट्टाचार्याः शाब्दबोधे व्युत्पित्सूनां परमादरणीयं यथार्थनामानं व्युत्पत्तिवादाभिधानं सन्दर्भं प्रणीय सर्वानपि दार्शनिकान् समाचक्रुषुः।

अभेदान्वयबोधः भेदान्वयबोधश्चेति द्विविधोऽपि बोधः सपरिकरं न्यरूपि तत्र ग्रन्थे। नामार्थयोः नामार्थधात्वर्थयोश्चाभेदान्वयं समभिव्याहाराकाङ्क्षाप्रतिपादनपूर्वकं निरूप्य, विरूपोपस्थितयोरेवाभेदान्वयः इति व्युत्पत्तिं निर्वाह्याभेदान्वयविचारः समाप्तिं नीतः। ततः प्रातिपदिकार्थस्य प्रत्ययार्थेन निपातार्थेन च सह धात्वर्थस्य तदुत्तरप्रत्ययार्थेन च सह भेदान्वयमुपक्षिप्य, प्रतिबध्यप्रतिबन्धकभावलाघवगौरवविचारमुखेन विभक्त्यर्थसंसर्गकबोधं निराकृत्य, विभक्त्यर्थप्रकारकबोधसमर्थनेन प्रातिपादिकार्थप्रत्यार्थयोः भेदान्वयबोधं दृढीचक्रुः। ततः प्रातिपदिकप्रकृतिकानां प्रथमादीनां विभक्तीनामर्थस्य स्त्रीप्रत्ययार्थस्य कतिपयतद्धितार्थस्य च प्रातिपादिकार्थेन भेदान्वयं निरूप्यान्ते धातुप्रकृतिकलकारार्थनिरूपणपूर्वकं लकारार्थधात्वर्थयोर्भेदान्वयं वर्णयित्वा व्युत्पयिवादं समापयामासुर्भट्टाचार्याः।

प्रयोगातिप्रसङ्गाप्रसङ्गवारणे दत्तदृष्टय एते विचारमातन्वते। शब्दशक्तिप्रकाशिकायामिव नात्र बहून्युदाहरणानि वर्णयन्ति। तत्र तत्र नञ्घटितवाक्यार्थवर्णनेन शाब्दबोधं निष्कर्षयन्ति। कर्मणि विहितद्वितीयायाः फलमर्थः इति प्राचीनपक्षस्य, फलान्वय्याधेयत्वं द्वितीयार्थः इति नव्यपक्षस्य चोपपादनाय धात्वर्थविचारमुपक्षिप्य, व्यापारमात्रं धात्वर्थः, फलावच्छिन्नव्यापारः धात्वर्थः, फलं व्यापारश्च धात्वर्थ इति मतभेदानां संभवदाक्षेपपरिहारपूर्वकं व्यवस्थापनं, तदुपरि तेषां युक्तायुक्तत्वविचारश्च प्रवर्तितः केवलतत्त्वपक्षपातितामेषां प्रकटीकरोति। कर्मबोधकसुब्विभक्तिविचारावसाने कर्मबोधकलकारघटितवाक्यार्थमपि वर्णयन्ति। परसमवेतत्वं द्वितीयार्थ इति शिरोमणिमतमनुमोदमानानामेषां प्रसक्ततत्तदतिप्रसङ्गवारणेन द्वितीयान्त-

समभिव्याहारस्थले निष्कृष्टं शाब्दबोधं निरूप्य, पुनः लकारार्थविचारे कर्मणि लकारस्यैव द्वितीयाया अपि परसमवेतत्वार्थकत्वमुपक्षिप्य, अन्यादृशीं रीतिमवलम्ब्य दोषगन्धास्पृष्टं निष्कृष्टशाब्दबोधवर्णनमनितरसाधारणं सर्वतोमुखं वैदुष्यमावेदयति । प्रमाणत्वेन लोके संप्रतिपन्नस्य 'घटः आकाशं न पश्यति' इति वाक्यस्य कयापि गत्या प्रमात्मकशाब्द-बोधजनकत्वं न संभवतीति निरूपणं कस्य वा मनो नाश्चर्यरसे मज्जयति । एते प्रायः पाणिनीयानुशासनं प्रमाणीकुर्वन्ति । क्वचित्तु कातन्त्रादिव्याकरणानुशासनमपि । चतुर्थीविचारे तादर्थ्यार्थे सूत्रान्तरेणेत्यनेन कातन्त्रसूत्रं प्रमाणतयाभिसंहितम्, पाणिनीयव्याकरणतन्त्रे 'तादर्थ्ये चतुर्थी वाच्या' इति वार्तिकस्यैव दर्शनात् सूत्रत्वाभावात् ।

सविषयार्थकधातुसमभिव्याहृतद्वितीयार्थविचारप्रसङ्गेन सनादीनामर्थः, गतिबुद्धि-सूत्रार्थप्रसङ्गेन णिजर्थः, नारायणं नमस्करोतीत्यत्रत्यविचारप्रसङ्गेन च्विप्रत्ययार्थश्च विचारितः । वैयाकरणभूषणसारदर्पणग्रन्थः भट्टाचार्यसरण्यैव गाहते । किं बहुना ? व्युत्पादकविचारबहुलोऽयं व्युत्पत्तिवादः न केवलं नैयायिकैः, अपि तु वैयाकरणादिभिः सर्वैः दार्शनिकैः शाब्दव्युत्पित्सुभिरधीयते । न कोप्येतादृशोऽन्यः प्रबन्धोऽस्ति यः समस्तदार्शनिकादृतो भवति ।

शक्तिस्वरूपनिर्णये शक्तिवादं स्वातन्त्र्येण निबबन्धुः । स च सामान्यकाण्डः विशेषकाण्डः परिशिष्टकाण्ड इति काण्डत्रयात्मना विभक्तः । प्रथमे मीमांसकादिमत-निराकरणपूर्वकं शक्तिस्वरूपं, द्वितीये, आकाशसर्वनामधेन्वादिपदानामर्थविशेषः, तृतीये जातिशक्तिवादिनामवान्तरमतभेदनिरासेन जातिविशिष्टव्यक्तौ शक्तिश्च विस्तरेण निरूपितम् ।

विभक्त्यादेः लघुभूतमर्थं वाच्यं स्वीकृत्य प्रयोगातिप्रसङ्गवारणाय संबन्धविशे-षस्य आकाङ्क्षाभास्यसंसर्गमर्यादया भानं वर्णयतामेषां शाब्दसरणिः अनुशासनानुरोधिनी कं वा दार्शनिकं न प्रीणयति ? विनैव नामनिर्देशं उद्वेजकशब्दप्रयोगञ्च मतान्तरं निराकुर्वन्तीत्ययं नैसर्गिकोत्कर्षः भट्टाचार्याणाम् ।

## व्युत्पत्तिवादव्याख्याः

रामरुद्री-यपरिचयः — रामरुद्रभट्टाचार्यग्रथितं रमणीयं व्युत्पत्तिवादस्य व्याख्यानं नाति-संक्षिप्तं नातिविस्तृतमवतरणिकादानपूर्वकं मूलाभिप्रेतार्थं सुष्ठु विशदी-

करोति । तच्च तृतीयाविचारोपक्रमपर्यन्तमेव मुद्रितमुपलभ्यते। परन्तु वृक्षं वृक्षं प्रतिसिञ्चतीत्यत्र कर्मप्रवचनीयसंज्ञायाः फलं षत्वबाधः इति प्रतिपादयतो मूलस्य ' धात्वादेः षः सः ' इति सूत्रेण षत्वं न भवतीति विवरणं व्याकरणांशं सूचयदपि गुणगणेषु मज्जत्र विशिष्योद्भावनार्हं भवति ।

गूढार्थतत्त्वालोकपरिचयः

न्याये वेदान्ते च बहुनिबन्धप्रणेतृभिः मिथिलामण्डलमण्डनसर्वतन्त्रस्वतन्त्रधर्मदत्तसूरिभिः बच्चाझापरनामधेयैः व्युत्पत्तिवादस्य गूढार्थतत्त्वालोकनामकं प्रौढं व्याख्यानं निरमायि । एतत्कृतग्रन्थानां प्रायः गूढार्थतत्त्वालोकः इत्यभिधानं श्रूयते । एकार्थीभावविचारे प्रथमान्तार्थमुख्यविशेष्यकबोधविचारे च लघुमञ्जूषाभाट्टरहस्यादिग्रन्थोक्तदूषणपरिहारपूर्वकं तदीयसिद्धान्तनिराकरणं, तत्र तत्र न्यायकौस्तुभशब्दशक्तिप्रकाशिकादिसकलप्रामाणिकग्रन्थप्रतिपादितार्थसाधुत्वासाधुत्वनिरूपणञ्चास्य व्याख्यानस्य स्वतन्त्रग्रन्थतां स्थापयति । राज्ञः पुरुषः इति वाक्यार्थनिरूपणावसरे प्रतिबध्यप्रतिबन्धकभावकल्पनामधिकृत्य प्रवर्तितो विचारः सत्प्रतिपक्षादिग्रन्थान्तरप्रतिपादितनिष्कर्षप्रदर्शकः व्युत्पन्नमतीनानन्दयति । प्रतिपादनशैली चातिप्रौढा पण्डितरूपास्वाद्यरसा जागर्ति । प्रथमाविचार एवातिविस्तृतः । द्वितीयादिविचारास्तु क्रमेण न्यूनतामापन्ना लक्ष्यन्ते । प्राचीनानां शैलीमवलम्ब्य कठिनतरविषयप्रतिपादनस्य स्वहस्तितत्वात् गभीरा अतिप्रौढा च समजनि वैखरी ।

सा च सहृदयविनोदायोदाह्रियते —

' येभ्य एव स्वतो दृष्टेभ्यः परेण दर्शितेभ्यो वा अवलम्बितुमुपक्रान्तेभ्यः युक्तिविभीषिकां कामप्युद्भाव्य वादिभ्यां निवारिता व्याकुलीभवन्ती अनाकलिता परालम्बनतयोपजाततदन्यतमासक्तिरनुभूतिरुत्सार्य विभीषिकां येन तेष्वेवैकं ग्राहिता तमेव बहुमन्यतेतराम् । नापरालम्बनप्रदर्शकम् । प्रतिष्ठिता च सती नापरमपरं बहुपदार्थतुन्दिलं वारविलासिनीव मृगयते पर्यन्तविरसत्वात् संलग्नजगज्जालतया चालिङ्गितुमप्यशक्नुवाना विफलमनोरथैव स्यात् ' इत्यादिका ।

अन्यव्याख्यापरिचयः

गूढार्थतत्त्वालोकपद्धत्यैव सुबोधवाक्यसंदृब्धा प्रकाशाभिधा व्याख्या धर्मदत्तसूरिणामन्तेवासिभिः लक्ष्मीकान्तझामहोदयैः विरचिता मुद्रिता च वर्तते ।

महामहोपाध्यायजयदेवमिश्रैः वैयाकरणमूर्धन्यैः जयानाम्नी असंपूर्णा सरला टीका व्यरचि । व्याकरणानुबन्धिविषये नैयायिकव्याख्यातिशायितमाशयवर्णनमत्र सहृदया-

नाह्लादयति । पतधातोरकर्मकत्ववादिनां भट्टाचार्याणां मते पतितशब्देन द्वितीयान्तशब्दस्य समासविधायकस्य द्वितीया श्रितातीतपतितगतेत्यादिसूत्रस्योपपत्ति, पतधातोरकर्मकत्वेऽपि 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' इति वार्तिकेन पतितशब्दसमभिव्याहृतस्य द्वितीयान्तस्य कालवाचकस्य दिवसपदस्य साधुत्वात् दिवसपतितः इति समासविधानाभिप्रायेणेति भाववर्णनं, रामरुद्रभट्टाचार्यवचाञ्ज्ञाप्रभृति-व्याख्यातृभाववर्णनात् क्लिष्टादतिरमणीयं समुल्लसति । एवं चोलदेशान्तर्गततिरुविशलूरपराभिधसाहजीराजपुराभिजनैः अश्वत्थनारायणशास्त्रिवर्यैः, श्रीमदनन्ताचार्यैः अनन्दाख्वारपराभिधानैः, सरस्वतीविग्रहंदेशिकाचार्यैश्च रचितानि व्युत्पत्तिवादाद्यभागस्य क्रोड-पत्राणि वर्तन्ते । तथा मध्ये, कालसीमादेशसीमाविचारं, हेतुतृतीयाविचारं धात्वर्थविचारं पौर्वपदार्थविचारञ्चाधिकृत्य तैस्तैर्विद्वद्भिः प्रणीतानि क्रोडपत्राणि सन्ति । अन्तिमभागस्य लकारार्थविचारस्य साहजीराजपुराभिजनेन सुब्रह्मण्यशास्त्रिणा रचितं विवरणम् अण्णामलै विश्वविद्यालये मुद्रितमस्ति ।

पञ्चनदी (पञ्जाब्) सुदर्शनशास्त्रिमहोदयः बालबोधाय अतिविस्तृतम् आदर्शाभिधं व्याख्यानं रचयामास । परन्तु तद्ग्रन्थतो न व्युत्पत्तिवादस्य यथाभूतार्थावगतिर्भवतीति बहवो मन्यन्ते ।

शक्तिवादस्य कृष्णंभट्टीयमाधवीविवृत्यादर्शहरिनाथीयादिषु न्याख्यानेषु हरि-नाथभट्टाचार्यप्रणीतं व्याख्यानं व्युत्पन्नानामतिशयितव्युत्पत्त्याधायकं भ्राजते ।

**पदवाक्यरत्नाकर-परिचयः**

मैथिलाः फणदहवंशोद्भवाः पीताम्बरपण्डितसूनवः मिथ्यात्व-निर्वचनलाघवगौरवरहस्यविचारामृतोदयनाटकादिबहुग्रन्थनिर्मातारः गोकुलनाथोपाध्यायाः स्वीयकारिकाभिः संगृहीतमर्थं विशदीकृत्य पदवाक्यरत्नाकरनामकं बोधग्रन्थं विरचयामासुः । तत्र च सूत्रार्थवर्णनपूर्वकं विभक्तीनां नैयामिकमीमांसकवैयाकरणमतभेदेनार्थो निरूपितः । 'भावप्रधानमाख्यातम्' इति निरुक्तस्य स्वमतेनाशयो वर्णितः । क्वचित् गदाधरभट्टाचार्योक्तार्थप्रतिषेधो दृश्यते । साकल्येन विभक्त्यर्थानवबोधकोऽप्ययं ग्रन्थः व्युत्पत्तिवादादिनानवगतांशप्रतिपादनेन बहूपकरोति व्युत्पित्सूनाम् ।

**विभक्त्यर्थ-निर्णयपरिचयः**

गोकुलनाथोपाध्यायानामन्तेवासिनः तद्वंशीयाः झोपाख्यगिरि-धरोपाध्यायाः अतिविस्तृतं विभक्त्यर्थनिर्णयं वितेनुः । एते हि कारकत्वानुगममुपक्रम्य, प्रथमादीनां सप्तानां विभक्तीनामर्थान्

निरू पयामासुः । अत्र तत्तद्विभक्तिविधायकानि पाणिनिसूत्राणि वार्तिकानि च व्याख्यातानि । काशिकावृत्तिमनुसृत्य बहून्युदाहरणानि शाब्दबोधवर्णनेन निरूप्यन्ते । पदवाक्यरत्नाकर इव शाब्दिकादिमतभेदो वर्ण्यते । गौडपदेन गदाधरभट्टाचार्यस्योल्लेखो दृश्यते । तन्मतञ्च निराक्रियतेऽत्र । ' इति पदवाक्यरत्नाकरे अस्मद्गुरुचरणाः' इति लेखनमेतेषां गोकुलनाथोपाध्यायान्तेवासितामवगमयति । एषां शाब्दबोधवर्णनपरिपाटी क्लिष्टेव लक्ष्यते ।

त्रिंशच्छ्लोकी-परिचयः

दाक्षिणात्याः पट्टाभिरामशास्त्रिणः अनुभवमात्रवेद्यार्थकानां न च वाच्यम्, इति चेत्, यद्यपि, तथापि, परन्तु, इत्याकारकं, मध्ये, इत्यादीनां शब्दानामतिसमीचीनया नव्यनैयामिकसरण्या अर्थविशेषान् द्वात्रिंशता श्लोकैः संगृह्योक्तान् प्रायः सिद्धान्तमुक्तावलीवाक्यान्युदाहृत्य निरूपयन्तः त्रिंशच्छ्लोकीनामकस्य बोधग्रन्थस्य प्रणयनेन महान्तमुपकारमकार्षुः पण्डितानां, विशिष्य च नैयायिकानाम् । तत्रायमाद्यश्लोकः—

' स्वानुभूत्येकशरणाः विषयाः पूर्वपक्षिणाम् ।
उच्यन्ते तत्र तत्रार्थाः श्लोकैर्द्वात्रिंशता मया ॥ ' इति ।

' निर्धारणविभक्त्यर्थो मध्येशब्दार्थ इष्यते ' इति श्लोकव्याख्याने भेदः अभेदश्च विभक्त्यर्थः इति स्वीयपक्षं भट्टाचार्यमतविलक्षणं सुनिपुणमुपपादयामासुः । संक्षिप्तोऽप्ययं ग्रन्थतल्लजः अनधिगतव्युत्पत्तिवादतत्त्वैर्दुरवबोधो वर्तते । महदिदं प्रमोदस्थानं यत् अनितरसाधारण्या सरण्या शाब्दबोधमर्थविशेषांश्च निरूपयद्भिरेभिः शास्त्रिवर्यैः निर्मितानां तर्कसंग्रहदीपिकामुक्तावलीपञ्चलक्षणीचतुर्दशलक्षणीटिप्पणीनामसंपूर्णानामुपलम्भेऽपि त्रिंशच्छ्लोकीग्रन्थः संपूर्णः समुपलब्धः मुद्रापितश्चेति । एते च काञ्चीमण्डलाभिजनानां नरसिंहप्रकाशिकामुक्तावलीप्रभाप्रभृतिव्याख्यानरचयितॄणां रायनरसिंपण्डितानामन्तेवासिनः । एवं मथुरानाथतर्कवागीशानां सुबर्थविचारः, विश्वनाथन्यायपञ्चाननानां सुबर्थतत्त्वालोकः, तार्किकरत्नाकरश्चेति शाब्दबोधग्रन्था वर्तन्ते इति तत्तद्ग्रन्थपर्यालोचनयावगच्छामः । सर्वथा सर्वानपि दार्शनिकग्रन्थानतिशेरते नैयायिकानां शाब्दबोधग्रन्थाः इति सर्वतन्त्रसिद्धान्तः ।

एवं संक्षेपतो निरूपिताः शाब्दबोधग्रन्थाः ।

## प्रकरणग्रन्थाः

न्यायदर्शनमहाम्बुधौ द्रागेवावगाहितुमसमर्थानां बालानां तद्दर्शनोदिततत्त्वजातस्य सुखावबोधाय शास्त्रार्थसंग्राहकान् शब्दसंक्षेपवतः प्रबन्धान् निबबन्धुरनेके पण्डित-तल्लजाः । ते प्रबन्धाः प्रकरणग्रन्थव्यपदेशभाजः कतिपये अद्य निरूप्यन्ते—

### न्यायकलिका

न्यायदर्शनमात्र-प्रतिपाद्यार्थसंग्राहक-प्रकरणग्रन्थ-परिचयः

गङ्गेशोपाध्यायैः जरन्नैयायिकपदेन निर्दिष्टाः श्रीजयन्तभट्टाः न्यायमञ्जरीकाराः, न्यायसूत्रोदितानां षोडशानां पदार्थानां तत्त्वं नैसर्गिक्या सरलया सरण्या न्यायकलिकानाम्नि संक्षिप्ते प्रकरणग्रन्थे विशदीचक्रुः । आहुश्च ते ग्रन्थावसाने—

'षोडशपदार्थतत्त्वं बालव्युत्पत्तये कथितम् ॥
अजातरसनिष्यन्दमनभिव्यक्तसौरभम् ।
न्यायस्य कलिकामात्रं जयन्तः पर्यदीदृशत् ॥' इति ।

अत्र न्यायदर्शनस्यादिमं सूत्रमुपन्यस्य तदुक्तक्रमेण प्रमाणादीन् षोडश पदार्थान् व्युत्पादयांबभूवुः ।

प्रमाणनिरूपणावसरे वेदस्य ईश्वरोक्तत्वेन प्रामाण्यमपवर्गोपयोगिप्रमाविषयप्रमेय-निरूपणावसरे आत्मपरीक्षाप्रदर्शितयुक्तिभिः शरीरेन्द्रियमनोव्यतिरिक्तं शरीरान्तरे कर्म-फलभोक्तारं परलोकिनमात्मानं च संक्षेपेण व्यवस्थापयामासुः । प्रमेयनिरूपणानन्तरं तत्त्वज्ञानादपवर्गोत्पत्तिप्रकारश्च निरूपितः । एषां हेत्वाभासनिर्देशक्रमः सूत्रकारोक्तक्रमवि-लक्षणो दृश्यते । 'सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः' इति न्यायसूत्रम् । 'असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमा हेत्वाभासाः' इति न्यायकलिका । हेतोः गमकतौपयिकानि पञ्च रूपाणि—पक्षसत्त्वं, सपक्षसत्त्वं, विपक्षा-सत्त्वम्, अबाधितत्वम्, असत्प्रतिपक्षितत्वञ्चेति । तेष्वेकैकेनापि हीनः अहेतुः हेत्वाभासो भवति । पक्षसत्त्वहीनः असिद्धः, सपक्षसत्त्वशून्यः विरुद्धः, विपक्षासत्त्वरहितः अनैका-न्तिकः, अबाधितत्वविनाकृतः कालात्ययापदिष्टः, असत्प्रतिपक्षितत्वाभाववान् प्रकरणसमः । गमकतौपयिकरूपक्रमानुसारी तत्तद्रूपरहितहेत्वाभासनिर्देशक्रमः हेत्वाभासावबोधनपटीयान्

विलसति । एते केवलान्वयिनं हेतुमसाधारणमेनैकान्तिकञ्च नाङ्गीकुर्वन्ति । साधारणमेवानैकान्तिकमभ्युपगच्छन्ति । न्यायदर्शनमात्रप्रतिपाद्यसमस्तविषयसंग्राहकमिदमतिरमणीयं प्रकरणग्रन्थरत्नमिति बोध्यम् ।

## लक्षणावली

वैशेषिकदर्शनमात्रप्रतिपाद्यार्थबोधकप्रकरणग्रन्थपरिचयः

न्यायाचार्याः उदयनाचार्याः वैशेषिकदर्शनमात्रव्युत्पादितपदार्थतत्त्वावबोधकं लक्षणावलीनामकमतिसंक्षिप्तं प्रकरणग्रन्थं रचयामासुः । वैशेषिकसूत्रदृष्टं प्रथमं षण्णां पदार्थानामुद्देशं नवमाध्याये प्रागभावादीनां निरूपणञ्चानुसृत्य, अत्र ग्रन्थे पदार्थः भावाभावभेदेन द्वेधा विभक्तः । ततः अभावेन सह द्रव्यादयः सप्त पदार्थाः क्रमेण लक्षिता विभक्ताश्च । अत्र चैकैकस्य अनेकानि लक्षणवाक्यानि भ्रामकानि दृश्यन्ते । यथा—'गुणात्यन्ताभावानधिकरणं द्रव्यम् , मूर्तत्वरहितसमवेतसमवेतत्वरहितमूर्तत्वरहितामूर्तत्वरहितसमवेतजातिमद्वा, गन्धासमेवेतगगनारविन्दसमवेतजातिमद्वा, समवेतसमवेतसमवेतं वा ' इत्यादीनि ।

इयञ्च दरभङ्गाभूपाश्रितराजपण्डितविश्वनाथशर्मभिः नव्यनैयायिकप्रणाल्या अनुगमपद्धतिमवलम्ब्य विरचितया प्रकाशाख्यया व्याख्यया सह मुद्रिता विलसति ।

## सप्तपदार्थी

एकादशशतकारम्भसमये संभाव्यमानस्थितिकाः न्यायाचार्यपदव्यपदेश्याः लक्षणमालाग्रन्थप्रणेतारः खण्डनखण्डखाद्योद्ध्रियमाणलक्षणनिरूपकाः शैवाः शिवादित्यमिश्राः सप्तपदार्थीनामकं संक्षिप्तं प्रकरणग्रन्थं रचयामासुः । तत्र वैशेषिकसंमतानां सप्तानां पदार्थानां लक्षणं विभजनञ्च वर्णितमस्ति । असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः षट् हेत्वाभासाः प्रपञ्चिताः । प्रमायोगव्यवच्छिन्नं प्रमाणमिति लक्षणमभिधाय, आप्तप्रामाण्यादिति न्यायसूत्रानुसारेण ईश्वरेण सह सप्त प्रत्यक्षप्रमाणानि निरूपयामासुः । अस्याश्च सप्तपदार्थ्याः टीकाद्वयं मुद्रितं वर्तते ।

## तर्कभाषा

न्यायवैशेषिकतन्त्रद्वयप्रतिपाद्यसंग्राहकप्रकरणपरिचयः

द्वादशशतकाभ्यन्तरे संभाव्यमानस्थितिकाः मैथिलाः केशवमिश्राः तर्कभाषानामकं प्रकरणग्रन्थं निर्ममिरे ।

तत्र न्यायसूत्रोक्ताः षोडश पदार्थाः क्रमेण निरूपिताः । प्रमा-

णनिरूपणप्रसङ्गेन कारणतद्विभागः परतः प्रामाण्यवादश्च न्यरूपि । अर्थापत्त्यादीनां प्रमाणान्तरत्वं निराकारि । द्वादशविधप्रमेयनिरूपणावसरे 'अर्थाः षट् पदार्थाः' इत्यादिना वैशेषिकतन्त्रसिद्धमर्थजातं सर्वमपि संक्षेपेण प्रतिपादयामासुः । 'ते चासिद्ध-विरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदात्पञ्चैव' इत्येतेषां हेत्वाभासनिर्देशक्रमः । हेत्वाभासाः अनुमाननिरूपणावसरे संक्षेपेण, हेत्वाभासनिरूपणावसरे विस्तरेण च निरूपिताः ।

'इहात्यन्तमुपयुक्तानां स्वरूपभेदेन भूयो भूयः प्रतिपादनम् । यदनतिप्रयोजनं तदलक्षणमदोषाय । एतावतैव बालव्युत्पत्तिसिद्धेः' इति ग्रन्थेन जातिप्रभेदानां निग्रह-स्थानप्रभेदानाञ्च सर्वेषां स्वयमनिरूपणे हेतुं निरूपयन्तः एते तर्कभाषामुपसमहार्षुः ।

## तर्ककौमुदी

लौगाक्षिभास्करशर्मणा वैशेषिकतन्त्रसिद्धपदार्थजाततत्त्वं, नैयायिकसिद्धं चतुर्विधं प्रमाणं, पञ्चविधान् हेत्वाभासांश्च संक्षेपेण निरूपयन्ती न्यायवैशेषिकदर्शनव्युत्पित्सूनामु-पकाराय तर्ककौमुदी विरचिता । व्याप्तिग्राहकस्य, पक्षत्वस्य, अनैकान्तिकत्रैविध्यस्य च गङ्गेशोपाध्यायाभिमतस्य निरूपकोऽयं चिन्तामणिकारादर्वाचीन इति निश्चिनुमः । बुद्धिनामकस्य गुणस्य निरूपणप्रसङ्गेन चतुर्विधं प्रमाणं, तस्य चतुष्ट्वं, प्रामाण्यस्य परतस्त्वञ्च सुनिरूपितमत्र । बालानामनुपयोगात् परीक्षा न कृतेति ब्रुवन्, उक्तपदार्थ-तत्त्वज्ञानस्य निःश्रेयसहेतुत्ववचनेन तर्ककौमुदीमुपसंजहार ।

## तर्कामृतम्

दीधितिव्याख्यातारः संक्षिप्तोक्तिप्रियाः जगदीशतर्कालङ्काराः बालव्युत्पत्तये तर्कामृतनामकं कमपि प्रकरणग्रन्थं व्यातेनिरे । मुमुक्षुणा संपादनीयात्मसाक्षात्कारजन-नाय श्रवणानन्तरं कर्तव्ये इतरभिन्नत्वेन आत्मनः अनुमाने भेदप्रतियोगीतरपदार्थज्ञान-साध्ये उपयुक्तमितरदेव कियदिति निरूप्यते इति पदार्थजातनिरूपणप्रतिज्ञां विधाय, उदयनरीत्या भावाभावभेदेन पदार्थं विभज्य, द्रव्यादीनां लक्षणमुत्पत्तिनाशप्रकारञ्चा-भिधाय 'अथ प्रमा निरूप्यते' इत्यादिना प्रमाणनिरूपणमारेभिरे । तत्र परतः प्रामा-ण्यग्रहप्रकारः स्वतः प्रामाण्यग्रहप्रकारश्च बालबोधोपयोगितया निरूपितः । शब्दप्रमाण-निरूपणावसाने 'अथ शाब्दबोधप्रक्रिया' इत्यादिना सन्दर्भेन शाब्दबोधसर्वस्वमति-संक्षिप्तया सरण्या प्रतिपादयामासुः तर्कालङ्काराः । न तत्रातिसंक्षिप्ते भागे किमप्य-

वशिष्यते प्रतिपादयितुं यत् शाब्दबोधप्रक्रियायां व्युत्पित्सुभिरपेक्षणीयमिति शाब्दबोध-रसिका अनुभवन्ति ।

तर्कसंग्रहः दीपिका च

आन्ध्रदेशाभिजनैः विश्वविख्यातवैदुष्यैः अन्नंभट्टैः न्यायवैशेषिकतन्त्रद्वय-सिद्धार्थतत्त्वबुभुत्सूनां बालानामुपकाराय सूत्रप्रायवचनग्रथितः तर्कसंग्रहः, अशेषन्याय-वैशेषिकतन्त्रासाधारणसिद्धान्तानां पूर्वपक्षनिराकरणमुखेन संग्रहेण प्रतिपादिका स्वकृत-तर्कसंग्रहव्याख्या तर्कसंग्रहदीपिका च निरमायि । तौ च ग्रन्थावनधीत्य दुर्गमन्याय-शास्त्रारण्यमार्गमवलोकयितुमपि न क्षमो व्युत्पित्सुलोकः । तर्कसंग्रहस्यावसाने

'काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः ॥'

इति स्वग्रन्थस्य न्यायवैशेषिकतन्त्रद्वयव्युत्पत्त्याधायकता स्वयमेव वर्णिता । 'द्रव्यगुण-कर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः' इति वैशेषिकानुसारेण पदार्थान्विभज्य यथाक्रमं तेषां लक्षणमवान्तरविभागश्चाभिधाय यथोपक्रमं सप्तैव पदार्था इत्युपसंहृतं तर्कसंग्रहे । न्यायदर्शनानुसारेण चतुर्विधं प्रमाणं पञ्च हेत्वाभासांश्च निरूपयामासुरन्नं-भट्टाः । नव्यनैयायिकसरणिमवलम्ब्य हेत्वाभासप्रभेदाः प्रतिपादिताः । तर्कसंग्रहे भूयोदर्शनस्य व्याप्तिग्राहकतां निरूपयन्तोऽप्येते तर्कसंग्रहदीपिकायां तन्निराकरणपूर्वकं मणिकारव्यवस्थापितां व्यभिचारज्ञानाभावसहकृतसहचारज्ञानस्य व्याप्तिग्रहोपायतां व्यवस्था-पयन्तः मूलतद्व्याख्यानव्याजेन प्राच्यनव्यमतयोः व्युत्पत्तिमादधति । न कोऽपि विचारः अवशिष्टोऽस्ति, यः न्यायदर्शने वैशेषिकदर्शने वा विततः संगृह्य बाल-बोधाय प्रतिपादयितव्य इत्यूहितुं शक्यते । किं बहुना ? षोडशपदार्थानामत्रैवान्तर्भावा-दिति मूलव्याख्यानमिषेण न्यायदर्शनसिद्धाः षोडश पदार्था व्युत्पादिताः । अन्ते विधिं, पदार्थतत्त्वज्ञानस्य मोक्षोपयोगित्वं, ज्ञानकर्मसमुच्चयस्य निःश्रेयसाहेतुत्वञ्च निरूप्य दीपि-कामुपसमहार्षुः ।

दीपिका सर्वदेशीयैर्विद्वद्भिरादृता नीलकण्ठीयरामरुद्रीयनृसिंहप्रकाशिकापट्टाभि-रामटिप्पण्यादिभिः शोभिता वर्तते । तर्कसंग्रहस्य तु सर्वदेशविख्यातस्य सन्त्यपरिमि-तानि व्याख्यानानि । अतः प्रकरणग्रन्थेषु निरुपमं स्थानमारोहति तर्कसंग्रहः दीपिका च ।

कारिकामय-प्रकरणग्रन्थ-परिचयः

द्वादशशतकपूर्वभागे संभाव्यमानस्थितिकाः कुसुमाञ्जलिबोधिन्यादिप्रबन्धप्रणेतारः रमणीयवचोगुम्भैः अन्तर्वाणिगणान् प्रीणयन्तः वरदराजाः न्यायदर्शनतत्त्वार्थबुभुत्सूनां बालानामवबोधाय तर्ककारिकापराभिधानां तार्किकरक्षां श्लोकमयीं व्यातेनिरे। सारसंग्रहाभिधया व्याख्यया स्वयं तां भूषयामासुः। एते न्याये मीमांसायाञ्चातिविदग्धाः प्राचीनानामाचार्यवाचस्पतिमिश्रोदयनाचार्यप्रभृतीनामुक्तिषु बद्धश्रद्धा इति सारसंग्रहावसानगताभ्यां पद्याभ्यामवगम्यते—

"न्यायविद्याविदग्धस्य मीमांसापारदृश्वनः।
इयं वरदराजस्य कृतिर्विजयतेतराम्॥

आलोड्य दुस्तरगभीरतरान् प्रबन्धान्
वाचस्पतेरुदयनस्य तथा परेषाम्।
सारो मयात्र समगृह्यत वावदूकै-
र्नित्यं कथासु विजिगीषुभिरेष धार्यः॥' इति।

अत्र ग्रन्थे न्यायदर्शनोक्ताः षोडश पदार्थाः क्रमेण प्रतिपादिताः। परिच्छेदत्रयात्मकोऽयं निबन्धः। प्रमाणादिच्छलान्तपदार्थव्युत्पादकः प्रथमः परिच्छेदः। द्वितीयस्तु जातिनिरूपकः। तृतीयः निग्रहस्थानप्रतिपादकः। सर्वत्रोदयनाचार्यवाक्यानि प्रमाणीकुर्वन्त एते प्रमेयनिरूपणप्रस्तावे द्वादश प्रमेयानि निरूप्य,

'मोक्षे साक्षादनङ्गत्वादक्षपादैर्न लक्षितम्।
तन्त्रान्तरानुसारेण षट्कं द्रव्यादि लक्ष्यते॥'

इत्यादिना परम्परया मोक्षोपयोगिज्ञानविषयाणां द्रव्यादीनां वैशेषिकशास्त्रसिद्धं तत्त्वमपि व्युत्पादयामासुः। एते साधारणः असाधारणश्चेति द्वावेवानैकान्तिकप्रभेदौ स्वीकुर्वन्ति। द्वितीयपरिच्छेदे जातीनां स्वरूपमुदाहरणम्, अवान्तरप्रभेदं, सामान्यतो दूषकताबीजं, विशिष्य दूषकताबीजञ्च प्रायेण उदयनाचार्यरचितप्रबोधसिद्ध्यपरनामकन्यायपरिशिष्टवर्त्मनैव सरलवचोगुम्भनैः विस्तरेण निरूपयन्तोऽप्येते, परिशिष्टापेक्षया संक्षेपेणैवात्र ग्रन्थे स्वप्रतिपादनं ब्रुवते। यदाहुः—

'परिशिष्टेऽन्यत् । वयं विस्तरभीरवः' इति । वादकुतूहलिनामेषां जातिनिरूपणे आदरातिशयं प्रकटयति

'कथासंभोगवैदग्धीसंपादनपटीयसी ।
ध्रियतां जातिमालेयं जातिमालेव पण्डितैः ॥'

इति श्लोकः । जातिनिग्रहस्थानानां वैशद्येन प्रतिपादको नापरः प्रकरणग्रन्थोऽस्ति ऋतेऽत्र मुद्राप्यमाणात् न्यायरत्नात् ।

प्राधान्येन न्यायदर्शनतत्त्वम् उपसर्जनतया च वैशेषिकदर्शनतत्त्वं व्युत्पादयन्नयं प्रकरणग्रन्थः विद्वन्मण्डलीसमादृतो विलसति ।

अस्य च प्रसिद्धकोलाचलमल्लिनाथसूरिभिः विरचिता सुन्दरवचनसंदब्धा निष्कण्टकाभिधा व्याख्या, ज्ञानपूर्णकृता लघुदीपिकाभिधा व्याख्या च स्तः । आद्या द्वितीयामपेक्ष्य व्युत्पादयित्री लक्ष्यते ।

### भाषापरिच्छेदः

वङ्गदेशीयैः विद्यानिवासभट्टाचार्यसूनुभिः श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यैः कारिकावलीनाम्ना विश्रुतः कारिकामयो भाषापरिच्छेदो ग्रथितः, यत्र न्यायवैशेषिक-तन्त्रसिद्धानामर्थानां तत्त्वं निरूपितं वर्तते । द्रव्यादीन् सप्त पदार्थान् लक्षितान्विभज्य, तेषां साधर्म्यवैधर्म्ये सपरिकरं वैशेषिकभाष्याद्यनुसारेण निरूप्य, प्रत्येकं द्रव्याणि गुणांश्च प्रतिपाद्य भाषापरिच्छेदः समाप्तिं नीतः ।

द्रव्यनिरूपणान्तर्गतात्मनिरूपणावसरे, आत्मगुणबुद्धेः अनुभवरूपायाश्चातुर्विध्य-मुपक्षिप्य, प्रत्यक्षादीनि चत्वारि प्रमाणानि सपरिकरं निरूप्य, ततः मनःप्रतिपादनेन द्रव्यनिरूपणं समापितम् । ततः रूपादीनां गुणानां लक्षणं साधर्म्यवैधर्म्यादिकं, बुद्धि-प्रसङ्गेन प्रागनुक्तानां तदनुबन्धिप्रमेयाणां तत्त्वञ्च निरूप्य, कर्मादीन्पञ्चपदार्थानधिकृत्य लक्षणप्रकरणानुक्तस्य वक्तव्यशेषस्याभावात् शब्दाख्यगुणनिरूपणेनैव भाषापरिच्छेदमुप-समहार्षुः ।

अयञ्च निबन्धः स्वनिर्मितसिद्धान्तमुक्तावल्या व्याख्यया भूषितोऽस्ति । यदाहुः—

'निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥'

इति । 'रूपरसगन्धस्पर्शवती पृथिवी' इत्यादिवैशेषिकसूत्रानुसारेण तत्तल्लक्षणपरिष्कार-पूर्वकं पृथिव्यादिनिरूपणं, दीधितिकृदभिहितमार्गेण अनतिप्रयोजनकं विचारं परित्यज्य व्याप्त्यादिलक्षणनिरूपणं, दोषसामान्यलक्षणकथनपूर्वकं नव्यनैयायिकसिद्धदोषस्वरूप-तद्दूषकताबीजनिरूपणं, हेत्वाभासेषु प्राच्यनव्यमतभेदव्युत्पादनाय भाषापरिच्छेदे प्राच्याभिमतस्य, मुक्तावल्यां नव्याभिमतस्य असाधारणानुपसंहारिसत्प्रतिपक्षादेः निरूपणं, सावान्तरप्रभेदं पाकजप्रक्रियानिरूपणञ्च कस्य वा सुमनसो न प्रमोदमावहति ? प्रति-पाद्यविषयप्रधाना चैषां वैखरी न प्राचीनानामिवातिरमणीया वर्तते ।

यं प्रधानं स्वीकृत्य 'प्राधान्येन व्यपदेशा भवन्ती' इति न्यायेन न्यायशास्त्रमिति व्यपदेशः, स न्यायः पञ्चावयवात्मकः न प्रतिपादितोऽस्मिन् ग्रन्थे । न जानीमश्च तत्परित्यागे निमित्तम् ।

मुक्तावली-व्याख्यापरिचयः । इयञ्च सिद्धान्तमुक्तावली बालकृष्णात्मजमहादेवभट्टैः प्रकाशाभि-धया व्याख्यया सह प्रकाशिता, यस्यां भाष्यादिसिद्धाः गदाधरीयादि-नवीनग्रन्थोक्ताश्चार्था व्युत्पादिताः । सा च व्याख्या शब्दखण्डान्तं महादेवनिर्मिता तत्सूनुभिः पितृतुल्यैः दिनकरभट्टैः पूरिता दिनकरीयनाम्ना विश्रुताभूत् ।

'दिनकरशितिकण्ठौ यस्य कण्ठे लुठेतां स जयति शितिकण्ठं कण्ठशोषं विनैव' इत्याभाणकश्च दिनकरीयस्य निरतिशयव्युत्पत्त्याधायकत्वं ब्रूते ।

दिनकरीयञ्च व्युत्पत्तिवादव्याख्यातृभिः रामेश्वरसूनुभिः रामरुद्रभट्टाचार्यैः विरचितया नातिविस्तृतया नातिसंक्षिप्तया सरलया व्युत्पादिकया तरङ्गिण्या व्याख्यया समलङ्कृतं वर्तते । सा च तरङ्गिणी शब्दखण्डान्तमेवोपलभ्यते । उपरितनव्याख्या तु नैयायिकधुरंधरैः राजेश्वरशास्त्रिमहोदयैः द्राविडैः पूरिता मुद्रिता चोपलभ्यते ।

सिद्धान्तमुक्तावल्याः विस्तृता प्रभानाम्नी टीका रायनरसिंहपण्डितैः ग्रथिता विलसति । तदन्तेवासिभिः पट्टाभिरामशास्त्रिभिः मञ्जूषाभिधा असंपूर्णा टीका रचिता वर्तते । प्रभाकारणां महादेवग्रन्थदूषणे महान्निर्भरोऽवगम्यते ।

दिनकरीयस्य सुबोधिनीनाम्नी टीका गोश्रीभूपाल-रामवर्मपरीक्षिन्महाराजैः विरचिता मुद्राप्यमाणा वर्तते, यस्यां दूषणभूषणप्रकाराः पाठभेदाः व्युत्पादकाश्चानेके विषयाः समालोचिता वर्तन्ते ।

भाषापरिच्छेदपरम्परा नैयायिककुलेऽतिविश्रुता निरतिशयमुत्कर्षमावहति ।

न्यायसिद्धान्तमञ्जरी

वङ्गदेशीयैः जानकीनाथतर्कचूडामणिभट्टाचार्यैः चतुर्विधप्रमाणमात्रनिरूपिका न्यायसिद्धान्तमञ्जरी परिच्छेदचतुष्टयगुम्भिता निर्मितास्ति । अयञ्च प्रबन्धः शब्दपरिच्छेदे शाब्दबोधौपयिकान् सारतमान् नव्यन्यायसिद्धान्तार्थान् प्रतिपादयति । अस्य व्याख्याद्वयं वर्तते । तयोरेकं दीक्षितश्रीकण्ठविरचितं शितिकण्ठीयनाम्ना विख्यातम् । तत्र शब्दपरिच्छेदे गदाधरभट्टाचार्यादिभिः तत्र तत्र विवेचिताः बहवोंऽशा व्युत्पादिताः । इममेव व्याख्यातारं गोचरयति 'दिनकरशितिकण्ठौ' इति पूर्वमुक्त आभाणकः ।

न्यायसिद्धान्तदीपः

शशधरभट्टाचार्यैः न्यायसिद्धान्तदीपनामा संदर्भः विविधवादालङ्कृतो व्यरचि । स च ईश्वरग्रन्थमध्य एवापरिसमाप्तो मुद्रितोऽस्ति । अस्य च न्यायरत्नाभिधं व्याख्यानं वेदान्तपरिभाषाकाराः धर्मराजाध्वरीन्द्राः रचयामासुः इति वेदान्तपरिभाषागततदीयपद्यादवगम्यते—

'टीका शशधरस्यापि बालव्युत्पत्तिदायिनी ।
पदयोजनया पञ्चपादिका व्याकृता तथा ॥' इति ।

अयञ्च श्लोकः देवनागरलिप्या मुद्रिते परिभाषापुस्तके न दृश्यते । परन्तु महीशूरनगरे पण्डितप्रवरकस्तूरीरङ्गाचार्यैः परिशोध्य प्रकाशिते आन्ध्रलिप्या मुद्रिते परिभाषापुस्तके उपलभ्यते । 'शशधरस्येति । शशधरकृतन्यायसिद्धान्तदीपस्य न्यायरत्नं नाम टीका कृतेत्यर्थः' इति तद्व्याख्यातारः रामकृष्णदीक्षितेन्द्राः तत्पुत्रा निरूपयन्ति ।

न्यायरत्नम्

कथाकुतुकी मणिकण्ठः कथोपयोगितत्त्वनिरूपणपरं न्यायरत्ननामकं प्रौढं प्रकरणग्रन्थं व्यतानीत् , योऽद्य मुद्रयित्वा प्रकाश्यते । मणिकण्ठस्य मणिमिश्र इति नामापि श्रूयते इति पुस्तकसूचीषु निर्देशतोऽवगच्छामः ।

न्यायप्रयोगवती कथा । अतः न्याये निरूपणीये, तस्य परामर्शप्रयोजकवाक्यरूपत्वेन परामर्शो निरूपणमर्हति । परामर्शश्च व्याप्तिपक्षधर्मतावैशिष्ट्यावगाहि ज्ञानमिति

तद्घटकव्याप्तिः पक्षधर्मता च प्रतिपादनीया । तयोश्च व्याप्तिरादौ निरूपणीया संवृत्ता । व्याप्तिज्ञानञ्च येन भवति स तर्कः प्रथमं निरूप्यतेऽत्र न्यायरत्ने ।

यदाह—

‘ अनुमाननिदानस्य व्याप्तिज्ञानस्य कारणम् ।
आदौ तर्कं निरूप्येह पश्चादन्यन्निरूप्यते ॥ ’ इति ।

तर्कानन्तरं तद्ग्राह्यां व्याप्तिं, ततः तत्प्रसङ्गेनोपाधिं, ततः पक्षधर्मतां, ततो व्याप्तिपक्षधर्मतावैशिष्ट्यावगाहिनं परामर्शञ्च व्युत्पादयामास मणिकण्ठः । तदनु तत्प्रयोजकवाक्यात्मकन्यायं ततः तत्प्रयोगवतीं कथां वादजल्पवितण्डभेदभिन्नां च प्रत्यपादयत् । वादस्य तत्त्वनिर्णयफलकत्वात् जल्पवितण्डयोर्विजयफलकत्वात् कथानिरूपणानन्तरं तत्त्वनिर्णयविजयप्रयोजकं हेत्वाभासं, ततः जल्पादिषु प्रयुज्यमानं छलं जात्युत्तरं कथावसानिकं निग्रहस्थानञ्च निरूप्य, अन्ते कथासु विजिगीषूणां कृते भ्रामकं महाविद्याप्रयोगं वर्णयित्वा न्यायरत्नं समापयामास ।

अद्यत्वे सभासु वाक्यार्थविचारः प्रायेण वक्तुः ग्रन्थोक्तार्थस्य लक्षणादेः परिज्ञाननिर्णयफलकः प्रश्नोत्तरप्रणालिकया क्रियते, न तु न्यायदर्शनविहितपद्धत्या ! अधिकरणस्थले अद्य प्रवर्त्यमानविचारवत् कर्तव्यतया विचारो विहितो न्यायदर्शने । कथायां हि सिद्धान्तद्वयरहस्यवेदिनां व्यवराणां ग्रहणधारणप्रतिपादनकुशलानां सदस्यानां, वादिप्रतिवादिसदस्यसंमतस्य रागद्वेषरहितस्य निग्रहानुग्रहसमर्थस्य कथाफलप्रतिपादकस्य सभापतेः, लिपिकरणव्यवहारेषु उभयसंमतस्य लेखकस्य च वरणं विहितम् । विद्यातः संभावितावेव वादिप्रतिवादिनौ कथायामधिक्रियेते । अयं विषयः इदं दर्शनमवलम्ब्य अनेन वादिना साधनीयः इति नियमनं सदस्यैः कर्तव्यम् । कथकगुणदोषावधारणं सदस्यकृत्यम् , अन्ते सभापतिना निष्पन्नकथाफलं प्रतिपादनीयमिति व्यवस्था विहिता न्यायदर्शने । सा चाद्यत्वे राजकीयविचारसभासु किञ्चिदिवानुस्रियमाणा लक्ष्यते ।

अयञ्च ग्रन्थः न्यायसूत्रोक्तपदार्थेषु प्रमेयं संशयं प्रयोजनं दृष्टान्तं सिद्धान्तं निर्णयञ्च विना प्रमाणादीन् दश पदार्थान् निरूपयति । प्रमाणेष्वपि अनुमानमेवात्र निरूपितं न प्रत्यक्षादिकम् । आन्वीक्षिक्या विद्यायाः अन्वीक्षाप्रधानत्वात् प्रधानभूतमेवानुमानं वर्णयामास, नाप्रधानम् ।

न्यायसूत्रकारादिभिः अपवर्गोपयोगिप्रमेयतत्त्वावधारणैदम्पर्येण शास्त्रं प्रवर्तितम्। ततः तत्त्वनिर्णयस्य वादादिसाध्यतया वादादिकथानिरूपणस्यावश्यकता सञ्जातेति, कथा प्रतिपादनायैव न्यायशास्त्रं प्रवृत्ते इत्यभिसन्धिना ग्रन्थकारोऽयं कथामेव न्यायदर्शनसारतया निरूपयितुमारेभे । सृष्टिप्रलयेश्वरादिविषये विमतिसद्भावेऽपि पूर्वमीमांसाविहिते वेदवाक्यार्थनिर्णय इव, प्रकृत्यादिविषये विमतावपि योगशास्त्रविहिते योगाङ्गादाविव, स्फोटादौ वैमत्येऽपि व्याकरणाधीने शब्दसाधुत्वनिर्णय इव च अपवर्गस्वरूपप्रमाणचतुष्ट्वादौ वैमत्येऽपि नैयायिकविशदीकृते कथास्वरूपे सर्वदार्शनिकानां संमतिरस्त्येवेति सर्वदार्शनिकादृतमसाधारणं कथास्वरूपमेव सपरिकरं निरूपयामास न्यायरत्ने । कथयापवर्गोपयोगितत्त्वनिर्णयः स्वयं संपादयितुं शक्यते इति प्रमेयनिरूपणे उदास्ते श्रीमणिकण्ठः । जातिनिग्रहस्थाननिरूपकोंऽशः ग्रन्थस्यार्धो भागः । जातीनां निग्रहस्थानानाञ्च विस्तरेण निरूपणं, महाविद्याप्रयोगकथनञ्चास्य कथाकुतुकितां प्रकटीकरोति ।

कथासु सद्दूषणापरिस्फूर्तौ सत्यां प्रतिवादिनः साम्यापादनबुद्धिर्भवति । अस्मदुक्तेन जात्युत्तरेणायं पर्याकुलितमानसः यदि स्वयमप्यसदुत्तरं ब्रूयात् , तदा ममेवास्यापि निरनुयोज्यानुयोगः स्यात् , निष्प्रतिभश्चेत् पर्यनुयोज्योपेक्षणं भवेदिति उभावपि समौ भविष्यावः इति साम्यापादनबुद्ध्या जातिवादी प्रत्यवतिष्ठते । प्रयुक्ते हेतौ जायमानत्वात् असदुत्तरं जातिरित्युच्यते जातिस्वरूपं तस्योत्तरञ्च केवलं न्यायदर्शने पञ्चमाध्याये व्युत्पादितम् । भाष्यवार्तिकतात्पर्यटीकासु च तन्नातिविस्तृतं वर्तते । जातीनां निरूपणम् अतिसूक्ष्मं परहृदयसंवेदनमपेक्षते । सभासंक्षोभादिना पर्याकुलितचेताः सदसद्विवेकानवधारणेन व्याप्तिमपुरस्कृत्य कीदृशमसदुत्तरं वक्तुं प्रभवति । तस्य कस्मिन् हेत्वाभासे पातनं विवक्षितम् । तस्योत्थानबीजञ्च किमित्यादीनि विना पुरुषमतिवैचित्र्यविज्ञानं दुर्निरूपाणि भवन्ति ।

चतुर्विंशतिधा विभक्तानां जातीनामवान्तरप्रभेदम् , अन्योन्यवैलक्षण्यं, प्रत्येकं सामान्यतो दूषकताबीजं, स्वव्याघातकत्वं, विशिष्य दूषकताबीजं, युक्ताङ्गहान्ययुक्ताङ्गाधिक्याविषयवृत्तित्वादिकञ्च सुनिरूपितमाचार्यैः न्यायपरिशिष्टे । अत एवेदृशजातिनिरूपकस्य पञ्चमस्याध्यायस्यातिगहनत्वमुक्तं विश्वनाथन्यायपञ्चाननैर्वृत्तिग्रन्थे । वरदराजार्यैः तार्किकरक्षायां जातीनां स्वरूपं सावान्तरभेदं न्यायसूत्रयोजनपूर्वकं सुष्ठु विशदीकृतम् । लक्ष्यं लक्षणमुत्थानं पातनावसरौ फलम् मूलमित्यासां जातीनां सप्ताङ्गानि निरूपितानि ।

न्यायरत्नेऽपि सावान्तरप्रभेदाः सदाङ्गा जातीः सुविशदं निरूपयति मणिकण्ठः। तार्किकरक्षाकृतः न्यायरत्नकारस्य च परस्परग्रन्थपरिचयो न लक्ष्यते। जातिवादिनं प्रति सदुत्तरमेव वक्तव्यम्।

एवमत्र निग्रहस्थानानि द्वाविंशतिधा विभक्तानि सावान्तरभेदं प्रपञ्चितानि।

परस्परव्याहतिशून्यं प्रकृतोपयुक्तं समानसमयपदैः गुम्भितं लोकरूढम् अवगमितावयवार्थं निरस्तदोषं परिपूर्णमन्वितम् आकाङ्क्षाक्रमेण ब्रूयात्। अधिकं न वक्तव्यम्। कक्ष्यान्तरे न विशेषणीयम्। स्वदोषपरिहारेणैव परस्य दोषं प्रसञ्जयेत्। निर्वाह्यमेव वदेत्। उक्तञ्च निर्वहेत्। प्राश्निकाद्यवगतञ्च नापलपेदित्यादिकां कथासु प्रतिपादनपद्धतिमवगमयति द्वाविंशतिभेदभिन्नानां निग्रहस्थानानां सावान्तरप्रभेदं प्रपञ्चनम्।

जातिनिग्रहस्थानप्रकरणे न केवलमयं ग्रन्थकारः न्यायसूत्रं न योजयति। परन्तु क्वचित् सूत्रोक्तं लक्षणं दूषयत्यपि। अप्रतिभाख्यनिग्रहस्थानस्य लक्षणं, 'स्वीयसन्देहाविष्करणमप्रतिभा, यथा सन्देहोऽस्माकमस्मिन्विषये' इति सोदाहरणमुक्त्वा, न तु 'उत्तरस्याप्रतिपत्तिरप्रतिभा' इति सूत्रोक्तं तल्लक्षणं दूषयति। नैयायिककुलाधीयमानप्रकरणग्रन्थेषु कुत्रापि न जातिनिग्रहस्थानविषयको विचारः विस्तृतः व्युत्पादकश्च दृश्यते यथात्र न्यायरत्ने। जयरामभट्टाचार्यः न्यायसिद्धान्तमालायां १६५ P. निग्रहस्थाननिरूपणे मणिकण्ठं स्मरति 'दूषणबुद्ध्यासत्प्रसङ्गो मतानुज्ञेति मणिकण्ठोऽप्येतदनुयायी' इति। 'तथाच मणिकण्ठः उद्भावनार्हनिग्रहस्थानानुद्भावनं पर्यनुयोज्योपेक्षणम्' इति मणिकण्ठोक्तञ्च प्रमाणतयोपन्यस्यति न्यायसिद्धान्तमालायां जयरामभट्टाचार्यः। परन्तु न्यायसिद्धान्तमालाकारः स्वसमये जातिस्वरूपापरिज्ञानं जातीनां प्रयोगमान्द्यञ्च स्वस्य विस्तरेण जातीनामनिरूपणे हेतुं ब्रूते —

'जातीनामधुना मान्द्यादज्ञानादप्यनादरः।
अतः कथञ्चित्सिद्धान्तदिङ्मात्रमिह दर्शितम्'॥ इति।

तेन तत्काल एव न्यायदर्शनविहितपद्धत्या कथाकरणस्य विरलतामवगच्छामः।

तर्कव्याप्त्यादीनां निरूपणं महापूर्वपक्षतन्निरासमुखेन प्रवृत्तमस्ति। बहुधा विकल्प्य दूषणे आदरातिशयो लक्ष्यते। व्याप्तिनिरूपणादौ भूषणवल्लभाचार्यवाचस्पतिमिश्रोदयना-

चार्यप्रभृतिसंमतानि लक्षणानि अनूद्य दूषितानि । परन्तु तत्तल्लक्षणकर्तॄणां नामानि न निर्दिष्टानि । परिशिष्टं, रत्नकोशः , खण्डनम् इत्यादिकतिपयग्रन्थनामैवोल्लिखितं वर्तते । बहुधा विकल्प्य लक्षणानि दूषयित्वा अनुभवसिद्धजातिभेदं लक्षणतया सिद्धान्तयति । यथा तर्कस्य जातेश्च । तर्काणां प्रभेदस्य तर्काभासस्य उपाधेः नानाविधलक्षणानाञ्च निरूपणं सांप्रतमधीयमानप्रकरणग्रन्थेषु नोपलभ्यते । शैली सरला, उदयनाचार्याणामिव नातिप्रौढा गभीरा च । नात्र सिद्धान्तमुक्तावल्यादाविव नव्याद्दतपरिष्कारररचना समुपलभ्यते ।

अयं ग्रन्थकारः सामान्यलक्षणप्रत्यासत्तिम्, उदयनाचार्योक्तां संकरस्य जातिबाधकताञ्च नाङ्गीकरोति । वह्निव्याप्यधूमवानयं पर्वतो वह्निमानित्यनुमितिरिति लिङ्गोपधानपक्षमेव बहु मन्यते ।

किञ्च अवयवप्रकरणे (१२६ P) 'यज्ज्ञानमनुमितेः साक्षाज्जनकं तदेव प्रतिपादयितुमुचितम् । अन्यथा तज्जनकपरम्पराप्रतिपादनेऽनवस्था । व्याप्तिपक्षधर्मताविशिष्टस्यैवार्थस्य ज्ञानं साक्षादनुमितिजनकमिति तावन्मात्रस्य प्रयोगो युज्यते । स च एतत्साध्यव्याप्यैतद्धर्मवानयमिति वा, एतद्वृत्तिरयं धर्मः साध्यव्याप्यः इति वा, एतद्वृत्त्येतद्धर्मव्यापकं साध्यमिति वा कर्तव्यः' इत्युक्त्वा आकाङ्क्षाक्रमेणाभिधानाय पञ्चावयवप्रयोगमाक्षिप्य दूषयांचक्रे । इदञ्चास्यासाधारणं मतम् ।

'अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा' ॥ (८२ P)

इति कुमारिलवार्तिकमाचार्यवचनतया वदन्नयं कुमरिले स्वस्य बहुमानातिशयं प्रकटीकरोति ।

१०८ P. उपाधिवादावसाने 'अधिकं नयचिन्तामणौ चिन्तितम्' इति वचनात् नयचिन्तामणिनामा प्रबन्धोऽपि विरचितोऽनेनेति प्रतीयते ।

अयञ्च मणिकण्ठः खण्डनखण्डखाद्यकारात् श्रीहर्षादर्वाचीनः , खण्डनग्रन्थस्योल्लेखात् । न्यायसिद्धान्तमालायां जयरामभट्टाचार्येण स्मृतत्वादयं जयरामभट्टाचार्यात्प्राक्कालिकः। सौन्दडोपाध्यायसंमतमुपाधिलक्षणं नवीनसंमतलक्षणत्वेन निरूपयन्नयं सौन्दडोपाध्यायान्नाति-

विप्रकृष्टकालिकः इत्यवगच्छामः । यद्यपि (८२ P) 'नवीनास्तु उपाधिर्नामासावुच्यते यदभावो व्यभिचारविरोधी' इत्यादिना ग्रन्थेन सौन्दडमतमुक्तमिति व्याख्यानतो न ज्ञायते, 'नैयायिकनव्यमतं दूषयितुमुपन्यस्यति' इत्येवावतरणिकाया द्युतिमालिकायां दर्शनात्; तथापि उपाधिवादे गदाधरीये अस्य लक्षणस्य सौन्दडोपाध्यायलक्षणत्वेनाभिधानात् अत्र नवीनपदेन सौन्दडोपाध्याय एव गृहीत इति स्पष्टं प्रतीमः । तत्त्वचिन्तमणावपि तत्र तत्र नवीनपदेन सौन्दडोपाध्यायो गृहीत इति मधुरानाथतर्कवागीशरचितरहस्यादवगम्यत इति प्रागेव निवेदितमस्माभिः । अतः सौन्दडोपाध्यायान्नातिविप्रकृष्टकालिकौ मणिकण्ठ-गङ्गेशोपाध्यायौ इति सिध्यति । तयोरपि मणिकण्ठः गङ्गेशोपाध्यायात्प्राक्कालिक इति भाति । हेत्वाभासेषु अनैकान्तिकः साधारणः असाधारणश्चेति द्विविधः इति मणिकण्ठो ब्रूते । एवं तार्किकरक्षायामपि अनैकान्तिकस्य द्वैविध्यमेवाभिहितम् । सर्वमनित्यं प्रमेयत्वादिति तु असिद्धेऽन्तर्भवतीति प्रत्यपादि मणिकण्ठेन । गङ्गेशोपाध्यायस्तु तत्त्व-चिन्तामणौ, तस्यासिद्धेऽन्तर्भावं दूषयित्वा अनुपसंहारिणि अनैकान्तिकेऽन्तर्भावमभिधाय अनैकान्तिकस्य त्रैविध्यं व्यवस्थापयति । मणिकण्ठेन तु न मणिकारोक्तं दूषितं, नाप्यनु-मोदितम् । अतः किंचिदिव गङ्गेशात्प्राक्तनोऽयमिति प्रतिभाति ।

एवं बाधितस्यासिद्धानैकान्तिकयोरेवान्तर्भावपक्षः, बाधस्योपजीव्यत्वात् पृथग्दूषण-त्वसमर्थनेन निराकृतः, न तु असाधारण्येन मणिकृत्प्रदर्शितस्य असिद्धिव्यभिचारा-संकीर्णस्य गन्धप्रागभावावच्छिन्नो घटः गन्धवान् पृथिवीत्वादित्युदाहरणस्य प्रदर्शनेन ।

एवं पक्षतानिरूपणे साध्यसंशयस्य सिषाधयिषायाश्च पक्षतात्वं निरस्य, अन्ते मणिकृता सिद्धान्तितं सिषाधयिषाविरहसहकृतसाधकमानाभावस्य पक्षतात्वं नाभिहितम् । परन्तु (११५ P) 'यत्र हि संशयविरोधिसाधकबाधकप्रमाणाभावः तत्रानुमित्युत्पत्तिः । एवञ्च संशये सति वा, जिज्ञासायां सत्यां वा, साधकबाधकप्रमाणाभावलक्षणयोग्य-तायां सत्यां वा व्याप्तिज्ञानादिसहकृतसामग्रीत एवानुमितिरस्तु इत्याचख्यौ ।

अतः तत्त्वचिन्तामणिकारात् किञ्चिदिव प्राचीनः सौन्दडोपाध्यायान्नातिविप्र-कृष्टकालिकोऽयं मणिकण्ठः इति प्रतिभाति ।

## न्यायरत्नटीका द्युतिमालिका

चामभूपाश्रितः गरुडाचलस्थश्रीलक्ष्मीनृसिंहभक्तः आन्ध्रदेशाभिजनः नृसिंहयज्वा अधीतसर्वशास्त्रः न्यायरत्नस्य द्युतिमालिकां नामान्वर्थां व्याख्यां रचयामास । स च विस्तृतस्य विशदस्य न्यायरत्नोत्तरभागस्य जातिनिग्रहस्थाननिरूपकस्य अवतरणार्थविशेषनिर्धारणादेरनुपयुक्ततां मन्यमानः, न्यायसूत्रानुद्धारनिबन्धनां मूलकृतो न्यूनतां निराचिकीर्षुरिव प्राधान्येन तत्तत्सूत्रार्थं सोदाहरणं वर्णयामास । पूर्वभागञ्च विस्तरेण सुविशदं व्याचख्यौ ।

अपवर्गोपयोगितया महर्षिप्रणीतशास्त्रार्थसंग्राहकप्रकरणस्यास्य न्यायरत्नस्य आत्मादिप्रमेयतत्त्वानिरूपणप्रयुक्तां न्यूनतामिव परिजिहीर्षुः 'न्यायरत्नप्रसादेन' इति प्रथमश्लोकव्याख्यामिषेण आत्मतत्त्वविषयकमनुमाननिरूपणफलतया गङ्गेशोपाध्यायोक्तं जगन्निर्मातृपुरुषधौरेयस्येश्वरस्य साधकञ्चानुमानं सपरिकरं व्युत्पादयामास ।

अयञ्च गङ्गेशोपाध्यायरचिततत्त्वचिन्तामणिरसिक इति भाति । यतः व्याप्तिप्रकरणे हेत्वाभासप्रकरणे तर्कप्रकरणे च मणिवाक्यान्येव स्वग्रन्थे घटयति । कुत्रचिच्च अर्थतोऽनुवदति । अयञ्च क्वचिन्मूलकारेण विसंवदते । तत्रापि मणिकारोक्त्यादर एव मूलं लक्ष्यते । अनैकान्तिकद्वैविध्यनिरूपकमूलव्याख्याने 'वस्तुतस्तु' इत्यारभ्य 'तदुक्तं गङ्गेशेन' इत्यादिना चिन्तामण्युक्तयुक्त्यैव अनुपसंहारिणः अनैकान्तिकत्वं साधयति । एवमवयवप्रकरणेऽपि मणिकारोक्तयुक्त्या पञ्चावयवप्रयोगमेव बहु मन्यते मूलविरुद्धम् । दशविधोऽपि बाधः मणिसरण्यैवानेन न्यरूपि ।

मणिव्याख्यातारं जयदेवमिश्रं रुचिदत्तञ्च व्याप्तिलक्षणकथनावसरे अनुमितिलक्षणप्रस्तावे सामान्यलक्षणप्रत्यासत्तिविवेचनावसरे चोल्लिखति, न दीधितिकारम् । न वा व्याप्त्यादेः दीधितिकारोक्तपरिष्कारं प्रदर्शयति । तस्मादयमपरिचितदीधितिः कदाचित् शिरोमणिभट्टाचार्यात्प्राक्तनः स्यादिति प्रतिभाति । यद्यपि व्याप्तिनिरूपणे(५४ P) 'एवकारः नियतसामानाधिकरण्यमिति मतान्तरनिरासार्थः इति न्यायभूषणप्रकाशेऽभिहितं गदाधरमिश्रेण' इति द्युतिमालिकावचनं दृश्यते; तथापि नायं गदाधरभट्टाचार्यानन्तरकालिको भवितुमर्हति । दीधितिकारपरिचयस्यैवानवगत्या भट्टाचार्यानन्तरकालिकत्वस्यासंभवदुक्ति-

कत्वात् । किंच गदाधरभट्टाचार्याश्च न कुत्रापि मिश्रपदेन व्यपदिश्यन्ते । अतोऽत्रोक्तः गदाधरमिश्रः अन्य एव प्रसिद्धगदाधरभट्टाचार्यादिति ।

अस्य च वेदान्तमते आदरः खण्डनकारे महती भक्तिश्चेति ज्ञायते । यतः, खण्डनं महाखण्डनशब्देन व्यवहरति (१६ P) 'तदुक्तं महाखण्डने' इति । (१९P) 'तथाच साधूक्तं ब्रह्मसंवेदनादनाद्यविद्यानिवृत्तिरित्यलमनेन' इति मूलव्याख्याव्याजेन सदलप्रयोजनमद्वैतशास्त्रोक्तमज्ञानलक्षणं विवरणाचार्यामिमतं लक्षणञ्च प्रतिपाद्य, 'साधूक्तम्' इति मूलकारस्य खण्डनविषये विडम्बनोक्तिमसहमान इव 'वस्तुतस्तु इदं तुच्छतमम्' इत्यादिना मूलं दूषयति । तर्कप्रकरणे अनवस्थाया आपादन-प्रकारनिरूपकमूलस्थसामान्यपददर्शनमात्रेण नित्यमेकमनेकानुगतमिति सामान्यलक्ष-णस्य, समवायपदश्रवणमात्रेण नित्यसंबन्धत्वं समवायत्वमिति लक्षणस्य, कर्मलक्ष-णस्य च दुर्निरूपतां खण्डनसंमतां मूलार्थावधारणानुपयुक्तां विशदयन्नयं स्वस्य खण्डनकारे महतीं बहुमतिमाविष्करोति । अस्य श्रीहर्षे बहुमतिरेव, प्रामाणिकतया स्वसंमतस्य मणिकारस्यापि

'व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ॥'

इति खण्डनोक्तेरुद्धारं 'यत्तु कश्चित्' इत्यादिनानूद्य, 'तत्तुच्छम्' इति शब्दप्रयोग-पुरस्सरं दूषणे एनं प्रवर्तयति ।

भ्रंशाः (१९२ P) जातिनिरूपणोपक्रमे 'सिद्धं दूषणासमर्थमुत्तरं जातिः' इति समीचीनः मूलपाठः । स एवोत्तरमूलानुसारी च दृश्यते । अभिहितश्चास्माभिः तथैव तत्र टिप्पण्याम् । तं पाठं विहाय सिद्धदूषणासमर्थमिति पाठं धृत्वा 'सिद्धानि यानि दूषणानि तत्रासमर्थमित्यर्थः' इति व्याख्यानं न हृदय-ङ्गमम् । एवम् (९३ P) उपपत्तिसमप्रपञ्चत्वादिति मूलग्रन्थेन उपपत्तिसमरूपजातिभेदो विवक्षितः । तत्र समप्रपञ्चत्वादिति मूलप्रतीकमुपादाय निश्चितोपाधिना तुल्यविस्तरत्वा-दित्यर्थः इति व्याख्यानमपि न सहृदयरञ्जकम् । एवं निग्रहस्थानप्रकरणे (२३१ P) 'कश्यपतनयाधृतिहेतुरयं, त्रिणयनतनययानसमाननामधेयवान्, तत्केतुमत्त्वात्' इति

मूले वह्निकेतोः धूमस्याधारत्वादिति स्वारसिकार्थबोधकं तत्केतुमत्त्वादिति पाठमनादृत्य हेतुतमत्वादिति पाठं प्रकल्प्य कारणतमत्वादित्यर्थः इत्यननुगुणं व्याख्यानं दृश्यते । एवं (२७ P) 'यद्ययं घटः एतद्घटजन्यः स्यात् एतद्घटाद्यकालवृत्तिर्न स्यात्' इति मूलस्य एतद्घटोत्पत्तिक्षणः इति स्वारसिकमर्थं विहाय, एतद्घटादाद्यकालः एतद्घटपूर्वकालः इति विवरणं न सहृदयान् प्रीणयति । एवम् अनध्यवसितनामकस्य हेत्वाभासस्य निरूपणावसरे अनध्यवसितस्य सर्वमनित्यं प्रमेयत्वादित्युदाहरणमभिहितं द्युतिमालिकायाम् । उभयकोट्युल्लेखिसंशयादतिरिक्तः किंस्विदित्याकारकः अनध्यवसायः असाधारणधर्मज्ञानजन्यः इति वैशेषिकराद्धान्तः । असाधारणो हेतुः न संशयजनक इति अनैकान्तिके नान्तर्भवति । परन्तु अनध्यवसायजनकत्वात् अनध्यवसितसंज्ञयोच्यते । एवञ्चासाधारणपर्यायः अनध्यवसितः । स्पष्टञ्चैतत् न्यायलीलावतीप्रकाशादिषु । सति चैवं विना प्रमाणं सर्वमनित्यं प्रमेयत्वादित्यनध्यवसितस्योदाहरणमिति लेखनं न समीचीनम् ।

(२ P) 'सर्वाधिष्ठाता संसारधर्मैरीषदप्यसंस्पृष्टः परो भगवान् महेश्वरः सर्वज्ञोऽनादिः सकलजगद्विधाता श्रुत्यनुमानाभ्यामवगम्य इत्यक्षपादमुनिनाभिसंहितम्' इत्युक्त्वा ईश्वरलक्षणानि व्याचष्टे श्रुत्यनुमानाभ्यामित्यत्र श्रुतिशब्देन एक एव रुद्रो न द्वितीयाय तस्थे य इमान् लोकानीशते ईशिनीभिः इति श्रुतिर्विवक्षितेति च व्याकरोति । अक्षपादसूत्रेषु नैवंलक्षणं सूत्रं क्वचिदप्युपलभ्यते । परन्तु भासर्वज्ञविरचिते न्यायसारे तृतीयपरिच्छेदे सूत्रप्रायाण्येतानि वाक्यानि दृश्यन्ते । इयमेव श्रुतिरुद्धृता भासर्वज्ञेन । जैनग्रन्थेषु भासर्वज्ञवाक्यानां सूत्रतया निर्देशोऽस्ति । तथा व्याख्यातापि तेषां सूत्रत्वं मन्यत इव । एतदेवाभिसन्धायास्माभिः अक्षपादमुनिनेतिप्रतीकमुपादाय अक्षपादशब्देन अक्षपादीया विवक्षिता इति टिप्पणी रचितेति बोध्यम् ।

न्यायसूत्रेष्वपि व्याख्यात्रभिमतः पाठभेदः समुपलभ्यते ।

(१) संभवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् इति सार्वत्रिकः पाठः । (१९१ P) व्याख्यातृसंमतस्तु-संभवतोऽर्थस्यातिव्याप्तिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलम् इति ।

(२) साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः इति

सार्वत्रिकः पाठः । अत्र चतुर्विंशतिजातय उक्ताः । व्याख्यातृसंमतस्तु पाठः (१९९ P) साधर्म्यवैधर्म्योत्कर्षापकर्षविकल्पसाध्यप्राप्तयप्राप्तयनुत्पत्त्यहेत्वविशेषोपलब्धिनित्यानित्यसमा-जातयः इति । इतरजातयो न सूत्रोक्ता इति नृसिंहज्वा मन्यते ।

(३) साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसा-ध्यसमाः इति सार्वत्रिकः पाठः । व्याख्यातृसंमतस्तु (२०४ P) साध्यदृष्टान्तयोर्धर्म-विकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षविकल्पसाध्यसमाः इति ।

(४) प्रतिषेधानुपपत्तेः प्रतिषेद्धव्याप्रतिषेधः इति सार्वत्रिकः पाठः । व्याख्यातृ-संमतस्तु (२११ P) प्रतिषेधानुपपत्तिस्तत्र सिद्धेः इति ।

(५) अविज्ञातश्चाज्ञानम् इति सार्वत्रिकः पाठः । व्याख्यासंमतस्तु अविज्ञातार्थ-श्चाज्ञानम् इति ।

द्युतिमालिकाकारः तत्त्वचिन्तामणिरसिकः तर्कव्याप्त्युपाधिप्रकरणेषु केवलान्वयि-केवलव्यतिरेकिप्रकरणेषु च विशदया प्रतिपादनपद्धत्या तत्त्वचिन्तामणिसारं बोधयति । तर्कप्रभेदानामात्माश्रयादीनामापादनप्रकारः, तर्काङ्गानि, नानाविधमतानां निरूपणमित्या-दयो बहवोंऽशाः अद्याधीयमानन्यायशास्त्रप्रकरणग्रन्थेभ्यो नाधिगम्यन्ते । वादजल्पवित-ण्डानिग्रहस्थाननिरूपणप्रस्तावे न्यायसूत्राण्युदाहृत्य विवृणोति ।

तस्मादितरप्रकरणग्रन्थानवधारणीयानां तत्त्वचिन्तामणिनिष्कृष्टार्थानां, प्राचीन-न्यायसूत्रार्थानाञ्च सरलया शैल्या प्रतिपादिकेयं द्युतिमालिका अतीवोपकरोति न्यायशास्त्र-प्रविविक्षूणाम् । तया च भूषितं न्यायरत्नं तमःप्रशमनग्रन्थरत्नमेवेति सिद्धम् ।

न्यायदर्शनीयाः प्रबन्धा बहवः अपरिचिताः सन्तीति तत्तद्ग्रन्थपर्यालोचनया अवग-म्यते । यथा अत्रैवोद्धृतः मानमनोहरः । केषाञ्चित् प्रबन्धानां कर्तारो न ज्ञायन्ते । केषाञ्चित् प्रबन्धॄणां प्रबन्धा नाधिगम्यन्ते । एवमगाधन्यायदर्शनमहाम्बुधौ अन्तरवगाहनेऽशक्तेन मया तत्तीरस्थितेन दृष्टिपथप्राप्तकतिपयग्रन्थान् सप्तधा विभज्य प्रतिपाद्यविषयप्रधानं किमपि न्यायशास्त्रचरितं लिखितमाधिकारिकाज्ञावलम्बिना । प्रबन्धॄणामवस्थानसमयनि-र्णायकप्रमाणदर्शनविकलेन विषयाधिगमे नातीवोपयुक्तमैतिहासिकैः विमर्शकैः तत्र तत्राभि-हितं प्रबन्धॄणामवस्थानसमयमधिकृत्य न विचारः प्रवर्तितोऽत्र ।

मूलग्रन्थे उपलब्धः पाठः मूले, व्याख्यातृसंमतश्च पाठः अधस्तात् टिप्पण्यां निवेशितः । बालावबोधाय विषमस्थलटिप्पण्यपि काचन अधस्तात्संयोजिता वर्तते । गुणैकपक्षपातिनः पण्डितप्रकाण्डा दूरीकृत्य सार्वत्रिकं दोषजातं, यदि स्याद् गुणलेशः तमनुमोदमाना अनुगृह्णन्तु लेखकं जनमिममिति प्रार्थयमानो विरमाम्येतावता ।

वि. सुब्रह्मण्यशास्त्री.

## विषयानुक्रमणिका


ग्रन्थकरणप्रतिज्ञा १
टीकायां मङ्गलाचरणम् ,,
,, ईश्वरानुमाने पूर्वपक्षः सिद्धान्तश्च २
,, ईश्वरानुमाननिगमनम् ७

१. तर्कवादः

तर्कस्यानुमितिं प्रति साक्षात्कारणत्वनिरासः ८
,, परंपरया कारणत्वनिरासः ,,
तर्कस्य व्याप्तिग्रहकारणत्वनिरूपणम् १५
व्याघाताप्तोपदेशयोरपि व्याप्तिग्रहकारणत्वम् १८
तत्र खण्डनमतनिरासः १९
तर्कलक्षणे पूर्वपक्षः २०
तत्र सिद्धान्तवर्णनम् २५
तर्कभेदनिरूपणम् २७
अविनिगमादीनां न तर्कभेदरूपत्वम् ३६
तत्र खण्डनमतनिरासः ३९
तर्काभासनिरूपणम् ,,

२. व्याप्तिवादः

व्याप्तिनिर्वचने एकादशधा विकल्पाः, तन्निरासश्च ४२
तत्र भूषणकारादिमतोपन्यासः ५४
सिद्धान्ते व्याप्तिनिर्वचनम् ५५
टीकायां तत्र पूर्वपक्षः समाधानं च ५६
,, व्याप्तिरनुमितिहेतुरिति पूर्वपक्षिमतोपन्यासः ५८
,, व्याप्तिज्ञानमनुमितिहेतुरिति सिद्धान्तोपन्यासः ५९
भूयोदर्शनस्य व्याप्तिग्रहोपायत्वविचारः ६२
सामान्यलक्षणप्रत्यासत्त्या सर्वव्यक्तिषु व्याप्तिग्रहणमिति
मतोपन्यासः, तन्निरासश्च ६३

टीकायां रुचिदत्तमतोपन्यासः, तन्निरासश्च ६५

भूषणकारमतेन सिद्धान्तोपन्यासः ६९

३. उपाधिवादः

उपाधित्वनिर्वचने विकल्पाः ७०

तत्रोदयनकुमारिलमतानुसारेण पूर्वपक्षः, तन्निरासश्च ८१

समव्याप्तस्योपाधित्वमिति नवीनमतनिरासः ८२

रत्नकोशकारमतनिरासः ८६

वल्लभमतनिरासः ८८

सिद्धान्तकथनम् ८९

उपाधिद्वैविध्यम् ९६

संदिग्धोपाधिनिरूपणम् ,,

उपाधेर्दूषकतायां बीजम् १०१

उपाध्याभासनिरूपणम् १०५

तत्र मानमनोहरमतनिरासः १०६

४. पक्षतावादः

पक्षतालक्षणम् १०९

पक्षधर्मताज्ञानस्यानुमितिजनकत्वे आक्षेपः ११३

तत्समाधानम् ११५

५ परामर्शवादः

व्याप्तिपक्षधर्मताज्ञानाभ्यामनुमितिरुत्पद्यत इत्याक्षेपः ११७

परामर्शस्यैवानुमितिजनकत्वमिति सिद्धान्तः ११९

परामर्शविषयहेतुत्रैविध्यम् १२५

६. न्यायनिरूपणम्

७. अवयवनिरूपणम्

अवयवसङ्ख्यायां मतभेदाः १३५

टीकायां प्रतिज्ञानिरूपणम् ,,

,, हेतुनिरूपणम् १३७

| | | |
|---|---|---|
| ,, | उदाहरणनिरूपणम् | १३८ |
| ,, | उपनयनिरूपणम् | १४० |
| ,, | निगमननिरूपणम् | १४१ |
| ८. | कथानिरूपणम्, कथासामान्यलक्षणम् | १४५ |
| ९. | वादनिरूपणम् | १४७ |
| | प्रतिज्ञाहान्यादिनिग्रहस्थानानां केषांचिदत्रासंभवः | १४९ |
| | केषांचित् संभवः | १५१ |
| | केषांचिदुद्भावनमात्रम् | १५२ |
| १०. | जल्पनिरूपणम् | १५४ |
| | जल्पस्य प्रवृत्तिक्रमः | १५५ |
| | तत्र वैशेषिकमतोपन्यासः | ,, |
| | जल्पस्य द्वैविध्यम् | १५६ |
| | तत्र खण्डनकारमतनिरासः | ,, |
| ११. | वितण्डानिरूपणम् | १५७ |
| | तत्र स्थापनापदार्थनिरूपणम् | १५८ |
| १२. | हेत्वाभासनिरूपणम् | |
| | तत्सामान्यलक्षणे विकल्पाः | १५९ |
| | तत्र सिद्धान्तः | १६१ |
| | हेत्वाभासाः पञ्चविधाः | १६२ |
| | तत्राक्षेपः | ,, |
| | सिद्धान्तः | ,, |
| | आश्रयासिद्धादीनां पृथक्त्वशङ्कानिरासौ | १६४ |
| | सव्यभिचारनिरूपणम् | १६६ |
| | तस्य द्वैविध्यम् | ,, |
| | टीकायां साधारणनिरूपणम् | १६७ |
| | ,, असाधारणनिरूपणम् | १६९ |
| | अनुपसंहारिणो व्याप्यत्वासिद्धावन्तर्भावः | १७१ |

विरुद्धनिरूपणम् १७३
विरुद्धस्य पृथक्त्वगणनावश्यकता १७४
सत्प्रतिपक्षनिरूपणम् १७५
तत्र परेषां लक्षणस्य दूषणम् १७६
स्वोक्तलक्षणे परेषामाक्षेपः १७७
तत्र समाधानम् १७८
असिद्धनिरूपणम् १८०
बाधितनिरूपणम् १८२
तत्र वैशेषिकमतनिरासः १८३
सिद्धसाधनस्य न पृथग्दूषणत्वम् १८४
बाधद्वैविध्यम् १८७

१३. छलनिरूपणम्, छलसामान्यलक्षणम् १८८
तत्र परमतोपन्यासः १९०
छले पञ्च भेदाः ,,

१४. जातिनिरूपणम्
जातिलक्षणे विकल्पाः १९२
सिद्धान्ते जातिलक्षणम् १९५
साधर्म्यसमनिरूपणम् १९९
तस्य त्रैविध्यम् २००
वैधर्म्यसमनिरूपणम् ,,
उत्कर्षसमनिरूपणम् २०१
तत्र वैशेषिकमतोपन्यासः ,,
तस्य द्वैविध्यम् २०२
अपकर्षसमनिरूपणम् ,,
वर्ण्यसमनिरूपणम् २०३
अवर्ण्यसमनिरूपणम् ,,
विकल्पसमनिरूपणम् ,,
साध्यसमनिरूपणम् २०४

| | |
|---|---|
| प्राप्तिसमनिरूपणम् | २०५ |
| अप्राप्तिसमनिरूपणम् | ,, |
| प्रसङ्गसमनिरूपणम् | २०८ |
| प्रतिदृष्टान्तसमनिरूपणम् | ,, |
| तत्र न्यायपरिशिष्टोक्तिनिरासः | २०९ |
| अनुत्पत्तिसमनिरूपणम् | ,, |
| संशयसमनिरूपणम् | २१० |
| प्रकरणसमनिरूपणम् | ,, |
| तत्र न्यायपरिशिष्टोक्तिखण्डनम् | ,, |
| अहेतुसमनिरूपणम् | ,, |
| अर्थापत्तिसमनिरूपणम् | २१२ |
| अविशेषसमनिरूपणम् | ,, |
| उपपत्तिसमनिरूपणम् | २१३ |
| उपलब्धिसमनिरूपणम् | २१४ |
| अनुपलब्धिसमनिरूपणम् | २१५ |
| अनित्यसमनिरूपणम् | २१६ |
| नित्यसमनिरूपणम् | २१७ |
| कार्यसमनिरूपणम् | २१९ |
| तत्र धर्मकीर्तेः संवादः | ,, |
| अनुक्तानां जातीनामुपपत्तिसमेऽन्तर्भावः | २२० |


## १५. निग्रहस्थाननिरूपणम्


| | |
|---|---|
| तत्सामान्यलक्षणम् | २२१ |
| प्रतिज्ञाहानिरूपणम् | २२२ |
| प्रतिज्ञान्तरनिरूपणम् | २२५ |
| प्रतिज्ञाविरोधनिरूपणम् | २२६ |
| प्रतिज्ञासंन्यासनिरूपणम् | २२७ |
| अर्थान्तरनिरूपणम् | २२९ |
| निरर्थकनिरूपणम् | २३० |

| | |
|---|---|
| अविज्ञातार्थनिरूपणम् | २३१ |
| अपार्थकनिरूपणम् | २३२ |
| अप्राप्तकालनिरूपणम् | २३४ |
| न्यूननिरूपणम् | ,, |
| अधिकनिरूपणम् | २३५ |
| पुनरुक्तनिरूपणम् | ,, |
| अननुभाषणनिरूपणम् | २३६ |
| अज्ञाननिरूपणम् | २३७ |
| अप्रतिभानिरूपणम् | २३८ |
| विक्षेपनिरूपणम् | २३९ |
| मतानुज्ञानिरूपणम् | ,, |
| मतानुज्ञाभेदाः | २४० |
| पर्यनुयोज्योपेक्षणनिरूपणम् | २४१ |
| निरनुयोज्यानुयोगनिरूपणम् | ,, |
| तस्य नानात्वम् | २४२ |
| अपसिद्धान्तनिरूपणम् | ,, |
| हेत्वाभासानां निग्रहस्थानत्वम् | २४४ |
| १६. महाविद्यानिरूपणम् | ,, |
| तस्या दशविधत्वम् | २४५ |

श्रीः

# न्यायरत्नम्

## मणिकण्ठकृतम्

न्यायरत्नप्रसादेन तमःप्रशमहेतुना ।
हस्तामलकवत्प्राज्ञः सर्वं जानीत संप्रति ॥१॥

श्रीः

## न्यायरत्नटीका द्युतिमालिका

### नृसिंहयज्वकृता

श्रीपतिर्निजभक्तानां रक्षणे दत्तमानसः ।
खादिरो नरसिंहोऽसौ पातु मां करुणाकरः ॥
चिद्रूपं व्यापकं नित्यं विश्वमातरमम्बिकाम् ।
दधानं परमात्मानं वन्दे त्रिणयनं सदा ॥
अधीतसर्वशास्त्रेण नृसिंहाख्येन यज्वना ।
न्यायरत्नस्य टीकेयं क्रियते द्युतिमालिका ॥

[1]आत्मविशेष्यकेतरभिन्नत्वप्रकारकमननं मुक्तिसाधनमिति गौतममतसिद्धान्तं मनसि निधाय— इतरपदार्थाज्ञाने तद्भिन्नत्वप्रकारकत्वस्य मनने ज्ञातुमशक्यतयेतरपदार्थज्ञानमाव-

1 आत्मतत्त्वसाक्षात्कारः स्वात्मगोचरमिथ्याज्ञानोन्मूलनद्वारा मोक्ष उपयुज्यते । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतेः । यद्विषयकः साक्षात्कारो मोक्षजनकः, तद्विषयकं मननं मोक्षोपयोगि । अत आत्मगोचरं मननमुपयुज्यते । एवं "तमेव विदित्वातिमृत्युमेति" इति श्रुतौ मृत्युतरणरूपमोक्षे तत्पदबोध्येश्वरवेदनस्य साधनतयोक्तत्वादीश्वरमननमपि मोक्षोपयोगि । तच्च न मिथ्याज्ञाननाशद्वारोपयुज्यते । परंतु स्वात्मतत्त्वसाक्षात्कार एवोपयुज्यते । यदाहुः "स हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोति" इति । अथवा अदृष्टद्वारा तस्य मोक्षोपयोगित्वं कल्प्यत इति नैयायिकसिद्धान्तः । स्पष्टीकृतश्चायमर्थो वर्धमानोपाध्यायैः कुसुमाञ्जलिप्रकाशे । अत्र मूलप्रथमश्लोकस्थन्यायपदेन स्वात्मतत्त्वविषयकमीश्वरविषयकं चानुमानं विवक्षितमित्याशयेन टीकाकारैर्द्वेधावतारितः प्रथमश्लोकः ।

श्यकम्। न च ग्रन्थान्तरेष्वेवेतरपदार्थानां निरूपितत्वात् ग्रन्थान्तरैस्तज्ज्ञानं भविष्यतीत्याशङ्क्यम् । ग्रन्थान्तरशब्देन किं कुसुमाञ्जलिप्रभृतयो गृह्यन्ते ? अथवा नयचिन्तामणिः ? न तावदाद्यः, तेषां महाखण्डनकारोक्तदूषणकदम्बकबलितत्वात् । न द्वितीयः, यतस्तस्य प्रमाणतत्त्वप्रतिपादकत्वेन स्वातन्त्र्येण प्रमेयाप्रतिपादकत्वान्न तेनापीतरपदार्थज्ञानं संभवति । अतो न्यायरत्नाख्यप्रकरणनिर्माणे सति तेनेतरपदार्थज्ञानं महाखण्डनकारोक्तदूषणकदम्बाकबलितं भविष्यति—इत्याशयवानाह— **न्यायरत्नेति** ।

अथवा, ईश्वरज्ञानं मुक्तिसाधनमिति गौतममतम् । तत्र चेश्वरः किंलक्षणकः ? किंप्रमाणकः ? इति जिज्ञासायां सर्वाधिष्ठाता संसारधर्मैरीषदप्यसंस्पृष्टः परो भगवान् महेश्वरः सर्वज्ञोऽनादिः सकलजगद्विधाता श्रुत्यनुमानाभ्यामवगम्य इति भगवदक्षपाद[1]-मुनिनाभिसंहितम् । सर्वाधिष्ठातृत्वं सकलपुरुषाधिष्ठातृत्वं विवक्षितम् । तेन विशिष्ट इत्येकं लक्षणम् । संसारधर्मैः रागद्वेषमोहादिभिरीषदप्यसंस्पृष्ट इति द्वितीयं लक्षणम् । सर्वज्ञोऽनादिरिति तृतीयं लक्षणम् । गच्छति विनश्यतीति शीलं यस्य ; तस्य जगतो विधातेत्यनेन सह चत्वारि लक्षणानि परमेश्वरस्येति बोध्यम् । स कथं ज्ञातव्य इत्यस्यां जिज्ञासायामुक्तम्—श्रुत्यनुमानाभ्यामिति । "एक एव रुद्रो न द्वितीयाय तस्थे य इमान् लोकानीशत ईशिनीभिः" इति श्रुतिः । द्वितीयायेति प्रथमास्थाने चतुर्थी । ईशिनीभिः शक्तिभिः लोकानीशतेऽधितिष्ठतीति श्रुत्यर्थः । इत्येतत्सर्वं मनसि निधाय विप्रतिपन्नपुरुषप्रतिपादकमनुमानरूपं पञ्चावयवसाध्यं यन्न्यायरत्नं तदनुग्राहकत्वेन तर्कस्य तादृशानुमानाङ्गत्वेन व्याप्त्यादेश्चावश्यं ज्ञातव्यत्वमित्यभिसंधिमानाह— **न्यायरत्नेति** । प्रथमपक्षे 'आत्मा इतरेभ्यो भिद्यते, आत्मत्वात् । न यदेवं न तदेवम्, यथा घटादि । न तथा चायम् । तस्मान्न तथा' इत्यनुमानं न्यायः । स एव रत्नमिति ग्रन्थनाम कथितम् । द्वितीयपक्षे 'क्षित्यादिकं सकर्तृकं, कार्यत्वात् । यदेवं तदेवम् । यथा घटः । तथा चेदम् । तस्मात्तथा' इत्यनुमानं न्यायः ।

[2]ननु न तावत् क्षित्यादिः प्रत्येकं पक्षः, तस्य स्वशब्देनाभिधातुमशक्यत्वात् । नाप्येकपक्षतावच्छेदकावच्छिन्नम्, एकरूपाभावात् । अत एव सकर्तृकत्वाकर्तृकत्ववि-

1 अक्षपादमुनिनेत्यनेनाक्षपादीया विवक्षिताः ।

2 'ननु न तावत् क्षित्यादिकं प्रत्येकं पक्षः' इत्यादिना 'तस्माद्यत्किंचिदेतदनुमानम्' इत्यन्तेन ग्रन्थेन पक्षसाध्यहेतूनां दुर्निरूपत्वपूर्वपक्षः प्रतिपाद्यते ।

चारारम्भकसंशयविषयस्तथाविधविवादविषयो वा न पक्षः, एकरूपाभावेन संशयविषयत्व-विवादविषयत्वयोस्तयोः सुग्रहीतुमशक्यत्वात् । ग्राहकाभाव इव ग्राह्याभावश्च, वादिनोर्निश्चयेन संशयाभावात् । न च वाद्यनुमानयोस्तुल्यबलत्वेन मध्यस्थस्य संशय इति वाच्यम् ; अनुमानाभ्यां मध्यस्थस्य संशयः, तत्संशयानन्तरं चानुमानमित्यन्योन्याश्रयात् ; विशेषादर्शनदशायां घटेऽपि कदाचित्तयोः संभवात् । तस्यापि पक्षत्वे तत्रांशतः सिद्धसाधनम् । प्रत्येकं संशये विवादास्पदत्वेनानुमानेऽर्थान्तरत्वाच्च । नापि सर्गाद्यकालीनं द्व्यणुकं पक्षः, परं प्रति सर्गाद्यसिद्धेः । नापि शरीराजन्यम् , अप्रसिद्धेः ; अदृष्टद्वारा शरीरिणोऽपि क्षित्यादिकर्तृत्वात् । तस्मान्न पक्षसंभवः ।

नापि साध्यनिर्वचनम् । तथाहि—कृतिमज्जन्यत्वं वा ? उपादानापरोक्षज्ञान-चिकीर्षाकृतिमज्जन्यत्वं वा तत् ? नाद्यः, अस्मदादिना सिद्धसाधनात् । न द्वितीयः, विकल्पासहत्वात् । तथाहि—यत्किंचिदुपादानगोचरत्वं वा ? क्षित्याद्युपादानगोचरत्वं वा ? न तावत् प्रथमः, अस्मदादिनार्थान्तरत्वात् । नापि द्वितीयः, अप्रसिद्धेः । अदृष्टद्वारा शरीरिणोऽपि क्षित्यादिकर्तृत्वात् । [1]तस्मान्न साध्यनिरुक्तिः ।

हेतुश्च दुर्निरूपः । न तावत्पूर्वकालसंबन्धासत्त्वे सत्युत्तरकालसंबन्धः, तत्पूर्व-कालसंबन्धस्याननुगतत्वात् ; सकलपूर्वकालसंबन्धस्यासिद्धेः । नापि कादाचित्कत्वम् , प्रागभावे व्यभिचारात् । नापि प्रागभावप्रतियोगित्वम् , प्रध्वंसे व्यभिचारात् । नापि सत्त्वे सति प्रागभावप्रतियोगित्वम् , सत्ताजातेः परं प्रत्यसिद्धेः ; स्वरूपसत्त्वस्य ध्वंसेऽपि सत्त्वात् । तस्माद्यत्किंचिदेतदनुमानम् ।

अत्रोच्यते — अदृष्टाद्वारकस्वोपादानगोचरजन्यकृतिजन्यघटाद्यन्यत्वावच्छिन्नं जन्यं समवायसंबन्धेन वर्तमानम्, अदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानापरोक्ष-ज्ञानचिकीर्षाकृतिमज्जन्यम् , समवायसंबन्धेन वर्तमानत्वे सति प्रागभावप्रतियोगित्वात् । यदेवं तदेवम् । यथा घटः । तथा चेदम् । तस्मात्तथेति । अत्र पक्षे अदृष्टाद्वारक-स्वोपादानेत्यादिप्रथमविशेषणं परित्यज्य जन्यं समवायसंबन्धेन वर्तमानमिति पक्षकरणे,

1 एवं यावत्कारणगोचरत्वनिवेशेऽपि दोषो बोध्यः । तथाहि—स्वनिरूपितकारणताश्रय-यावद्विषयकज्ञानादिमज्जन्यत्वं यत्र क्वचन प्रसिद्धं वा, न वा ? आद्ये तदभाववति घटादौ कार्यत्वहेतोः सत्त्वात् व्यभिचारः । द्वितीये साध्याप्रसिद्धिः । उभयथापि न व्याप्तिज्ञानसंभव इति ।

घटादेरपि पक्षतापत्तेस्तत्रांशतः सिद्धसाधनम्। तत्परिहारार्थमुक्तं तद्विशेषणम्। तत्राप्यदृष्टाद्वारकेति विशेषणांशं विहाय तदितराभिधाने, कालीशरीरे यद्गौररूपमुत्पन्नं तत्कालीशरीरगोचरतपश्चरणादिकृत्या जन्यते। सा च कृतिरदृष्टद्वारिका तद्रूपोपादानकालीशरीरगोचरा चेति कालीशरीरोत्पन्नगौररूपेऽव्याप्तिः स्यात्। तत्परिहारार्थमदृष्टाद्वारकेति। अदृष्टाद्वारकस्वोपादानगोचरजन्यकृतिजन्यघटाद्यन्यत्वावच्छिन्नमात्रस्य पक्षत्वे, ध्वंसस्यापि पक्षतापत्तिः। तथाच तत्रोक्तसाध्याभावात् बाधः। तत्परिहारार्थं समवायसंबन्धेन वर्तमानमिति विशेषणम्। ध्वंसस्य स्वरूपसंबन्धेन वर्तमानत्वेऽपि समवायसंबन्धेन वर्तमानत्वाभावान्नोक्तदोषः। एतावति कृते गोत्वादेरपि पक्षत्वप्रसङ्गः। तथाच तत्रोक्तसाध्याभावात् बाधः। तदर्थमुक्तं जन्यपदम्। तस्याजन्यत्वान्नोक्तदोष इति। साध्ये चादृष्टप्रागभावव्याप्यप्रागभावाप्रतियोगीति विशेषणमपहाय तदितराभिधाने कालीरूपाभेदचिन्तनजन्यस्वर्गे चांशतः सिद्धसाधनता स्यात्। तत्परिहाराय तद्विशेषणम्। अत्रादृष्टपदं स्वजनकादृष्टपरम्। न चैवं स्वपदार्थः क्वचित्पक्षः, क्वचिद्दृष्टान्त इत्यननुगम इति वाच्यम्, सामान्यव्याप्तिग्रहेऽननुगमस्यादोषत्वात्; सामान्यव्याप्तेरेव प्रकृतानुमानाङ्गत्वेनाभिमतत्वादिति। ध्वंसे व्यभिचारवारणाय हेतौ सत्यन्तम्। गोत्वादौ व्यभिचारवारणाय कार्यत्वादिति। [1]न चाणुव्यतिरिक्तत्वमुपाधिः, अणुव्यतिरिक्तक्षित्यादेरेकदेशवृत्तित्वाद्भागासिद्ध इति न परोक्तपक्षसाध्यहेतुविकल्पावकाश इति ध्येयम्।

वस्तुतस्तु—विवादाध्यासितं करणसाक्षात्कारवत्कर्तृकम्, अभूत्वा भावित्वात्। यदेवं तदेवम्। यथा घटः। तथा चेदम्। तस्मात्तथा। न च धर्मिविशेषस्यानिर्देशात् संदिग्धाश्रयासिद्धो हेतुरिति वाच्यम्, साध्यविशेषोपादानेन धर्मिविशेषसिद्धेः। यत्र बुद्धिमत्पूर्वकत्वाबुद्धिमत्पूर्वकत्वेन विवादः, तस्यैवाङ्कुरादेः पक्षीकारात्।

1 क्षित्यादिकं सकर्तृकमित्यनुमाने घटाद्यन्तर्भावेन सकर्तृकत्वरूपसाध्यव्यापकत्वात्, साधनाधिकरणे द्व्यणुकेऽणुभिन्नत्वविरहेण द्व्यणुकरूपपक्षान्तर्भावेन साधनाव्यापकत्वाच्चाणुभिन्नत्वमुपाधिरिति शङ्कते—न चाणुव्यतिरिक्तत्वमुपाधिरिति। उपाधिर्हि स्वव्यतिरेकेण पक्षे साध्यव्यतिरेकं साधयन् दूषको भवति। न चात्राणुव्यतिरिक्तत्वाभवेन निरुक्तपक्षतावच्छेदकावच्छिन्ने साध्याभावः साधयितुं शक्यते। पक्षैकदेशे द्व्यणुकेऽणुव्यतिरिक्तत्वाभावस्य सत्त्वेऽपि क्षित्यादौ तद्विरहेण भागासिद्धिदोषात्। एवं चोपाधिव्यतिरेकस्य पक्षे साध्याभावासाधकत्वेनोपाधिकार्यानिर्वाहाच्चानुपपत्तिरित्याह—क्षित्यादेरेकदेशवृत्तित्वाद्भागासिद्ध इति।

ननु— ईश्वरकर्तृकत्वे साध्ये साध्यविकलो दृष्टान्तः, घटादीनामीश्वरकर्तृकत्वासिद्धेः ; व्याप्त्यसिद्धेश्च । बुद्धिमन्मात्रकर्तृकत्वे च साध्ये विवक्षितकर्तृविशेषासिद्धिः ; सिद्धसाध्यता च, संसारिणामेव कर्मद्वारेणाङ्कुरादिकर्तृत्वादिति चेत् ; मैवम् , सामान्यव्याप्तेरनवद्यत्वेन निराकर्तुमशक्यत्वात् । ततः सामान्यसिद्धौ परिशेषात्कार्यविशेषाच्च कर्तृविशेषसिद्धिः, चित्रादिकार्यविशेषात्कर्तृविशेषसिद्धिवत् ।

ननु ध्वंसस्य पक्षान्तर्भूतत्वे बाधः ; तद्बहिर्भूतत्वे व्यभिचारः, उक्तहेतोस्तत्र सत्त्वादिति चेत्; न, ध्वंसस्यापि पक्षान्तर्भूतत्वात् । न चैवमंशतो बाधः, साध्य उपादानपदस्यास्वीकारात् । तदुक्तं **चिन्तामणौ गङ्गेशेन**—“यद्वा पक्षे हेतौ च न समवेतत्वं विशेषणम् । तेन ध्वंसोऽपि पक्षः । साध्ये चोपादानपदं कारणपरमनुपादेयमेव वा ” इति ।

ननु—‘कर्ता शरीर्येव’ ‘ज्ञानमनित्यमेव’ इत्यादिव्याप्तिप्रत्यक्षविरोधात् [1]अशरीरनित्यज्ञानादिकर्तृविशेषसिद्धिर्न संभवति । अत एव शरीरमनित्यमेवेति नियमात् कर्तृत्वेन नित्यातीन्द्रियशरीरसिद्धिरीश्वरे न संभवति । न चाप्रयोजकत्वम् , निरुपाधित्वेन शङ्काकलङ्काभावात् । कार्यत्वसकर्तृकत्वयोरपि यदि निरुपाधित्वमस्ति, तदा तुल्यबलत्वेन सत्प्रतिपक्षवत्प्रतिरोधोऽस्तु । न च कार्यत्वं पक्षधर्मताबलाद्बलीयः, ‘कर्ता शरीर्येव’ इत्यादौ तन्नास्तीति वाच्यम् । ‘ज्ञानमनित्यमेव’ इत्यादिव्याप्तेरेव क्षित्यादौ ज्ञानजन्यत्वविरोधित्वात् । एवं ‘कार्यं ज्ञानजन्यम्’ ‘ज्ञानमनित्यमेव’ इत्यनयोर्विरोध एव । अविरोधे वा द्वयमपि स्यात् । तथाच क्षित्यादौ शरीर्यनित्यज्ञानपर्यवसाने बाध एव स्यादिति चेत्—न, ‘ज्ञानमनित्यमेव’ इत्यादिव्याप्तेरसिद्धेः, विपक्षे बाधकाभावेनाप्रयोजकत्वात् । न च निरुपाधिसहचारदर्शनादेव व्याप्तिग्रहः ; निरुपाधित्वमेव विपक्षे बाधकमिति वाच्यम् , ‘अवयवो महानेव’ ‘तेज उद्भूतरूपमेव’ इत्यादिव्याप्तिग्रहात्परमाणुनयनादेरसिद्धिप्रसङ्गात् । यद्वा पक्षधर्मताबलान्नित्यज्ञानं सिध्यत् ‘बुद्धिरनित्यैव’ इति व्याप्तिप्रत्यक्षेण न प्रतिबध्यते, असदादिबुद्धिमात्रविषयत्वेन भिन्नविषयत्वात् ।

1 अशरीरनित्यज्ञानादिकर्तृविशेषसिद्धिरिति । न विद्यते शरीरं यस्य सः, अशरीरः । नित्यं ज्ञानादिकं यस्य सः, नित्यज्ञानादिः । अशरीरः नित्यज्ञानादिश्च कर्तृविशेषः । तस्य सिद्धिरित्यर्थः ।

एतेन 'कर्ता शरीर्येव' इत्याद्यपि ज्ञानं प्रतिबन्धकमपास्तम्। कर्तृजन्यतायां शरीरजन्यत्वं वा जन्यत्वं वा नावच्छेदकम्। किं तु घटत्वादिकमेव, तेनैव रूपेणान्वयव्यतिरेकव्याप्तिग्रहात्, आवश्यकत्वाच्च। अननुगतमपि जन्यतावच्छेदकम्, वह्निजन्यतायां धूमत्वादिवत्। तस्मादशरीरनित्यज्ञानादिकर्तृविशेषसिद्धिरिति।

नानैकान्तिको हेतुः, अभूत्वा भावित्वादिहेतोः साध्यतावच्छेदकावच्छिन्नसाध्यात्यन्ताभाववद्गामित्वाभावात्। अत एव न साधारणः, विपक्षवृत्तित्वाभावात्। न चासाधारणः, तस्य सकलसपक्षव्यावृत्तत्वाभावात्। नानुपसंहारी, व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावाभावात्। नापि विरुद्धो हेतुः, तस्य साध्यसमानाधिकरणतया साध्याभावव्याप्तत्वाभावात्।

'ननु क्षित्यादिकमकार्यम्, अकर्तृकं वा; शरीराजन्यत्वात् गगनवत्' इति [1]प्रकरणसम इति चेत्; न, आद्ये साध्ये अङ्कुरादिभिरनैकान्तिकत्वात्। द्वितीये साध्ये विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् शरीराजन्यत्वं नाम शरीरव्यतिरिक्तहेतुजन्यत्वं स्यात्। ततश्च साधनविकलो गगनदृष्टान्तः। ननु 'ईश्वरः कर्ता न भवति, अशरीरित्वात् मुक्तात्मवत्' इति चेत्; न, ईश्वरस्यासिद्धत्वे आश्रयासिद्धो हेतुः। तस्य सिद्धत्वे धर्मिग्राहकप्रमाणेन बाधः। किंच 'चम्पकः कम्पते' इत्यादावशरीरस्यापि वृक्षादेः कर्तृत्वाभ्युपगमात् तैरनेकान्तः। तस्मात् साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गत्वलक्षणलक्षितत्वाभावान्न प्रकरणसमः। नाप्यसिद्धो हेतुः, परामर्शीविषयाभाववत्वलक्षणलक्षितत्वाभावात्। नापि बाधितो हेतुः, तस्य प्रमितसाध्याभाववत्पक्षकत्वाभावात्। तस्मान्निरस्तसमस्तकलङ्कमिदमनुमानम्।

सकलमङ्गलायतनजगन्निर्मातृपुरुषधौरेयपरमेश्वरसिद्धिफलको न्यायः। स एव रत्नमिति ग्रन्थनाम कथितमिति वयमालोचयामः। तस्य न्यायरत्नस्य **प्रसादेन** प्रसन्नतया; प्रकाशेनेति यावत्। ननु प्रकाशस्य तमोनिवर्तकत्वं दृष्टम्; प्रकृते तत्कथमित्यत आह— **तमःप्रशमेति**। प्रथमपक्षे इतरभेदप्रतीतिप्रागभावात्मकं तमः। द्वितीयपक्षे क्षितिकर्तृपरमेश्वरविषयकज्ञानप्रागभावात्मकं तमः। तस्य प्रशमो निवृत्तिः। प्रथमे इतरभेदप्रतीतिः। द्वितीये ईश्वरविषयकज्ञानम्[2]। तद्धेतुनेत्यर्थः। 'प्रकाश

1 प्रकरणसमः सत्प्रतिपक्षः।

2 द्वितीये ईश्वरविषयकज्ञानमिति। प्रतियोगिजनकसामग्र्या प्रागभावो निवर्तते। प्रागभावनिवृत्तिः प्रतियोगिरूपेति बोध्यम्।

**अनुमाननिदानस्य व्याप्तिज्ञानस्य कारणम् ।**
**आदौ तर्कं निरूप्येह पश्चादन्यन्निरूप्यते ॥२॥**

परप्रकाशकः, तेजस्त्वात् सौरालोकवत् ' इत्याह—**सर्वमिति** । अनुग्राहकतर्कानुग्राह्यव्याप्त्यादिवृन्दमित्यर्थः । अत्र क्रियां निर्दिशति—**जानीतेति** । " विधिनिमन्त्रण " इत्यादिना लिङ् । क्रियायाः कर्तृकारकान्वितत्वादाह—**प्राज्ञ इति** । तर्कादिव्युत्पत्तिमानित्यर्थः । **हस्तामलकवदिति** दृष्टान्तेनैतद्ग्रन्थप्रतिपाद्यपदार्थानां प्रमाविषयत्वं सूचितम् । अत्रानुग्राहकतर्कानुग्राह्यव्याप्त्यादिवृन्दं विषयः । इतरभेदप्रतीतिपरमेश्वरसिद्ध्यन्यतरद्वारा [1]एकविंशतिदुःखोच्छेदलक्षणो मोक्षः प्रयोजनमिति दिक् ।

मानै निरूपिते सम्यङ् न्यायरत्ने सति स्थिरे ।
तेनापि साधितः शंभुर्धीमता **चामभूभुजा** ॥
तर्कादिर्विषयः सिद्धो दुःखध्वंसः प्रयोजनम् ।
अधिकारी मुमुक्षुः श्रीमहितश्चामभूपतिः ॥

अनुमानकारणव्याप्तिज्ञानहेतुत्वादनुमानानुग्राहकत्वाच्चादौ सत्तर्कं निरूपयितुं प्रतिजानीते—**अनुमाननिदानस्येति** । परामर्शकारणस्येत्यर्थः । यद्वा[2] अनुमानशब्देन तज्जन्यानुमितिर्लक्ष्यते । तथाचानुमितिकरणस्येत्यर्थः । तेन परामर्शस्य निर्व्यापारत्वेन करणत्वासंभव इति दूषणं नेति ध्येयम् । **व्याप्तिज्ञानस्येति** । अन्योन्याभावगर्भव्याप्तिज्ञानस्येत्यर्थः । [3]वस्तुतस्त्वत्यन्ताभावगर्भव्याप्तिज्ञानस्येत्यर्थः । **पश्चादिति** । तर्कनिरूपणानन्तरमित्यर्थः । **अन्यदिति** व्याप्त्यादिकमित्यर्थः ।

तर्कस्य व्याप्तिज्ञानद्वारानुमितिकारणतां सिद्धान्तयिष्यन् प्रथमं तदज्ञतयः पूर्वपक्षमाह—**किमनुमितौ तर्कः साक्षादिति** । साक्षात्कारणत्वं तर्कस्य निराकरिष्यमाणः

1 एकविंशतिदुःखोच्छेदलक्षणो मोक्ष इति । शरीरं, षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखं दुःखं चेत्येकविंशतिदुःखानि । शरीरादौ दुःखत्वजात्यभावेऽपि दुःखसंबन्धितया गौणं दुःखत्वं बोध्यम् ॥

2 तेनेत्यादिना वक्ष्यमाणास्वरसादाह—यद्वानुमानशब्देन तज्जन्यानुमितिर्लक्ष्यत इति । भावे ल्युडन्तोयमनुमानशब्दः । लक्ष्यत इत्यस्य बोध्यत इत्यर्थः । तेनानुमानशब्दस्यानुमितौ लक्षणाया विरहेऽपि न क्षतिः ।

3 अत्यन्ताभावगर्भव्याप्तिज्ञानकारणतायां लाघवस्य स्वयं वक्ष्यमाणत्वादाह-वस्तुतस्त्विति ।

तथाहि—[1]किमनुमितौ तर्कः साक्षात्कारणम् ? अन्यथा वा कारणम् ? तत्र लिङ्गपरामर्शः करणमनुमितौ । तच्च व्यापारवद्भवति । व्यापारस्य चान्यस्यानुपपत्त्या तर्क एव तद्व्यापार इत्यनुमितौ तर्कस्य साक्षात्कारणत्वमिति वदन्ति । तदसत् । तृतीयलिङ्गपरामर्शस्य साक्षादनुमितिकारणत्वेनान्यथोपपत्तेः; एतत्कारणीभूतस्यैव व्याप्तिस्मरणादेरनेनैव व्यापारेणानुमितिकरणत्वात् । अत एव तदनन्तरं तर्कोत्पत्तौ प्रमाणमेव नास्ति । तृतीयलिङ्गपरामर्शस्य यथानुमितौ साक्षात्कारणत्वं, तथाग्रे दर्शयिष्यते ।

परंपराकारणताप्यनुमितिकारणीभूताभावप्रतियोगिजिज्ञासोच्छेदजनकत्वाद्वा ? अनुमित्यनुकूलजिज्ञासाजनकत्वाद्वा ? पक्षधर्मताज्ञानजनकत्वाद्वा ?

साक्षात्कारणत्वपक्षमुपन्यस्यति—**तत्रेत्यादिना वदन्तीत्यन्तेन** ग्रन्थेन । **तत्रेति** । तत्रानुमितौ लिङ्गपरामर्शः करणमित्यन्वयः । **तच्चेति** करणापेक्षया नपुंसकलिङ्गनिर्देशः । अन्य एव तत्रावान्तरव्यापारोऽस्त्वित्याशङ्क्याह—**व्यापारस्येति** । **अन्यस्येति** । तर्कादन्यस्येत्यर्थः । निषेधति—**तदसदिति** । तृतीयलिङ्गपरामर्शस्यानुमितौ साक्षात्कारणत्वेनार्थापत्तेरन्यथोपपत्तिमाह— **तृतीयलिङ्गेति** । तृतीयलिङ्गपरामर्शस्य व्यापारत्वेन कारणत्वे करणान्तरानुपपत्तिमाशङ्क्याह—**एतत्कारणीभूतस्यैवेति** । तृतीयलिङ्गपरामर्शकारणीभूतस्यैवेत्यर्थः । **अनेनैवेति** । परामर्शरूपेणैवेत्यर्थः । **अत एवेति** । व्यापारत्वेनानुमितिचरमकारणत्वादेवेत्यर्थः । **तदनन्तरमिति** । तृतीयलिङ्गपरामर्शानन्तरमित्यर्थः । ननु तृतीयलिङ्गपरामर्शस्य साक्षात्कारणत्वमसिद्धमित्याशङ्क्याह—**तृतीयेति** । **अग्र इति** । परामर्शवाद इत्यर्थः ।

ननु तर्कस्यानुमितिं प्रति साक्षात्कारणत्वाभावेऽपि परंपरया कारणता स्यादित्याशङ्क्य,तर्कस्य परंपराकारणत्वं दुर्निरूपं, विकल्पासहत्वादित्याह—**परंपराकारणतापीति** । विकल्पान् दर्शयति—**अनुमितीति** । अनुमितिकारणीभूतो योऽयमभावः व्यभिचारादिज्ञानाभावः, तत्प्रतियोगि व्यभिचारादिज्ञानं, तज्जिज्ञासोच्छेदजनकत्वादित्यर्थः । अनुमितिकारणीभूताभावप्रतियोगिजिज्ञासायाः [2]साध्याभावमात्रविषयत्वेन कारणतैव नास्तीति न

1 मूले ‘ किमनुमितौ तर्कः साक्षात्कारणमन्यथा वा कारणम् ’ इत्यादिः ‘ न तर्कापेक्षेति पूर्वपक्षसंक्षेपः ’ इत्यन्तः पूर्वपक्षग्रन्थः ।

2 साध्याभावमात्रविषयत्वेन कारणतैव नास्तीति । जिज्ञासाजनकसंशयस्य कोटिद्वयावगाहितया तज्जन्यजिज्ञासाप्युभयविषयिणी । न तु साध्याभावमात्रविषयिणीति भावः ।

व्याप्तिज्ञानजनकत्वाद्वा ? व्याप्तिपक्षधर्मतावच्छिन्नलिङ्गज्ञानजनकत्वाद्वा ?

तत्र न प्रथमः । साध्याभावमात्रविषयजिज्ञासा हि तादृशी । न तु साध्यतदभावोभयविषया । संशयेन चोभयकोटिकैव जिज्ञासा जन्यते, न त्वेककोटिका । अतस्तस्मिन् काले साध्याभावमात्रजिज्ञासायाः कारणमेव नास्तीति किं तर्केण निवर्तनीयम् ?

न द्वितीयः, साध्यजिज्ञासा ह्यनुमित्यनुकूला । सापि यदि साध्यतदभावोभयविषया, तदा संशयेनैव जन्यते । तत्र किं तर्केण ?

तर्कनिवर्त्यत्वमित्यरुचेराह—**अनुमित्यनुकूलेति** । अनुमित्यनुकूला या जिज्ञासा साध्यजिज्ञासा, तज्जनकत्वादित्यर्थः । साध्यजिज्ञासायाः साध्यज्ञानादिजन्यत्वेन न तर्कजन्यत्वमित्यरुचेराह—**पक्षधर्मतेति** । इन्द्रियादिना पक्षधर्मताज्ञानं जन्यते; न तर्केणेत्यपरितुष्यन्नाह—**व्याप्तीति** । तर्कस्य व्याप्तिग्राहकत्वे तर्कमूलभूतव्याप्तिरपि तर्कान्तरेणेत्यनवस्थेत्यत आह—**व्याप्तिपक्षधर्मतावच्छिन्नेति** । व्याप्तिपक्षधर्मतावच्छिन्नं यल्लिङ्गं, तद्विषयकज्ञानजनकत्वादित्यर्थः । यद्वा व्याप्तिपक्षधर्मतावच्छिन्नं व्याप्तिपक्षधर्मतासमानाधिकरणं यल्लिङ्गज्ञानं [1]वैज्ञानिकसंबन्धेन विद्यमानं, तज्जनकत्वादित्यर्थः ।

तदेवं विकल्प्य यथोद्देशं दूषयति—**तत्र न प्रथम इति** । तेषु पञ्चसु विकल्पेष्वित्यर्थः । **साध्याभावेति** । साध्याभावमात्रं विषयो यस्या इति बहुव्रीहिः । **तादृशीति** । अनुमितिकारणीभूताभावप्रतियोगिज्ञानविषयेत्यर्थः । ननु तादृशी न साध्याभावमात्रविषया, किंतु साध्यतदभावोभयविषयेत्याशङ्क्याह—**न त्विति** । ननु द्विकोटिकजिज्ञासायाः कारणान्तरासंभवात् तर्क एव कारणमित्यत आह—**संशयेन चेति** । संशयस्यैव कारणत्वमिति भावः । **न त्विति** । एककोटिकैवेत्यर्थः । अन्यथोभयकोटिकजिज्ञासाजनकत्वेऽप्येककोटिकजिज्ञासाजनकत्वस्य संभवादिदमनुपपन्नं स्यात् । उपसंहरति—**अत इति** । **तस्मिन् काल इति** । संशयकाल इत्यर्थः । निगदव्याख्यातमन्यत् ।

अनुमित्यनुकूलजिज्ञासाजनकत्वमिति द्वितीयः पक्षोऽपि न संभवतीत्याह—**न द्वितीय इति** । ननु—अनुमित्यनुकूलजिज्ञासा साध्याभावमात्रविषया वा ? साध्यतदभावोभयविषया वा ? नाद्यः, दत्तोत्तरत्वादित्यभिप्रेत्य द्वितीयं दूषयितुमनुवदति—**सापि**

1 वैज्ञानिकसंबन्धेन विषयतासंबन्धेन ।

अथैतदुच्यते—अनुमानविषयपरिशोधकत्वमेव तर्कस्य । इयमेव विषयपरिशुद्धिः—यत् संशयेनोभयकोटिकैव जिज्ञासा जनिता तर्केणैकस्मिन्नंशेऽनिष्टमुपदर्शयता कोटयन्तरे नियम्येति । मैवम् । कोटयन्तरनियामकत्वं किं तर्कस्य जिज्ञासानिष्ठकिंचिद्धर्मजनकत्वं वा ? साध्यमात्रजिज्ञासाजनकत्वं वा ? साध्याधिककोटिसाध्याभावन्यूनकोटिजिज्ञासाजनकत्वं वा ? नाद्यः, इच्छाया जन्यधर्माश्रयत्वानङ्गीकारात् । न द्वितीयः, साध्यमात्रजिज्ञासा हि साध्यमात्रज्ञानोत्पादिकेच्छा । सा च न यत्र क्वचित् ; किंतु पक्षवर्तिनि साध्ये वक्तव्या । पक्षवर्ति च साध्यं न प्रसिद्धम् । अतः कथं तदप्रसिद्धौ सा भवेत् ? प्रसिद्धौ वा सिद्धसाधनम् । अथ ज्ञानोपायविषयेच्छासौ, तथापि ज्ञानेष्टसाधनताज्ञानेन सा जन्यते, न तु तर्केण । यथा घटोपायविषयेच्छा घटेष्टसाधनताज्ञानेन जन्यते, न तु तर्केण ; तथेयमपि । न तृतीयः, संशयजन्यतुल्यबलकोटिद्वयावलम्बिजिज्ञासावशादप्यनुमितिसंभवे न्यूनाधिकत्वं कुत्रोपयुज्यते ?

यदि साध्येति । दूषणमाह—तदेति । तदुभयविषयकजिज्ञासायाः संशयजन्यत्वेन तर्कजन्यत्वाभावादिति भावः ।

ननु—अनुमानविषयसाध्यधर्मपरिशुद्धिजनकत्वं तर्कस्य । तथाचैककोट्यंशेऽनिष्टं प्रतिपादयता तर्केण कोट्यन्तरे विषयपरिशुद्धिर्नियम्यते । संशयेनोभयकोटिकैव जिज्ञासा जन्यते । अतो नोक्तदोष इत्याशयवानाशङ्कते—अथैतदिति । निषेधति—मैवमिति । तर्कस्य कोट्यन्तरनियामकत्वमिति वदता तार्किकेण वक्तव्यम्--किं तत् जिज्ञासानिष्ठकिंचिद्धर्मजनकत्वम् ? अथवा साध्यमात्रजिज्ञासाजनकत्वम् ? आहोस्वित् साध्याधिककोटिसाध्याभावन्यूनकोटिजिज्ञासाजनकत्वम् ? न तावत्प्रथमः, इच्छाया जन्यधर्माश्रयत्वेन द्रव्यत्वापत्तेः । न द्वितीयः, साध्यमात्रजिज्ञासा नाम साध्यमात्रज्ञानोत्पादिकेच्छा ; सा च पक्षनिष्ठसाध्ये वाच्या । पक्षवृत्ति साध्यं सिद्धम् ? असिद्धं वा ? नाद्यः, सिद्धसाधनात् । नेतरः । तदसिद्धाविच्छा कथं भवेत् ? नापि तृतीयः, संशयजन्यतुल्यबलकोटिद्वयावलम्बिजिज्ञासावशादनुमित्युत्पत्तौ न्यूनाधिकत्वस्योपयोगाभावात् ; न्यूनत्वाधिकत्वयोर्दुर्निरूपत्वाच्चेत्याह—कोट्यन्तरनियामकत्वमित्यादिना दुर्वचं चैतदित्यन्तेन ग्रन्थेन ।

दुर्वचं चैतत् । तथाहि—न तावत् साध्यविषयत्वमधिकत्वं, तदभावविषयत्वं च न्यूनता । साध्यत्वमिह वह्नित्वादिस्वरूपं वा? तत्तत्सिषाधयिषाविषयत्वं वा? तत्तदनुमितिविषयत्वं वा? नाद्यः, कदाचित् साध्यविषयजिज्ञासाया अपि न्यूनत्वात्; कदाचित्तुल्यत्वाच्च । न द्वितीयः, आत्माश्रयात् । न तृतीयः । प्रतिबन्धवशादनुमित्यनुत्पत्तौ जिज्ञासाया अधिककोटित्वाभावप्रसङ्गात् । बहुतद्धर्मविषयत्वमाधिक्यम्; अल्पतद्धर्मविषयत्वं न्यूनतेत्यपि न, धर्माणां तावतामेव जिज्ञासाजनकत्वात् । संशयवदिहापि न्यूनाधिककोटित्वमास्तामिति चेत्; न, तत्रापि समानत्वात् । यथा संशयस्य यन्मात्रजिज्ञासाजनकत्वं तत्रैवाधिक्यं, तथा यन्मात्रज्ञानजनकत्वं जिज्ञासायास्तत्रैवाधिक्यं नान्यत्रेत्यपि न । तुल्यबलकोटिद्वयजिज्ञासया व्याप्तिपक्षधर्मताज्ञानं सहायमासाद्य साध्यमात्रज्ञानजननसंभवे किं तर्केण? वस्तुतस्तु तस्यां दशायां न संशयो नापि जिज्ञासा । किं तर्हि? तयोर्योग्यतामात्रस्य सत्त्वम् । न च तत्र तर्कस्योपयोगः ।

न्यूनत्वाधिकत्वयोर्दुर्निरूपत्वमेव प्रतिपादयति—तथाहीति । किं साध्यविषयत्वमधिकत्वं, साध्याभावविषयत्वं न्यूनत्वम्? किं वा बहुतद्धर्मविषयत्वमाधिक्यम्, अल्पतद्धर्मविषयत्वं न्यूनतेति विकल्प्याद्यं कल्पं निराकरोति—न तावदिति । साध्यत्वं वह्नित्वादिस्वरूपं वा? तत्तत्सिषाधयिषाविषयत्वं वा? तत्तदनुमितिविषयत्वं वा? न तावदाद्यः, कदाचित्साध्यविषयजिज्ञासाया अपि न्यूनत्वात् तुल्यत्वाच्च परस्परमतिव्याप्तेः । न द्वितीयः, आत्माश्रयत्वात् । नापि तृतीयः, प्रतिबन्धवशादनुमित्यनुत्पत्तौ जिज्ञासाया अधिककोटित्वाभावप्रसङ्गादित्याह—साध्यत्वमित्यादिना अधिककोटित्वाभावप्रसङ्गादित्यन्तेन ग्रन्थेन । न द्वितीय इत्याह—बहुतद्धर्मेति । ननु संशयवत्प्रकृतेऽपि न्यूनाधिककोटित्वं भवत्वित्याशङ्कते—संशयवदिति । उक्तदूषणानां संशयेऽपि तुल्यत्वमित्यभिप्रायेण परिहरति—तत्रापीति । न्यूनाधिक्ये प्रकारान्तरेण संशयवदुपपद्येते इत्याशङ्क्याह—यथेति । वैषम्येण दूषयति—तुल्येति । अनुमित्युत्पत्तिसमये संशयमङ्गीकृत्य जिज्ञासाहेतुत्वमुक्तं पूर्वम् । इदानीं संशयजिज्ञासे न भवतस्तत्काल इत्याह—वस्तुतस्त्विति । न च तत्रेति । योग्यतामात्रसत्त्व इत्यर्थः ।

न तृतीयः । पक्षधर्मताज्ञानं किं वस्तुगत्या सिषाधयिषितधर्मा यो धर्मी, तन्निष्ठतया हेतुज्ञानम् ? उत सिषाधयिषितधर्मधर्मिनिष्ठतयैव हेतुज्ञानम् ? उभयथापीन्द्रियादिभिरेव तज्जननान्न तत्र तर्कजन्यता । [1]एकत्र ज्ञानान्तरोपनीतं सिषाधयिषितत्वादि भासते, अपरत्र तु न तथेति विशेषः ।

अस्तु तर्हि चतुर्थः पक्षः । तथाहि—व्याप्तिः सामानाधिकरण्यविशेषः । तस्य च ज्ञानं न तर्केण विना भवितुमर्हति, व्यभिचारविपर्ययवत् तत्संदे-

पक्षधर्मताज्ञानजनकत्वं तर्कस्येति तृतीयपक्षोऽपि न संभवति, विकल्पासहत्वादित्याह—**न तृतीय इति** । इन्द्रियादीनामेव पक्षधर्मताज्ञानजनकत्वान्न तर्कस्य तद्धेतुत्वमित्याह—**उभयथापीति** । विकल्पितपक्षयोरन्यतराश्रयणेऽपीत्यर्थः ।

व्याप्तिज्ञानजननद्वारा तर्कस्यानुमितिहेतुत्वमिति चतुर्थः कल्पः स्यादिति शङ्कते—**अस्तु तर्हीति** । तदेवोपपादयति—**तथाहीति** । यादृशव्याप्तिज्ञानमनुमितौ करणं तादृशव्याप्तिज्ञानजनकत्वं तर्कस्येति वक्तुं व्याप्तिलक्षणमाह—**व्याप्तिरिति** । साध्यसामानाधिकरण्यविशेष इत्यर्थः । ननु व्यतिरेकिणि साध्यसामानाधिकरण्याभावेन तज्ज्ञानाभावादनुमितिर्न स्यादिति चेत् ; न ; तत्राव्यभिचरितत्वमेव व्याप्तिः । अतस्तज्ज्ञानमेव च तद्धेतुरिति नोक्तदोषः ।

नन्वेवमनुमितिमात्रेऽनुगतकारणाभावादननुगम इति चेत् ; न, तृणारणिमणिन्यायात् । यथा प्रमामात्रेऽनुगतकारणाभावेऽपि प्रत्यक्षप्रमायां भूयोऽवयवसंनिकर्षः, अनुमितौ सल्लिङ्गपरामर्शः, यथा वा परामर्शकारणत्वपक्षेऽनुमितिमात्रेऽनुगतकारणाभावेऽप्यन्वय्यनुमितावन्वयिपरामर्शः ; व्यतिरेक्यनुमितौ व्यतिरेकिपरामर्शः, [2]उभयानुमितावुभयपरामर्शः कारणं, तथा प्रकृतेऽपि संगच्छत इति । वस्तुतस्तु तद्वन्निष्ठात्यन्ताभावाप्रतियोगिसामानाधिकरण्यमेव व्याप्तिः । तज्ज्ञानमेवानुमितौ कारणमिति । नन्वेतादृशव्याप्तिज्ञानस्य कथमनुमितिहेतुत्वमिति चेत्, तदग्र उपपादयिष्याम इति दिक् ।

1 एकत्र ज्ञानान्तरोपनीतं सिषाधयिषितत्वादि भासते इति मूलम् । 'सुरभिश्चन्दनखण्डः' इति प्रत्यक्षस्य सौरभांश इव सिषाधयिषितधर्मधर्मिनिष्ठो हेतुरित्याकारकस्येन्द्रियजन्यज्ञानस्य सिषाधयिषितत्वांशेऽलौकिकत्वमिति भावः ।

2 उभयानुमितौ; अन्वयव्यतिरेक्यनुमितौ । उभयपरामर्शः; अन्वयव्यतिरेकव्याप्तिद्वयविषयकलिङ्गपरामर्शः ।

हेऽपि व्याप्तिज्ञानस्यानुत्पत्तेः । अतस्तन्निवृत्तिद्वारा तर्कस्य व्याप्तिज्ञानकारणत्वमिति । तदसत् । यदि साध्याभाववति साधनं वर्तेत, कारणत्वं तदा भज्येतेत्येवंविधतर्केण व्यभिचारशङ्कानिवृत्तिः कर्तव्या । न चैवंविधस्तर्कः केवलान्वयिनि संभवति, साध्यात्यन्ताभावस्याप्रसिद्धेः । अपिच, अयमपि तर्को नियमज्ञानाद्भवति । एवं तत्र तत्रापि नियमज्ञाने तर्कापेक्षायामनवस्थितिः । तथा न तर्कादपि विपर्ययापर्यवसितात् व्यभिचारशङ्कानिवृत्तिर्भविष्यतीति विपर्ययपर्यवसानं ग्राह्यमेव । तदपि व्याप्तिग्रहणापेक्षम् ।

तर्कस्य व्याप्तिज्ञानहेतुत्वे प्रमाणाभाव इत्याशङ्क्य, यद्व्यतिरेकेण यद्व्यतिरेकस्तत्तत्र कारणम् । तथाच तर्कव्यतिरेकेण व्याप्तिज्ञानानुत्पत्तेस्तर्को व्याप्तिज्ञानकारणमित्याह – **तस्य चेति** । सामानाधिकरण्यविशेषस्येत्यर्थः । अत्र दृष्टान्तमाह— **व्यभिचारेति** । [1] व्याप्तिज्ञानं तर्कजन्यम्, तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वात्, व्यभिचारविरहवदित्यनुमानं मानमिति भावः । ननु तर्को न व्याप्तिज्ञानकारणम्, तस्मिन् सत्यपि व्याप्तिज्ञानानुत्पत्तेः । न च व्यभिचारसंदेहस्य व्याप्तिज्ञानप्रतिबन्धकत्वान्न व्याप्तिज्ञानमिति वाच्यम्, तस्य तत्प्रतिबन्धकत्वे मानाभावादित्यत आह— **तत्संदेहेऽपीति** । व्यभिचारसंदेहेऽपीत्यर्थः । **तन्निवृत्तीति** । व्यभिचारसंदेहनिवृत्तिद्वारेत्यर्थः । निषेधति— **तदसदिति** । तर्कस्य व्यभिचारशङ्कानिवृत्तिद्वारा न व्याप्तिज्ञानहेतुत्वम्; व्यभिचारशङ्कानिवर्तकत्वस्य 'इदं वाच्यं ज्ञेयत्वात्' इत्यादिकेवलान्वयिन्यसंभवात्, तत्र साध्याभावाप्रसिद्धेरित्यभिप्रेत्य प्रतियोगितया तच्छङ्कानिवर्तकतर्काकारं दर्शयन्नेव तदभावं केवलान्वयिनि दर्शयति— **यदि साध्याभाववतीति** । नन्वभिधेयत्वं वस्तुविशेषनिष्ठात्यन्ताभावप्रतियोगीति व्यभिचारशङ्कापिशाच्याः केवलान्वयिन्यपि संभवेन तन्निवृत्त्यर्थं तर्को युज्यत इत्यस्वरसादाह— **अपिचायमपीति** । व्यभिचारशङ्कानिवर्तकतर्कोऽपीत्यर्थः । **नियमज्ञानादिति** । तर्कमूलभूतव्याप्तिज्ञानादित्यर्थः । अस्तु; प्रकृते किमायातमित्यत्राह— **एवं तत्र तत्रापीति** । अन्यथा प्रशिथिलमूलत्वेन तर्काभासत्वापत्तिरिति भावः । तर्कस्य व्यभिचारशङ्कानिवृत्तिद्वारा व्याप्तिग्राहकत्वे न केवल-

1 व्याप्तिज्ञानं तर्कजन्यम्, तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वात्, व्यभिचारविरहवदित्यनुमानं मानमिति । अत्र व्यभिचारज्ञानाभावो दृष्टान्तः । व्यभिचारपदेन व्यभिचारज्ञानं लक्ष्यते । साध्यं च जन्यत्वं प्रयोज्यत्वं विवक्षितम् । मूलस्थविपर्ययशब्दो व्यतिरेकपरः ।

व्याप्तिग्रहणं च तर्कापेक्षम् । सोऽपि विपर्ययपर्यवसानापेक्ष इति चक्रकादि दुरुत्तरम् । तथा कारणत्वादिकमपि नियमविशेष एव । ततश्च तज्ज्ञानेऽपि तर्कापेक्षायां पुनरनवस्थितिः ।

अथ—तत्र व्याघातेन शङ्कानिवृत्तिरस्तु । तदेव ह्याशङ्कयते यस्मिन्नाशङ्कयमाने 'इदानीमहं मौनी' इत्यादिवत् स्वक्रियाव्याघातादयो दोषा न निपतन्तीति चेत्, एतदपि न । व्याप्तिज्ञाने तर्हि तर्कस्य कारणत्वं न स्यात्, अननुगमात् ।

मनवस्था, किंतु चक्रकादयोऽपीत्याह—तथा न तर्कादपीत्यादिना चक्रकादि दुरुत्तरमित्यन्तेन ग्रन्थेन । ग्राह्यमेवेति । विपर्ययपर्यवसानस्य तर्काङ्गत्वादिति भावः । तदपीति । विपर्ययपर्यवसानमपीत्यर्थः । सोऽपीति । तर्कोऽपीत्यर्थः । तर्कस्य व्याप्तिज्ञानहेतुत्वेऽनवस्थान्तरमाह—तथा कारणत्वादिकमपीति । नियमेति । नियमविशेषघटितपूर्ववर्तित्वादिकमेवेत्यर्थः । तज्ज्ञानेऽपीति । कारणलक्षणान्तर्गतनियमज्ञानेऽपीत्यर्थः ।

ननु व्यभिचारशङ्कानिवृत्तिर्व्याघातादस्तु । यस्मिन्नाशङ्कयमाने न स्वव्याघातादिदोषास्तदेव ह्याशङ्कयते । ततश्च व्यभिचारशङ्कानिवृत्तिद्वारा व्याघातो व्याप्तिग्राहकः । न च--व्याघातो विरोधविशेष एव, स च परस्पराभावव्याप्यतया भवति; तत्र व्याप्तिग्रहे पुनरनवस्थैव दुष्परिहरा स्यादिति वाच्यम् । व्याघातो न विरोधविशेषः । किंतु [1]सहानवस्थितिसमुच्चयज्ञानमात्रम् । न तु तत्र व्याप्तिरप्यन्तर्भवति यतोऽनवस्था स्यादिति शङ्कते— अथ तत्रेति । व्याघातस्य व्याप्तिग्राहकत्वे तर्कादेव सर्वत्र व्याप्तिग्रह इति स्ववचनविरोध इत्यभिप्रायेण परिहरति--एतदपि नेति । दोषान्तरमाह—व्याप्तिज्ञान इति । ननु--क्वचित्तर्कात् व्याप्तिग्रहः । न च स्ववचनविरोध इति वाच्यम्, सर्वत्र तर्कादेव व्याप्तिग्रह इत्यत्रैवकारो भिन्नक्रमः—सर्वत्र तर्काद्व्याप्तिग्रह एवेति । यद्वा सर्वत्र

वस्तुतस्तु 'व्यभिचारविपर्ययवत्तत्संदेहेऽपि' इति मूले व्यभिचारविपर्ययपदेन व्यभिचारविषयकोऽयथार्थज्ञानविशेषो भ्रमो विवक्षितः । एवंच व्यभिचारभ्रम इव, व्यभिचारसंदेहे सत्यपि व्याप्तिज्ञानानुदयेन व्याप्तिज्ञानप्रतिबन्धकव्यभिचारसंशयनिवर्तनद्वारा तर्क उपयुज्यत इति मूलार्थः श्लिष्ट इति भाति ।

1 सहानवस्थितिसमुच्चयज्ञानम् । 'एतत्तेन सह न तिष्ठति' 'तच्चैतेन सह न तिष्ठति' इति सहानवस्थितिद्वयज्ञानमित्यर्थः । अत्र ज्ञाने व्याप्तिर्न भासते ।

अथोच्यते—न व्याप्तिज्ञानमात्रे तर्कस्य कारणत्वम्। अपि तर्हि, अत्यन्ताभावप्रतियोगिनिष्ठव्याप्तिग्रहे। तत्र व्यभिचारशङ्का संभवतीति तर्कादेव तन्निवृत्तिरिति। मैवम्। तथाप्यनवस्थादोषस्तदवस्थ एव।

नापि पञ्चमः, तस्य व्याप्तिज्ञानसहकृतेन्द्रियजन्यत्वान्न तर्कापेक्षेति पूर्वपक्षसंक्षेपः।

अत्रोच्यते—सर्वत्र तर्कादेव व्याप्तिग्रहः। व्याघातोऽपि तर्कविशेष एवेत्यग्रे वक्ष्यते।

तर्कादेव, तर्कादपीत्यर्थः। उभयथापि नोक्तदोष इत्याशङ्क्याह—अननुगमादिति। इदं तूपलक्षणम्। अनवस्थापत्तेश्चक्रकाद्यापत्तेश्चेत्यपि द्रष्टव्यम्।

ननु व्याप्तिज्ञानमात्रे तर्कस्य कारणत्वं न ब्रूमः, किंत्वत्यन्ताभावप्रतियोगिनिष्ठ-सामानाधिकरण्यज्ञाने। तत्र शङ्कानिवृत्तिस्तर्कादेवेत्याशङ्कते—अथोच्यत इति। परिहरति—मैवमिति। तथापीति। अननुगमपरिहारेऽपीत्यर्थः। अनवस्थादोष इत्युपलक्षणम्। चक्रकादिदूषणमपि द्रष्टव्यम्।

व्याप्तिपक्षधर्मतावच्छिन्नलिङ्गज्ञानजनकत्वं तर्कस्येति पञ्चमकल्पोऽपि नावकल्पत इत्याह—नापि पञ्चम इति। [1]ननु किं प्रत्यक्षं व्याप्तिग्राहकम्? किं वानुमानम्? उतोपमानम्? अथवा आगमः? आहोस्विदर्थापत्तिः? अभावो वा? तर्को वा? न तावदाद्यः, सर्वव्यक्तिनिष्ठस्यान्वयस्य व्यतिरेकस्य वा सर्वव्यक्तीनामग्रहे ग्रहीतुमशक्यत्वात्। तद्ग्रहे चानुमानवैयर्थ्यापत्तेः। न द्वितीयः, अनवस्थानात्। व्याप्तिग्रहमन्तरेणानुमानानुदये तत्तद्व्याप्तिग्राहकानुमानपरंपराया दुष्परिहरत्वेनानवस्थाया दुर्निवारत्वात्। न तृतीयः, तस्य सादृश्यमात्रविषयतया व्याप्तिज्ञानेऽजागरूकत्वात्। नापि चतुर्थः, आप्तवचनाकर्णनविधुराणामपि व्याप्तिदृष्टेः। नापि पञ्चमः, अर्थापत्तेरनुमानानतिरेकात्। नापि षष्ठः, दुर्निरूपत्वात्। नापि सप्तमः, अनवस्थितेः। इत्येतत्सर्वं मनसि निधायाह—इति पूर्वपक्षसंक्षेप इति।

सिद्धान्तं वक्तुं प्रतिजानीते—अत्रोच्यत इति। ननु तर्कादेव व्याप्तिग्रह इति कथम्? कदाचिद्व्याघातादपि व्याप्तिग्रहादित्यत आह—व्याघातोऽपीति। अग्र इति।

1 इति पूर्वपक्षसंक्षेप इति मूलेनाभिप्रेतं पूर्वपक्षविस्तरं विशदयति टीकाकारः—'ननु किं प्रत्यक्षं व्याप्तिग्राहकम्' इत्यादि 'इत्येतत्सर्वं मनसि निधायाह इति पूर्वपक्षसंक्षेप इति' इत्यन्तेन ग्रन्थेन।

तदितरप्रकारान्तर्भूततर्कोऽवगन्तव्य इत्यत्रेत्यर्थः। शङ्कायाः क्वचिद्विश्रान्त्युपपत्तेर्नानवस्थेति भावः। [1] अत्र वदन्ति—तर्काद्व्याप्तिग्रह इत्यसंगतम्, तर्कमूलभूतव्याप्तिग्रहे तर्कापेक्षायामनवस्थानात्। तदनपेक्षणे प्रशिथिलमूलत्वेन तर्काभासत्वापत्तेः। किंच तर्कव्यतिरेकेणापि प्रवृत्त्यादिहेत्वनुमितिजनकव्याप्तिज्ञानमभिनवोत्पन्नस्य [2] जायत इति व्यतिरेकव्यभिचार इति।

[3]यत्तु व्यभिचारज्ञानविरहसहकृतं सहचारज्ञानं व्याप्तिग्राहकम्। ज्ञानं निश्चयः शङ्का च। शङ्का च क्वचिदुपाधिसंदेहात्, क्वचिद्विशेषादर्शनसहितसाधारणधर्मदर्शनात्। तद्विरहश्च क्वचिद्विपक्षे बाधकतर्कात्; क्वचित् स्वतः सिद्ध एवेति। तत्तुच्छम्, तर्कस्य व्याप्तिमूलकत्वेऽनवस्थानात्; तदमूलकत्वे तर्काभासत्वापत्तेरित्युक्तत्वात्। न च यावदाशङ्कं तर्कानुसरणाद्यत्र व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रह इति वाच्यम्। व्याघाते सति शङ्कास्त्येव। स्वक्रियाविरोधप्रतियोगिन्याः शङ्काया जातत्वे स्वक्रियाविरोधात्मनो व्याघातस्यावतारात्, [4]निष्प्रतियोगिकस्य विरोधस्यासंभवाच्च। असति व्याघाते प्रतिबन्धकत्वाभिमतव्याघातविरहाच्छङ्का। तदा शङ्काया व्याघातावधित्वम्। तर्कस्य शङ्कावधित्वं न युज्यते व्याघातस्थलेऽपि शङ्कावश्यंभावात्। शङ्कानिवृत्त्यर्थं तर्कानुसरणे गलेपादुकान्यायेनानवस्था स्यात्। तदुक्तं महाखण्डने—

"[5]व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः॥"

1 तर्कस्य व्याप्तिग्राहकत्वं दूषयति-अत्र वदन्तीत्यादिना।

2 अभिनवोत्पन्नस्य ; जातमात्रस्यानधिगततर्कादिमर्यादस्येत्यर्थः।

3 मणिकारोक्तं व्याप्तिग्रहकारणं दूषयितुमुपन्यस्यति—यत्त्विति। दूषयति-तत्तुच्छमिति।

4 निष्प्रतियोकस्य विरोधस्यासंभवाच्चेति। शैत्यस्यौष्ण्येन सह विरोधः। तस्यौष्ण्यं प्रतियोगीत्युच्यते। स्वक्रियायाः धूमार्थं वह्न्युपादानादिकाया वह्निं विनापि धूमः स्यादिति शङ्कया विरोध इति विरोधस्य प्रतियोगिनी शङ्का। निष्प्रतियोगिकश्च विरोधो न तिष्ठतीति, व्याघाते सति शङ्कायाः स्थितिरावश्यकीति भावः।

5 व्याघातो यदि शङ्कास्तीति। 'व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः' इति न्यायकुसुमाञ्जलिकारिकायाः खण्डनपरोऽयं श्लोकः। व्याघातो यदि वर्तते तदा शङ्का अस्ति, शङ्कामाश्रित्यैव व्याघातस्य प्रवृत्तेः। न चेत् व्याघातः, ततः प्रतिबन्धकाभावात् सुतरां शङ्कास्ति, शङ्काप्रतिबन्धकत्वेन भवदभिमतस्य व्याघातस्याभावात्। तर्कस्य शङ्कावधित्वं शङ्कानिवर्तकत्वम्, आशङ्काया व्याघातावधित्वं व्याघातनिवर्त्यत्वं कुतः? न कथमपीत्यर्थः।

ननु तर्केण व्यभिचारशङ्कानिवृत्तिद्वारा व्याप्तिज्ञानं जनयितव्यम् । केवलान्वयिनि व्यभिचारशङ्काया अभावान्न तथा । अतो वैषम्यात्कथं कारणतानुगमः ? मैवम् ; साधनसमानाधिकरणात्यन्ताभावप्रतियोगि न वेति शङ्कायाः केवलान्वयिन्यपि संभवात् । व्यापकतासंदेहोऽपि फलतो व्याप्तिसंदेह एवेति न कश्चिद्विशेषः ।

इति । [1]यत्तु कश्चित्—व्याघातो न शङ्काश्रितः । किंतु स्वक्रियैव शङ्काप्रतिबन्धिकेति । तत्तुच्छम् , विकल्पासहत्वात् । तथाहि—यत्र व्याघातः शङ्काया उत्तरावधिः, तत्रोत्पन्नशङ्काया अभावाद्वा ? सर्वत्र वा ? नाद्यः, शङ्कान्तराश्रितत्वस्य परिहर्तुमशक्यत्वात् ; निरधिकरणस्य निष्प्रतियोगिकस्य व्याघातस्य ब्रह्मणापि वक्तुमशक्यत्वाच्च । न द्वितीयः, दत्तोत्तरत्वादिति दिक् । [2]यत्तु—यत्र तर्के व्याप्त्यनुभवो मूलं , तत्र तर्कान्तरापेक्षा । यत्र व्याप्तिस्मरणं मूलं, तत्र न तर्कान्तरापेक्षेति नानवस्था । अभिनवोत्पन्नस्थले इष्टाद्यनुमितिहेतुव्याप्तिस्मरणम् ; तदानुभावकाभावादिति । तन्न । इदानीमनुभावकाभावादित्यपि वक्तुं सुकरत्वात् । यदि स्मारकमस्ति, तदानुभावकमप्यस्तीत्यपि वक्तुं सुकरत्वाच्चेति दिक् । वस्तुतस्तु—एकस्थले तत्परिहारेऽपि वह्निधूमयोर्व्याप्तिग्रहे तच्छङ्कानिवर्तकत्वेन तर्कापेक्षाभ्युपगमे स दोषस्तदवस्थ इति ध्येयम् ।

[3]अपरे तु—अनादिसिद्धकार्यकारणभावविरोधादिमूलाः केचित्तर्का इत्याहुः । तन्न, तत्र[4] प्रमाणानुयोगेऽनुमान एव पर्यवसानादिति संक्षेपः ।

ननु व्यभिचारशङ्कानिवृत्तिद्वारा तर्को न व्याप्तिग्रहहेतुः, केवलान्वयिनि व्यभिचारशङ्काया अभावादिति शङ्कते—**ननु तर्केणेति** । व्यभिचारशङ्कायाः केवलान्वयिन्यपि संभव इत्युत्तरयति—**मैवमिति** । ननु व्यापकतासंदेह एवायम् ; न व्याप्तिसंदेह इत्यत आह—**व्यापकतासंदेहोऽपीति** । फलपर्यालोचनायामुभयोरभेद इति भावः ।

1 मणिकाराभिहितं खण्डनोक्तदूषणोद्धारं दूषयितुमनुवदति—यत्त्विति ।

2 परिहारप्रकारं दूषयितुमुपन्यस्यति—यत्त्विति ।

3 गङ्गेशोपाध्यायोक्तदूषणेनैव दूषयितुमनवस्थापरिहारप्रकारान्तरमाह—अपरे त्विति । अनादिसिद्धेति कार्यकारणभावविरोधादीनां विशेषणम् । अनादित्वेनानादिप्रसिद्धिविषयत्वेन सिद्धा निश्चिताः कार्यकारणभावादयः क्वचित्तर्के शङ्कानिवर्तका इति नानवस्थेत्याशयः ।

4 तत्रेति । कार्यकारणभावादीनामनादिप्रसिद्धिविषयत्वे । प्रमाणानुयोगे ; प्रमाणप्रश्ने ।

ननु क्वचिदाप्तोपदेशादपि व्याप्तिर्गृह्यते । तत्कथमुच्यते तर्कादेव व्याप्तिग्रह इतीति चेत्; न । तत्राप्याप्तोक्तत्वमनुमानादेव । अन्यथा प्रामाण्य-संदेहे व्यभिचारशङ्का तदवस्थैव स्यात् । यद्वा क्वचित्तर्कात्, क्वचिदाप्तोपदेशात्, क्वचिद्व्याघातादपि व्याप्तिज्ञानोपपत्तौ कारणताननुगमो न दोषः; [1]तृणारणि-मणिन्यायात् । ननु व्याघातोऽपि विरोधविशेषः । स च परस्पराभाव-व्याप्ततया भवति । अतस्तत्रापि व्याप्तिग्रहे पुनरनवस्थैव । मैवम् । सहान-वस्थितिसमुच्चयज्ञानमात्रं व्याघातः । न तत्र व्याप्तिरप्यन्तर्भवति, यतोऽनवस्था स्यात् ।

ननु तर्कादेव व्याप्तिग्रह इत्यसंगतम्; आप्तोपदेशादपि व्याप्तिर्गृह्यत इत्या-शङ्कते—नन्विति । परिहरति—नेति । तत्रापीति । आप्तोपदेशेऽपीत्यर्थः । अन्यथेति । आप्तोक्तत्वज्ञानस्यानुमानाधीनत्वानङ्गीकार इत्यर्थः । तृणारणिमणिन्यायात् तर्कव्याघाताप्तोपदेशानां प्रत्येकमेव व्याप्तिग्राहकत्वमिति पक्षभेदमभिप्रेत्याह—यद्वेति । ननु यदि व्याघातात् व्याप्तिर्गृह्येत तदानवस्था दुष्परिहरा स्यादित्याशङ्कते—नन्विति । परस्पराभावव्याप्ततयेति । परस्पराभावनियतसमानाधिकरणतयेत्यर्थः । परिहरति—मैवमिति । व्याघातो न विरोधविशेषः; अपितु सहानवस्थितिसमुच्चयज्ञान-मात्रम् । [2]तस्य नियमाघटितत्वान्नानवस्थादोष इत्याह—सहानवस्थितीति ।

ननु व्याघातस्य व्याप्तिग्राहकत्वे तदाश्रयत्वेन शङ्का स्वीकर्तव्या, तस्याश्रय-मन्तरेण स्थित्यनुपपत्तेः । व्याघातस्याविद्यमानत्वे शङ्काया अवश्यं स्वीकारः, प्रतिपक्षस्या-

अनुमान एवेति । प्रत्यक्षस्य तत्रासंभवादिति भावः । तथाच तत्राप्यनुमाने तर्कापेक्षेत्यनवस्था तदवस्थेति हृदयम् ।

1 तृणारणिमणिन्यायात् । तृणारणिमणीनधिकृत्य प्रवृत्तो न्यायः । अरणिं विना तृणेन, तृणं विना अरणिना, एतदुभयं विनापि मणिना सूर्यकान्तादिना वह्निर्जायते । वह्नित्वाच्छिन्नं प्रति व्यतिरेकव्यभिचारेण तृणत्वादिना कारणत्वाभावेऽपि, तृणजन्यवह्निं प्रति तृणस्य, अरणि-जन्यवह्निं प्रत्यरणेः कारणत्वं यथा स्वीक्रियते, तथा तर्कजन्यव्याप्तिज्ञाने तर्कस्य, व्याघात-जन्यव्याप्तिज्ञाने व्याघातस्य, आप्तोपदेशजन्यव्याप्तिज्ञाने आप्तोपदेशस्य च कारणत्वमिति भावः ।

2 नियमाघटितत्वात्; व्याप्त्यविषयकत्वात् । अयं भावः—सहानवस्थितस्य द्वितयस्य यत्समुच्चितत्वं स व्याघातः । तस्य ज्ञानं व्याघातग्रहः । न तु नियमतः सहानवस्थितस्य, येन नियमग्रहाय तर्कापेक्षा स्यादिति ।

यत्तु खण्डनकृतोक्तम्—व्याघातो यदि, तदा शङ्कया भवितव्यम् । अन्यथा किमाश्रयो व्याघातः ? न चेद्व्याघातः, तदा शङ्कया सुतरां भवितव्यम् , प्रतिपक्षाभावादिति । तन्न । तर्हि न क्वचिदपि विशेषदर्शनाच्छङ्कानिवृत्तिः ; न वा बाधकप्रत्ययाद्बाध्यप्रत्ययनिवृत्तिरिति । तथाच साधूक्तं ब्रह्मसंवेदनादनाद्यविद्यानिवृत्तिरित्यलमनेन ।

भावादिति शङ्काया निवृत्त्यर्थं व्याघातान्तराभ्युपगमे दुर्निवारानवस्था स्यादिति **महाखण्डनकारोक्तं** दूषयितुमुपन्यस्यति—**यत्त्वित्यादिना प्रतिपक्षाभावादित्यन्तेन ।** निषेधति—**तन्नेति** । प्रतिबन्द्या दूषणमुद्धरति—**तर्हीति** । व्याघातस्य शङ्कानिवर्तकत्वाभाव इत्यर्थः । प्रतिबन्द्यन्तरमाह—**न वेति** । **बाधकप्रत्ययादिति** । 'नेदं रजतम्' इति बाधकप्रत्ययादित्यर्थः । **बाध्यप्रत्ययेति** । 'इदं रजतम्' इत्यादिबाध्यप्रत्ययः ; तन्निवृत्तिः । अत्रेष्टापत्तिमाशङ्क्याह—**तथाचेति** । ब्रह्मसंवेदनं ब्रह्मगोचराखण्डाकारापरोक्ष्यम् ; तस्मादित्यर्थः । **अविद्यानिवृत्तिरिति** । अविद्या अज्ञानम् । तच्चानादि भावरूपं ज्ञाननिवर्त्यम् । ज्ञाननिवर्त्यमज्ञानमित्युक्ते [1]उत्तरज्ञाननिवर्त्यपूर्वज्ञानेऽतिव्याप्तिः । तन्निवृत्त्यर्थमनादीति । तस्य सादित्वान्नातिव्याप्तिः । अनादि ज्ञाननिवर्त्यमित्येतावत्येव कृते [2]ज्ञानप्रागभावेऽतिव्याप्तिः । तदर्थमुक्तं भावेति । अनादि भावरूपमज्ञानमित्युक्ते, अविद्यात्मसंबन्धादावतिव्याप्तिः । तदर्थमुक्तं ज्ञाननिवर्त्यमिति । [3]साक्षाज्ज्ञाननिवर्त्यमित्यर्थः । तेनाविद्यात्मसंबन्धादौ तदभावान्नातिव्याप्तिरिति ध्येयमिति दिक् । तदुक्तमभियुक्तैः—

"अनादि भावरूपं यद्विज्ञानेन निवर्तते ।
तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षते ॥"

इति ।

1 उत्तरज्ञाननिवर्त्यपूर्वज्ञानेति । योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यत्वादिति भावः ।

2 ज्ञानप्रागभावेऽतिव्याप्तिरिति । प्रतियोग्येव प्रागभावनाशकः ; न तु प्रतियोगिसामग्रीत्याशयः ।

3 साक्षाज्ज्ञाननिवर्त्यमित्यर्थ इति ।

"जीव ईशो विशुद्धा चिद्विभागश्च तयोर्द्वयोः ।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥"

इत्यद्वैतवेदान्तसिद्धान्तः । अविद्याचित्संबन्धादीनामनादित्वेऽप्यविद्याप्रयुक्तत्वमस्त्येव । अतो ब्रह्मज्ञानेनाविद्यानिवृत्तौ सत्यामविद्याप्रयुक्तसंबन्धनिवृत्तिः । न तु ब्रह्मज्ञानेनैवाविद्याचित्संबन्धो निवर्तत इति भावः ।

लक्षणं तु चिन्त्यते—तत्र न तावत् व्याप्यारोपात् व्यापकारोप इति तल्लक्षणम् । धूम एव धूलीपटलज्ञानानन्तरं 'धूलीपटलवान् किंशुककुसुमवानयं देशः' इति यदा प्रतीतिरुत्पद्यते, तत्र वस्तुगत्या व्याप्यारोपादेव वस्तुगत्या व्यापकस्य वह्नेरारोपस्यैव प्रतीतिः, विशेषणज्ञानजन्यत्वाद्विशिष्टप्रतीतेः । अतोऽत्रातिव्याप्तिः । [1]नात्र व्याप्यव्यापकयोरारोपः; किंतु तयोरन्यदारो-

अत्र केचित् - भावपदमुपादानपरम् । ततश्चाविद्यात्मसंबन्धादावुपादानत्वाभावान्नातिव्याप्तिरित्याहुः । विवरणाचार्यास्तु—यच्चानादि स्वयं मिथ्या[2] मिथ्योपादानमात्मसंबन्धि तदज्ञानमित्याहुः । तस्या अविद्याया निवृत्तिर्ध्वंस इत्यर्थः । तथाच ब्रह्मसंवेदनादविद्यानिवृत्तिरिति साधूक्तमिति योजना कार्या । साधूक्तमित्यनेन विडम्बनोक्तिर्महाखण्डनकारस्यापसिद्धान्तं प्रकटयितुमिति दिक् । वस्तुतस्तु—इदं तुच्छतमम् । यतो ज्ञानमज्ञानस्य निवर्तकमित्यादिपर्यालोचनया ब्रह्मज्ञानस्याज्ञाननिवर्तकत्वं युज्यते । तद्वत् व्याघातस्य शङ्कानिवर्तकत्वे प्रमाणाभावान्न प्रतिबन्दी घटते । किंच ब्रह्मज्ञानव्यतिरेकेण निवर्तकान्तराभावादपि तन्निवर्त्यत्वम् । प्रकृते व्याघातव्यतिरेकेणाप्याप्तोपदेशादिना शङ्कानिवृत्तिरिति ।

लक्षणमिति । अनुमितिकरणव्याप्तिज्ञानहेतुतर्कलक्षणमित्यर्थः । कश्चायं तर्कः ? व्याप्यारोपेण व्यापकारोपो वा, व्याप्यारोपेण व्यापकप्रसञ्जनं वेति विकल्प्याद्यं कल्पं निराकरोति—तत्र न तावदिति । तत्र । द्वयोः कल्पयोरित्यर्थः । तावच्छब्दः क्रमवाची । व्यतिरेकव्याप्तौ व्याप्यस्य वह्न्यभावस्यारोपः । तेन व्यापकस्य धूमाभावस्यारोप इत्यर्थः । यद्वा साध्याभाववति साधनज्ञानं व्याप्यारोपः । तेन व्यापकारोपः साध्यज्ञानमित्यर्थः । अर्थद्वयेऽपि विपर्यये पर्यवसानमवगन्तव्यमिति दिक् । अतिव्याप्त्या दूषयति—धूम एवेत्यादिना अतिव्याप्तिरित्यन्तेन ग्रन्थेन । अतिव्याप्तिपरिहारमाशङ्कते—नात्रेति । प्रकारान्तरेणातिव्याप्तिमापादयति—तथापीति । ननु न

1 'नात्र व्याप्यव्यापकयोरारोपः, किंतु तयोरन्यदारोप्यते' इति मूलम् । धूमवह्न्योर्नारोपः, किंतु धूमे व्याप्ये धूलीपटलत्वस्य, व्यापके वन्हौ किंशुककुसुमत्वस्य चारोप इति तदर्थः ।

2 मिथ्या बाध्यम् । तत्त्वं च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् । मिथ्योपादानम्; मिथ्याभूतस्य परिणाम्युपादानम् । आत्मसंबन्धि; आश्रयत्वविषयत्वरूपसंबन्धद्वयवत् । " आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला " इति विवरणाचार्याणामाशयः ।

प्यत इति चेत्, तथापि 'धूमवानयं वह्निमान्' इति यत्रारोपस्तत्रातिव्याप्तिः। व्याप्यत्वेन प्रतीत्यनन्तरं व्यापकत्वेनारोपः सोऽभिमत इति चेत्; न, धूलीपटले धूमभ्रमात् वह्न्यनुमितावतिव्याप्तेः।

बाधकप्रत्यये विद्यमाने यस्तादृशारोपः सोऽभिमत इति चेत्; न, 'अयं शङ्खस्तिक्तः, पीतिमाश्रयत्वात् पित्तद्रव्यवत्' इत्यनुमितावतिव्याप्तेः। बाधकप्रत्यये सत्यनुमितिर्नोत्पद्यत इति चेत्, तथाप्येतादृशशाब्दज्ञानेऽतिप्रसक्तिरेव। बाधके सति तदपि नोत्पद्यत इति चेत्; न, बाधके सत्यपि शाब्दज्ञानोत्पत्तेः। अयोग्यताज्ञाने सति कथं शाब्दप्रतीतिरिति चेत्; न। योग्यता हि स्वरूपसती वाक्यार्थप्रमामात्रं प्रति कारणम्; न तु वाक्यार्थ-

युगपदुभयारोपः; किंतु प्रथमं व्याप्यारोपः; तदनन्तरं व्यापकारोपस्तर्कः। अतो न तत्रातिव्याप्तिरिति शङ्कते—व्याप्यत्वेनेति। तथापि धूलीपटले धूमभ्रमेण जायमानवह्न्यनुमितावतिव्याप्तिर्दुर्वारेत्यभिप्रायेण परिहरति—धूलीपटल इति।

ननु बाधकप्रत्यये विद्यमाने व्याप्यत्वेन प्रतीत्यनन्तरं व्यापकारोपस्तर्कः। अतो नोक्तस्थलेऽतिव्याप्तिरिति शङ्कते—बाधकेति। 'शङ्खस्तिक्तः' इत्याद्यनुमितावतिव्याप्तिर्दुष्परिहरेत्यभिप्रायेणोत्तरयति—अयमिति। ननु बाधकप्रत्यये विद्यमाने नानुमितिरिति शङ्कते—बाधकेति। अनुमितिः। शङ्खविशेष्यकतिक्तत्वप्रकारकानुमितिरित्यर्थः। 'शङ्खस्तिक्तः' इति शाब्दज्ञानविशेषेऽतिव्याप्तिः स्यादित्याह—तथाप्येतादृशेति। ननु बाधकप्रत्यये सति तादृशशाब्दज्ञानं नोत्पद्यत इति शङ्कते—तदपीति। परिहरति—नेति। बाधक इति। एकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वरूपबाधकज्ञान इत्यर्थः। नन्वयोग्यताज्ञानस्य शाब्दज्ञानादौ प्रतिबन्धकत्वात्कथं तज्ज्ञानमुत्पद्यत इति शङ्कते—अयोग्यतेति। अन्यथा तस्य प्रतिबन्धकत्वाभावाभ्युपगमे सिद्धान्तविरोध इति भावः। भवेदेवं यदि योग्यताज्ञानं शाब्दज्ञानकारणं स्यात्; न चैवमिति परिहरति—योग्यता हीति। 'शङ्खस्तिक्तः' इति शाब्दज्ञाने तर्कलक्षणस्यातिव्याप्तिर्वज्रकल्पैवेति भावः। ननु का नाम योग्यता? न तावदनन्वयनिश्चयविरहः, योग्यताभ्रमाच्छाब्दभ्रमानुपपत्तेः। नापि बाधकप्रमाणाभावः। स किमन्यत्र यद्बाधकं प्रमाणं तदभावः? प्रकृतसंसर्गबाधकप्रमाणाभावो वा? न तावदाद्यः, तदभावस्यायोग्येऽपि सत्त्वात्। न द्वितीयः, प्रतियोगिसिद्ध्यसिद्धिव्याघातात्। ननु प्रकृतसंसर्गेऽन्यत्र सिद्धस्य बाधकस्याभावोऽस्तीति चेत्; न, प्रकृतसंसर्गस्य प्रथमप्रतीतेरयोग्येऽपि सत्त्वादिति पूर्वपक्षसङ्क्षेपः।

अत्रोच्यते—बाधकप्रमाणाभावो योग्यता । स चैकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावः । तेन न परोक्तविकल्पावकाश इति ध्येयम् । 'प्रमेयं वाच्यम्' इत्यत्र प्रमेयनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वं गोत्वे प्रसिद्धम् । वाच्यत्वसंसर्गे तदभावोऽस्तीति नाव्याप्तिरिति ध्येयम् । 'पयसा सिञ्चति' इत्यत्रैकं यत्पदं पयःपदं, तस्यार्थो जलरूपः, तत्संसर्गस्तत्करणकत्वरूपसंसर्गः, तस्मिन् अपरं यत्पदं सिञ्चतीति, तस्य योऽर्थः सेकरूपः,तन्निष्ठात्यन्ताभावो वह्न्यादिप्रतियोगिकः, तादृशात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वं वह्न्यादौ प्रसिद्धम् । तदभावो योग्यतेत्यर्थः ।

ननु 'प्रमेयत्वे प्रमेयत्वम्' इत्यत्र प्रमेयत्वरूपपदार्थस्य प्रमेयत्वपदस्य चैकत्वात्तत्र [1]भेदगर्भैकापरपदार्थासंभवादव्याप्तिरिति चेत्; सत्यम्; अर्थैक्येऽपि पदयोः सप्तम्यन्तप्रथमान्ततया भिन्नत्वेन पदविशेषणत्वेन चैकापरपदयोरभिधानान्नोक्तदोषः । 'शब्दसमवाय्याकाशम्' [2]इत्यत्राकाशात्यन्ताभावस्य केवलान्वयितयाकाशस्यापरपदार्थभूतशब्दनिष्ठात्यन्ताभावप्रतियोगित्वेन तत्प्रतियोगित्वप्रमाविशेष्यत्वस्य सत्त्वेन तदभावस्याभावादव्याप्तिरित्यतः संसर्गपदम् । आकाशात्यन्ताभावस्य शब्दनिष्ठत्वेऽपि नाकाशसंसर्गात्यन्ताभावस्तन्निष्ठ इति तेन तत्र नाव्याप्तिः ।

अथैवमपि 'गन्धप्रागभावावच्छिन्नो घटो गन्धवान्' इत्याद्ययोग्यवाक्ये गन्धपदार्थसंसर्गस्य घटपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वाभावेन तत्प्रतियोगित्वप्रमाविशेष्यत्वस्याप्यभावादतिव्याप्तिरिति चेत्; न, अत्यन्ताभावपदेन विरोधिमात्रस्य विवक्षितत्वात् । गन्ध-

1 भेदगर्भैकापरपदार्थासंभवादिति । एकशब्दोऽन्यार्थकोऽपि दृश्यते । अत एकपदार्थो भेदगर्भ इत्युच्यते । यदि चैकशब्दस्यान्यत्वरूपेणान्यार्थकता नास्ति 'चैत्र एकमानयति, मैत्रस्त्वपरम्' इत्यत्र घटत्वपटत्वादिनेवानयनकर्मत्वप्रतीतिः, न तु पटघटान्यत्वादिना, अन्यत्वान्वयिप्रतियोगिवाचकपदासमभिव्याहारात् । परंतु समभिव्याहृतान्यत्वोपलक्षितवस्तुनिष्ठबुद्धिविषयतावच्छेदकघटत्वपटत्वादिनान्यार्थकतेत्युच्यते । तदापि घटत्वादिनान्यस्यैव वाच्यता । इत्थं चैकपदार्थसंसर्गेऽपरपदार्थनिष्ठाभावप्रतियोगित्वप्रमाविशेष्यत्वाभाव इत्यत्र, एकत्वापरत्वयोः पदे धान्वयोऽभिमतः, उत पदार्थे ? उभयथापि 'प्रमेयत्वे प्रमेयत्वम्' इति योग्यवाक्ये योग्यता न स्यात् । प्रमेयत्वस्य स्ववृत्तितापि स्वीक्रियते । प्रमेयत्वपदार्थ एक एव । प्रमेयत्वपदमप्येकमेव, समानानुपूर्वीकत्वादित्याक्षेपभावः । आनुपूर्व्या अभेदेऽपि सप्तम्यन्तप्रमेयत्वपदव्यक्तेः प्रथमान्तप्रमेयत्वपदव्यक्तेश्च भेदोऽस्तीति पदे एकत्वापरत्वयोरन्वये नानुपपत्तिरिति समाधानभावः ।

2 आकाशात्यन्तभावस्य केवलान्वयितयेति । प्रतियोग्यधिकरणताया एवाभावविरोधित्वादवृत्तेराकाशस्याधिकरणाप्रसिद्ध्या विरोधिनोऽभावादाकाशाभावस्य सार्वत्रिकतेति भावः ।

प्रतीतिमात्रं प्रति । अत एवोच्यते "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति । यदि नोत्पद्यते, कथमपरो निषेधति 'नात्र घटः' इति ?

प्रागभावादेरपि गन्धसामानाधिकरण्यविरोधितया घटनिष्ठविरोध्यभावभूतगन्धप्रागभावप्रतियोगिनो गन्धस्य[1] तादृशाभावप्रतियोगित्वप्रमाविशेष्यत्वेन तत्र तदभावान्नातिव्याप्तिरिति ।

नन्वेवमप्याकाशसेकसंसर्गौ जलनिष्ठात्यन्ताभावप्रतियोगिनौ न भवत इत्यस्य सत्त्वेन तत्प्रतियोगित्वप्रमाविशेष्यत्वाभावस्योभयत्रापि सत्त्वादाकाशांशेऽतिव्याप्तिरिति चेत्; न, आकाशांशे तादृशप्रतियोगित्वप्रमाविशेष्यत्वस्य सत्त्वेन तदभावस्याभावान्नातिव्याप्तिः । जलांशे तादृशप्रतियोगित्वप्रमाविशेष्यत्वाभावस्य सत्त्वेन नाव्याप्तिरित्यपि द्रष्टव्यमिति दिक् ।

यद्वा एकपदार्थसंसर्गेऽपरपदार्थनिष्ठप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं योग्यता । 'इदं संयोगि, द्रव्यत्वात्' इत्यादावव्याप्तिवारणाय प्रतियोगिव्यधिकरणपदमिति दिक् । **स्वरूपसतीति** । गुणत्वेनेति शेषः । न ज्ञाता, तज्ज्ञानस्य हेतुत्वे मानाभावादिति भावः ।

नन्वयोग्यवाक्ये योग्यताभ्रमाच्छाब्दबोध एव तत्र मानमिति चेत्; न, आकाङ्क्षादिसत्त्वमात्रेण शाब्दबोधसंभवे तज्ज्ञानस्य हेतुत्वेनाकल्पनीयत्वात् । न च यद्याकाङ्क्षादिसत्त्वमात्रेणान्वयबोधः, तर्हि बाधानन्तरमप्याकाङ्क्षादेः सत्त्वात् स्यादन्वयबोधः । न च तदान्वयबोधः । तथाच तज्ज्ञानस्य कारणत्वमेष्टव्यमेवेति शङ्कनीयम् । तदा बाधाख्यप्रतिबन्धवशान्नान्वयबोधः; न योग्यताज्ञानविरहात् । योग्यताज्ञानस्य हेतुत्वमपि न संभवति । तथाहि—किमन्योन्याभावगर्भयोग्यताज्ञानं शाब्दप्रमाहेतुः ? किं वात्यन्ताभावगर्भयोग्यताज्ञानम् ? आहोस्विदुभयविधयोग्यताज्ञानम् ? न तावत् प्रथमः, अत्यन्ताभावगर्भयोग्यताज्ञानादन्वयबोधाभावप्रसङ्गात् । न द्वितीयः, अन्योन्याभावगर्भयोग्यताज्ञानादन्वयबोधाभावप्रसङ्गात् । नापि तृतीयः, एकैकयोग्यताज्ञानस्थले तदभावप्रसङ्गादिति ।

ननूभयविधयोग्यताज्ञानात्प्रत्येकं शाब्दबोधदर्शनात् प्रत्येकमुभयोरपि हेतुत्वम् । न चाननुगमः, ग्राह्यसंसर्गविरोधिविरहज्ञानत्वेनोभयोरनुगतिसंभवात् । ग्राह्यसंसर्गविरोधित्वं च ग्राह्यसंसर्गज्ञानप्रतिबन्धकीभूतज्ञानविषयत्वम् । तथाच योग्यताज्ञानस्योक्तप्रकारेण शाब्द-

1 गन्धस्य; गन्धसंसर्गस्य ।

**अव्यापकं चैतल्लक्षणम् । तथाहि—‘ यद्यतिथिरागच्छेद्भोजयितव्यः स्यात् । स आगच्छति भोज्यते च ’ ; यथा वा ‘ जलं यदि सहकारिभिः संबध्यते, तृष्णामुपशमयेत् । तत् सहकारिभिः संबध्यते तृष्णामुपशमयति च ’ इत्येवमादितर्काणां यथार्थज्ञानत्वादारोपानुपपत्तिः । किंच, असंभवि तावदिदं लक्षणम् ; सर्वेषामेव तर्काणां यथार्थत्वात् । अत एव तदालिङ्गि-**

बोधहेतुत्वं संभवतीति चेत् ; न, कारणतावच्छेदकावच्छिन्नयत्किंचित्कारणस्य सत्त्वे कार्यस्यावश्यकत्वे [1]अन्योन्याभावगर्भायोग्यताज्ञानदशायामप्यत्यन्ताभावगर्भयोग्यताज्ञानादन्वयबोधप्रसङ्गात् । न च तदान्वयबोधोऽपि जायत इति शङ्कनीयम्, अन्योन्याभावगर्भायोग्यताज्ञानस्यापि ग्राह्यसंसर्गविरोध्यवगाहित्वेन शाब्दज्ञानप्रतिबन्धकत्वस्योक्तत्वात्तद्गर्भयोग्यताज्ञानस्य ग्राह्यसंसर्गविरोधिविरहज्ञानत्वाभावेनोक्तशाब्दबोधहेतुत्वभङ्गप्रसङ्गात् । तस्माद्योग्यताज्ञानं न शाब्दबोधहेतुः । किंतु योग्यता स्वरूपसती गुणत्वेन शाब्दबोधे कारणमिति दिक् । **अत एवेति ।** स्वरूपसत्या योग्यतायाः शाब्दबोधहेतुत्वादेवेत्यर्थः । निगदव्याख्यातमन्यत् ।

न केवलं तर्कलक्षणस्यातिव्याप्तिः ; किंत्वव्याप्तिरपीत्याह—**अव्यापकमिति । एतल्लक्षणम् ।** व्याप्यारोपेण व्यापकारोप इति लक्षणमित्यर्थः । अव्याप्तिमेव प्रतिपादयति—**यद्यतिथिरिति ।** तर्काभासशङ्कां निराकरोति—**स आगच्छतीति ।** अत्रापि तर्काभासशङ्कां निराकरोति—**सहकारिभिरिति ।** आदिपदेन ‘ इदं रत्नं यदि कान्तिभिर्युक्तं स्यात्, द्रष्टुः प्रीतिं जनयेत् । कान्तिभिर्युज्यते द्रष्टुः प्रीतिं जनयत्येव ’ इत्येतादृशतर्को गृह्यते । आरोपानुपपत्तिरित्यत्र हेतुमाह—**यथार्थेति ।** तद्वति तत्प्रकारकानुभवत्वादित्यर्थः । तथाचैतेषु तर्केष्वव्याप्तिरिति भावः । न केवलं तर्कलक्षणस्याव्याप्त्यतिव्याप्ती ; किंत्वसंभवोऽपीति मतान्तरं दर्शयति—**किंचेति ।** तावच्छब्दो वाक्यालंकारे । **अत एवेति ।** यथार्थत्वादेवेत्यर्थः । **तदालिङ्गितस्येति ।** तर्कालिङ्गितस्येत्यर्थः । प्रथमलक्षणोक्तातिव्याप्त्यादिग्रस्तत्वान्न द्वितीय इत्याह—**व्याप्यारोपेणेति ।**

1 अन्योन्याभावगर्भयोग्यताज्ञानम् ; एकपदार्थसंसर्गेऽपरपदार्थनिष्ठभेदप्रतियोगितानवच्छेदकत्वज्ञानम् । अत्यन्ताभावगर्भयोग्यताज्ञानम् ; एकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावाप्रतियोगित्वज्ञानम् । अन्योन्याभावगर्भायोग्यताज्ञानदशायामपीति । अत्यन्ताभावघटितयोग्यताज्ञानेऽन्योन्याभावघटितायोग्यताज्ञानस्य ग्राह्याभावाविषयकत्वेनाप्रतिबन्धकत्वादिति भावः।

तस्यार्थस्य सत्यत्वं सुप्रसिद्धमिति केचित् । व्याप्यारोपेण व्यापकप्रसञ्जनं तर्क इत्यपि न लक्षणम्; प्रसञ्जनपदस्य तर्कोऽर्थश्चेदात्माश्रयत्वात्, पूर्वपदवैयर्थ्याच्चेति ।

अत्रोच्यते—तर्कत्वं ज्ञानत्वावान्तरजातिविशेषः । स एव लक्षणं तर्कस्य । न च तज्जात्यसिद्धिः, अनुगतानुव्यवसायसाक्षिकत्वात्तस्य । तथाहि—न तावत् संदेहे तर्कस्यान्तर्भावः, उभयकोट्यनुल्लेखात् । नापि 'निर्धूमोऽयम्' इत्येतादृशनिश्चये, 'निर्धूमः स्यादिति तर्कयामि, न तु निर्धूमोऽयमिति निश्चिनोमि' इति प्रत्यक्षवेद्यत्वात् । जातिसंकरः स्यादिति चेत्; न, तस्यादूषणत्वात् ।

लक्षणं स्पष्टार्थकम् । ननु प्रसञ्जनं नाम तर्कार्थकम् । अतो नातिव्याप्त्यादिरिति शङ्कते— प्रसञ्जनेति । आत्माश्रयत्वादिति । अर्थपर्यालोचनायामात्माश्रयत्वादित्यर्थः । ननु तर्कपदस्य साक्षात्तल्लक्षणेऽप्रविष्टत्वान्नात्माश्रय इत्यरुचेराह—पूर्वपदेति । व्याप्यारोपेणेति पदवैयर्थ्यापत्तेरित्यर्थः ।

सिद्धान्तं वक्तुं प्रतिजानीते—अत्रोच्यत इति । ज्ञानत्वेति । ज्ञानत्वस्य व्यापकस्यावान्तरजातिर्व्याप्यजातिः; तद्विशेष इत्यर्थः । स एवेति । एतादृशजातिविशेष इत्यर्थः । नन्वेतादृशजातिविशेषे मानाभाव इत्यत आह—न चेति । तज्जात्यसिद्धिः । तर्कत्वजात्यसिद्धिरित्यर्थः । प्रमाणमभिधत्ते—अनुगतेति । अनुगतानुव्यवसायः साक्षी यस्य; तस्य भावस्तत्त्वादित्यर्थः । तस्येति । तर्कत्वस्येत्यर्थः । एतादृशसाक्षिकत्वमेव प्रतिपादयति—तथाहीति । यद्वा तर्कस्य पराभिमतं संशयान्तर्भावं निश्चयान्तर्भावं वा दूषयितुं प्रतिजानीते—तथाहीति । पारिशेष्यात्तर्कत्वस्यानुव्यवसायसाक्षिकत्वं दर्शयति—न तावदिति । उभयेति । उभयकोट्यविषयत्वादित्यर्थः । तर्कस्येत्यनुषङ्गः ।

ननु मा भूत्संदेहे तस्यान्तर्भावः; निश्चयेऽन्तर्भावोऽस्त्वित्यत आह—नापीति । तस्य निश्चयात्मकत्वमसिद्धमित्याह— निर्धूम इति । इतिशब्दः प्रकारवाची; अनेन प्रकारेणेत्यर्थः । ननु तर्कत्वं न जातिः, प्रमात्वादिना सांकर्यात् । तथाहि—तर्कत्वं विहाय प्रमात्वम् 'अयं घटः' इति प्रमायां वर्तते । प्रमात्वमपहाय तर्कत्वं 'यद्यग्निर्न स्यात्' इत्यादितर्के वर्तते । उभयमपि 'यद्यतिथिरागच्छेत् स भोजयितव्यः ।

यद्वा व्याप्यारोपत्वावच्छिन्नकारणताप्रतियोगिककार्यताश्रयव्यापकारोपत्वमेव तर्कत्वम् । न च शाब्दज्ञानेऽतिप्रसक्तिः ; तेन रूपेण तत्कारणताया अभावात् । न च संभावनात्मकेऽव्याप्तिः, तस्य विभिन्नकोटिकसंशयविशेषत्वेनालक्ष्यत्वात् । एतस्मिन् पक्षे व्याघातो विरोधविशेष एवान्तर्भवति ।

आगच्छति भोज्यते च' इत्यादितर्केषु विद्यत इत्याह—जातिसंकर इति । तस्येति । जातिसंकरस्येत्यर्थः । अयमाशयः—जातिसंकरस्वीकारे गोत्वाश्वत्वयोरप्येकाधिकरणत्वापत्तिः ; ततश्च 'अश्वो गोत्वानाधारः, तद्विरुद्धधर्माश्रयत्वात्' इत्याद्यनुमानभङ्गो वा ? शिंशपात्वेन वृक्षत्वानुमानव्याकोपो वा ? नाद्यः, भूतत्वमूर्तत्वयोरपि सांकर्यापत्त्या परस्पर व्यतिरेकानुमानं न स्यात् । न चाविरुद्धस्वभावानामुपाधीनां परस्परव्यतिरेकाननुमितावपि विरुद्धस्वभावानां तेषां परस्परव्यतिरेकानुमानं युज्यत इति वाच्यम्, भूतत्वमूर्तत्वादिवत् कासांचिज्जातीनामविरुद्धस्वभावतया परस्परव्यतिरेकाननुमापकत्वेऽपि गोत्वाश्वत्वयोर्विरोधस्य सहानवस्थानलक्षणस्य प्रमाणसिद्धत्वेन परस्परव्यतिरेकानुमापकत्वे विरोधाभावात् । न द्वितीयः । 'अयं वृक्षत्ववान् शिंशपात्वात्' इत्यत्र वृक्षत्वानङ्गीकारे शिंशपात्वमेव न स्यादिति विपक्षे बाधकतर्कस्य सत्त्वात्तदनुमानं युज्यते । अन्यथा शिंशपात्वसमनियतधर्मेण वृक्षत्वसमनियतधर्मानुमानमपि न स्यादिति दिक् ।

ननु संकरस्य जातिबाधकत्वाभावे व्यक्त्यैक्यानवस्थादीनामपि जातिबाधकत्वं न स्यात् । न चेष्टापत्तिः, अपसिद्धान्तापातात् । तथाहि—आकाशत्वमपि जातिः स्यात् । सामान्येऽपि सामान्यं स्यात् । कलशत्वादिरपि जातिः स्यात् । ततश्चोपाधिमात्रमुच्छिन्नं स्यादित्यस्वरसादाह—यद्वेति । व्याप्यारोपत्वेति । व्याप्यारोपत्वावच्छिन्ना व्याप्यारोपत्वसमानाधिकरणा या कारणता व्याप्यारोपनिष्ठकारणता, सा प्रतियोगिनी यस्याः, तादृशप्रतियोगिका या कार्यता व्यापकारोपनिष्ठा, तदाश्रयो योऽयं व्यापकारोपस्तत्त्वमित्यर्थः । व्याप्यारोपत्वेन व्याप्यारोपजन्यो व्यापकारोपस्तत्त्वमिति यावत् । अत एव 'शङ्खस्तिक्तः' इति शाब्दज्ञानविशेषे नातिव्याप्तिरित्याह—न च शाब्दज्ञान इति । अतिव्याप्त्यभावे युक्तिमाह—तेन रूपेणेति । व्याप्यारोपत्वरूपेणेत्यर्थः । स्वरूपसत्या योग्यतायास्तत्र हेतुत्वादिति भावः । ननु 'यद्यतिथिरागच्छेत्स भोजयितव्यः स्यात्' इत्यादावव्याप्तिरित्यत आह—न चेति । तस्येति । संभावनात्मकस्येत्यर्थः । संशयविशेषस्य तस्य

तदयमात्माश्रयान्योन्याश्रयचक्रकानवस्थानिष्टप्रसङ्गभेदेन पञ्चविध इति केचित् । तन्न, आत्माश्रयादीनामप्यनिष्टप्रसङ्गान्तर्भूतत्वात् । तथाहि—स्वस्याव्यवहितस्वापेक्षणमात्माश्रयः । इत्थमापादनमस्य—'यद्ययं घट

तर्कात्मकत्वाभावेन लक्ष्यभिन्नत्वान्नाव्याप्तिरिति भावः । न च सर्वेषां तर्काणां यथार्थत्वादसंभवो लक्षणस्येति वाच्यम् । तर्काणां यथार्थत्वमिति वदता वक्तव्यम्—विपर्ययपर्यवसन्नानां वा ? तदपर्यवसन्नानां वा ? आद्ये विपर्यये पर्यवसानं व्याप्तिग्रहणापेक्षम्; व्याप्तिग्रहणं च तर्कापेक्षम्; सोऽपि विपर्यये पर्यवसित इति चक्रकादिग्रस्तत्वान्न यथार्थत्वम् । न द्वितीयः । तेषां तर्काभासत्वेन सत्तर्कत्वाभावान्न यथार्थत्वमिति दिक् । व्याघाते तर्कलक्षणस्याव्याप्तिमाशङ्क्याह—**एतस्मिन्निति** । संभावनात्मकस्य तर्कभिन्नत्वपक्ष इत्यर्थः । व्याघातस्यालक्ष्यत्वान्नाव्याप्तिरिति भावः ।

स्वाभिमततर्कभेदं वक्ष्यन् मतान्तरसिद्धं तर्कभेदं दूषयितुमुपन्यस्यति—**तदयमिति** । यद्यस्मात्कारणात् तर्कलक्षणं निर्व्यूढं, तस्मात्कारणादित्यर्थः । **अयम्** । तर्कसामान्यलक्षणेन लक्षितस्तर्क इत्यर्थः । तानेव प्रकारान् दर्शयति—**आत्मेति** । सर्वपदार्थप्रधानो द्वन्द्वः । दूषयति—**तन्नेति** । आत्माश्रयादेरनिष्टप्रसङ्ग एवान्तर्भूतत्वान्न पृथक्तर्कत्वमित्याह—**आत्माश्रयेति** । आत्माश्रयादीत्यादिशब्देनान्योन्याश्रयचक्रकानवस्था गृह्यन्ते । आत्माश्रयादीनां चतुर्णामनिष्टप्रसङ्गेऽन्तर्भावं प्रतिपादयिष्यंस्तत्स्वरूपं दर्शयितुं प्रतिजानीते—**तथाहीति** । प्रथममात्माश्रयस्य लक्षणमाह—**स्वस्येति** । **इत्थमिति** । वक्ष्यमाणप्रकारेणेत्यर्थः । **अस्येति** । आत्माश्रयस्येत्यर्थः । आपादनमेव दर्शयति—**यद्ययमिति** । जन्यः स्यादित्युक्ते, एतद्घटपूर्वकालीनघटे व्यभिचारः । तदर्थमुक्तम्-**एतद्घटेति** । तादृशघटे जन्यत्वस्य विद्यमानत्वेऽप्येतद्घटजन्यत्वाभावान्न व्यभिचारः । आपाद्ये कालवृत्तिर्न स्यादित्युक्ते, एतद्घटस्य काले विद्यमानत्वेन बाधः स्यात् । तन्निवृत्तये आद्येति । एवमप्येतद्घटस्य यत्किंचिदपेक्षया आद्यकालवृत्तित्वात्पुनरपि बाधः । तदर्थमुक्तम् एतद्घटेति । ननु विपर्यये पर्यवसायित्वाभावान्नास्यापादनमित्यरुचेराह—[1]**यद्ययमिति** । जनकः स्यादित्युक्ते एतद्घटोत्तरभाविघटादौ

1 'यद्ययं घट एतद्घटजन्यः स्यात् एतद्घटाद्यकालवृत्तिर्न स्यात्' इति तर्कस्य विपर्यये पर्यवसानं न संभवतीत्यरुच्या 'यद्ययं घट एतद्घटजनकः स्यात् एतद्घटपूर्ववर्ती स्यात्' इत्यापा-

एतद्धटजन्यः स्यात्, 'एतद्धटाद्यकालवृत्तिर्न स्यात्' 'यद्ययं घट एतद्धटजनकः स्यात्, एतद्धटनियतपूर्ववर्ती स्यात्' इति । जनकत्वं चान्वयव्यतिरेकावच्छेदकधर्मवत्त्वम् । अतो नापाद्यापादकयोरभेदः ।

व्यभिचारः स्यात्, तस्य स्वनिष्ठरूपादिजनकत्वादेतद्धटाद्यकालवृत्तित्वाभावाच्च । तदर्थमुक्तम्—एतद्धटेति । एतद्धटोत्तरभाविघटादेरेतद्धटजनकत्वाभावान्न व्यभिचारः । आपाद्ये आद्यकालवृत्तिः स्यादित्युक्ते, एतद्धटस्य स्वसमवेतरूपाद्यपेक्षयाद्यकालवृत्तित्वेन सिद्धसाधनता स्यात् । तदर्थमुक्तम्—एतद्धटेति । स्वस्य स्वापेक्षया पूर्वकालवर्तित्वाभावाददोष इति भावः । अत्रान्वये एतद्धटजनकमृत्पिण्डो दृष्टान्तः । व्यतिरेके एतद्धटजन्यरूपादिर्दृष्टान्तः । ततश्च 'एतद्धटः, एतद्धटजनको न भवति ; एतद्धटाद्यकालावृत्तित्वात् एतद्धटजन्यरूपादिवत्' इत्यनुमानं बोध्यम् । अत्राद्यकालावृत्तित्वादित्युक्ते एतद्धटजनकदण्डादौ व्यभिचारः, तत्रापि यत्किंचिदपेक्षयाद्यकालवृत्तित्वस्य सत्त्वात् । तदर्थमुक्तम्—एतद्धटेति । एतद्धटजनकदण्डादेरेतद्धटाद्यकालवृत्तित्वेन तत्र हेत्वगमनान्न व्यभिचारः । दृष्टान्ते एतद्धटजन्येति विशेषणमेतद्धटपूर्वभाविघटान्तरनिष्ठरूपादौ साधनवैकल्यपरिहारायेति बोध्यम् । नन्वेतद्धटजनकः स्यादित्यस्यैतद्धटाद्यकालवृत्तिः स्यादित्यर्थः; ततश्चापाद्यापादकयोरभेद इत्यत आह—जनकत्वं चेति । अनन्यथासिद्धनियतपूर्ववृत्तिजातीयत्वमित्यर्थः । ननु नेदं प्रवृत्त्यौपयिकं लक्षणम्, कार्यपूर्ववर्तित्वस्य कार्यनिरूप्यत्वेन कार्योत्पादात् प्राक् ज्ञानाभावे कार्यार्थिनः प्रवृत्त्यनुपपत्तेः । तदर्थमुक्तं जातीयपदम् । यज्जातीयकार्यं प्रति यज्जातीयं नियतपूर्ववर्ति, तज्जातीयकार्यं प्रति तज्जातीयं कारणमित्यर्थः । अतो न प्रवृत्त्यनुपपत्त्यादिरिति ध्येयम् । ननु--एवमप्याकाशादावव्याप्तिः ।

दनान्तरमिति टीकाकारः । घटाद्यकालेति पदस्य, घटादाद्यकालः घटापेक्षया पूर्वकाल इत्यर्थोऽभिमतः, एतत्प्रकरणे सर्वत्र तत्पूर्वकालरूपार्थे तदाद्यपदस्य टीकायां प्रयोगात् । एवंच एतद्धटाद्यकालवृत्तिर्न स्यादित्युक्ते विपर्ययपर्यवसानं न संभवति । एतद्धटाद्यकालवृत्तित्वस्य विपर्ययस्य एतद्धटेऽभावादित्याशयः । परंतु एतद्धटस्याद्यकालः एतद्धटाद्यकालः । घटाधिकरणकाले आद्यत्वं च स्वाधिकरणकालध्वंसवदन्यत्वम् । तादृशः काल उत्पत्तिक्षणः । तद्वृत्तिर्न स्यादित्यापादानस्यार्थः । अत एव ग्रन्थान्तरेषु, 'यद्ययं घट एतद्धटजन्यः स्यात्, एतद्धटानधिकरणक्षणोत्तरवर्ती न स्यात्' इत्यात्माश्रयापादनप्रकारो दर्शितः । अत्र एतद्धटाद्यकालपदेन एतद्धटानधिकरणक्षणोत्तरकालो विवक्षितः । घटे तादृशकालसंबन्धस्य सत्त्वात् विपर्ययपर्यवसानं संभवत्येवेति बोध्यम् ।

एवमन्योन्याश्रयोऽपि साक्षात्परस्परापेक्षणम् । स चेत्थमापाद्यते— 'यद्ययं दण्ड एतद्दण्डजन्यजन्यः स्यात् , तदैतदुत्पत्तिपूर्वकालवृत्तिर्न स्यात् । यद्वा 'यद्ययं घट एतज्जनकजनकः स्यात्, तदैतद्घटजनकपूर्वकालवृत्तिः स्यात्' इति ।

एवं व्यवस्थिततृतीयकक्ष्यादिपतितस्यापादने चक्रकम् । अनवस्थिततृतीयकक्ष्यादिपतितस्यापादनेऽनवस्था । तत्सर्वमनिष्टमेवेत्यनिष्टप्रसङ्ग एवान्तर्भवति ।

अन्ये तु—आत्माश्रयान्योन्याश्रयचक्रकानवस्थाव्याघातप्रतिबन्दि-भेदात् षट् तर्का इति वदन्ति । तदपि न, व्याघातस्य विरोधविशेषत्वात् ;

तस्यैकव्यक्तित्वेन तत्र जातेरभावान्न तज्जातीयत्वेन कारणत्वम् । न च जातिपदमजहत्स्वार्थलक्षणया कारणतावच्छेदकजात्युपाधिपरम् ; अतो नाकाशादावव्याप्तिरिति वाच्यम् , उपाधेरपि तदवच्छेदकस्याभावात्—इति चेत् ; न, [1]सत्समवायिकारणत्वस्यैव तत्त्वादिति । न त्वेतदाद्यकालवृत्तित्वमात्रं, येनोक्तदोषः स्यादिति दिक् ।

आत्माश्रयस्य लक्षणोदाहरणे दर्शयित्वान्योन्याश्रयस्य लक्षणोदाहरणे दर्शयति —एवमिति । साक्षादिति । साक्षात् परापेक्षितस्य स्वस्य परापेक्षणमित्यर्थः । यद्ययमिति । अस्मिंस्तर्के आत्माश्रयस्योदाहृतप्रथमतर्कवद्विशेषणकृत्यं ज्ञेयम् । [2]अत्रापि पूर्वोक्तास्वरसात्तर्कान्तरं ज्ञेयम् । तथाहि—'यद्ययं दण्ड एतद्दण्डजनकः स्यात् , एतद्दण्डाद्यकालवृत्तिः स्यात् , एतद्दण्डावयववत् ' इति । अन्यत्सर्वं पूर्ववदिति भावः ।

व्यवस्थितत्वाव्यवस्थितत्वाभ्यां चक्रकानवस्थयोर्भेदं दर्शयति—एवमिति । तत्सर्वमिति । उदाहृतात्माश्रयादिचतुष्टयमित्यर्थः । अनिष्टप्रसङ्ग इति सप्तम्यन्तम् । एवकार आत्माश्रयादिचतुष्टयस्य तर्कान्तरत्वनिरासार्थ इति दिक् ।

मतान्तरमपि दूषयितुमुपन्यस्यति—अन्ये त्विति । दूषयति—तदपीति । व्याघातस्येति अतर्कत्वमित्यादिना संबध्यते । अनैकान्तिकेति । असाधारणानैकान्ति-

1 सत्समवायिकारणत्वस्यैव तत्त्वादिति । सतः सत्ताजातिमतः शब्दस्य समवायिकारणत्वस्यैवावच्छेदकत्वादित्यर्थः ।

2 अत्रापि पूर्वोक्तास्वरसात्तर्कान्तरं ज्ञेयमिति । अत्र वक्तव्यं पूर्वमेवोक्तप्रायम् ।

प्रतिबन्धास्त्वव्यापकतादोषतुल्यतयानैकान्तिकाद्यन्तर्भावादतर्कत्वमेव । व्याप्त्यभावे तत्र प्रशिथिलमूलतया तर्काभासत्वं वा । उभयथापि न सत्तर्कान्तर्भावः ; अनिष्टप्रसङ्गस्याकथनाद्विभागन्यूनता चेति ।

अत्रोच्यते—आत्माश्रयान्योन्याश्रयचक्रकानवस्थातदितरप्रकारभेदेन पञ्चविधत्वमेव ।

ननु — तथाप्यन्योन्याश्रयचक्रकयोरात्माश्रयसंकीर्णत्वादुदाहरणत्रैविध्यमयुक्तम् ; न, उपाधिभेदापादनप्रकारभेदाभ्यां भेदात् । तथाप्यात्माश्रयस्य व्यापकत्वात्तदेवोद्भावयितुमुचितमिति चेत्; न, पुरःस्फूर्तिकत्वादन्योन्याश्रयचक्रकयोरेवोद्भावनात् । तदयमुत्पत्तौ स्थितौ ज्ञप्तौ चेति । तत्रोत्पत्तावुक्तमेव । स्थितावुच्यते—'यदीदं रूपमेतद्रूपाधिकरणं स्यात्, तदैतद्घटः

काद्यन्तर्भावादित्यर्थः । अतर्कत्वमिति । तर्कभिन्नत्वमित्यर्थः । ननु व्याघातप्रतिबन्ध्योर्व्याप्त्यभावमात्रेण कथमतर्कत्वमित्याशङ्क्याह—व्याप्त्यभाव इति । निगदव्याख्यातमन्यत् ।

सिद्धान्तं वक्तुं प्रतिजानीते—अत्रोच्यत इति । आत्माश्रयेति । सर्वपदार्थप्रधानो द्वन्द्वः । आत्माश्रयश्च, अन्योन्याश्रयश्च, चक्रकं च, अनवस्था च, तदितरप्रकारश्च तर्कचतुष्टयान्यः, तेषां भेदेन । पञ्चविधत्वमेवेति । एवकारो न्यूनाधिकसंख्याव्यवच्छेदपरः । तर्कस्येति शेषः ।

ननु चक्रकान्योन्याश्रययोरसंकीर्णोदाहरणाभावान्न पृथक्तर्कत्वम् । किं त्वात्माश्रयेऽन्तर्भावः, संकीर्णोदाहरणत्वादित्याशङ्कते—नन्विति । परिहरति —नेति । उपाधिभेदेति । अन्योन्याश्रयत्वचक्रकत्वात्माश्रयत्वोपाधिभेदापादनप्रकारभेदाभ्यामित्यर्थः । अयमाशयः—यथा सव्यभिचारविरुद्धबाधानामुपाधेयानां संकरेऽप्युपाधीनां सव्यभिचारत्वविरुद्धत्वबाधत्वानामसंकराद्भेदः, तथात्राप्यन्योन्याश्रयादीनामुपाधेयानां संकरेऽप्यन्योन्याश्रयत्वादीनामुपधीनामसंकराद्भेदो युज्यत इति । नन्वेवमप्यात्माश्रयस्यान्योन्याश्रयापेक्षयाधिकवृत्तित्वात्तदुद्भावनमेवोचितमिति शङ्कते — तथापीति । आत्माश्रयस्य व्यापकत्वेऽप्यन्योन्याश्रयचक्रकयोर्व्याप्यत्वेन पुरः स्फूर्तिकत्वात्तदुद्भावनमन्तरेण न व्यापकोद्भावनमित्यभिप्रायेण परिहरति—नेति । अन्योन्याश्रयादिरुत्पत्तिमात्रे वा, स्थितिमात्रे वा, ज्ञप्तिमात्रे वा, उत्पत्तिस्थितिज्ञप्तिषु प्रत्येकमनियमेन वेति संदेहे निर्णयमाह—तदयमिति । यस्मात्कारणादन्योन्याश्रयादीनां

स्यात्' इति। ज्ञप्तेश्चोत्पत्तितुल्यतैव। तथाहि—'यदि घटैतज्ज्ञानं घटैतज्ज्ञानजन्यं स्यात्, तदा घटैतज्ज्ञानोत्पत्तिकालोत्पत्तिकं न स्यात्' इति। एवमन्योन्याश्रयचक्रके ज्ञातव्ये।

नन्वनवस्था कथमापाद्यते? तथाहि—यदि सामान्यं सामान्यवत् स्यात्, तदानवस्था स्यादित्यनवस्थानन्त्यम्। तत्किं सकलदेशसंबन्धित्वं वा? सकलकालसंबन्धित्वं वा? अपरिमितत्वं वा? असंख्यत्वं वा? आद्ये इष्टापत्तिः; व्याप्तेरभावात्प्रशिथिलमूलत्वम्। द्वितीयतृतीययोरिष्टापत्ति-

भेदो दर्शितः, तस्मात्कारणादित्यर्थः। **उक्तमेवेति**। यद्ययं घट एतद्घटजन्यः स्यादित्यादिग्रन्थेष्वित्यर्थः। तत्रैवानुसंधेयं ग्रन्थविस्तरभयादिति भावः। **स्थिताविति**। अन्योन्याश्रयादेरापादनमिति शेषः। **इदं रूपमिति**। एतद्घटनिष्ठरूपमित्यर्थः। **एतद्रूपाधिकरणमिति**। एतद्घटनिष्ठरूपाधिकरणमित्यर्थः। **स्याद्यदीति** योजना। **एतद्घटः स्यात्**। अत्रैतद्रूपाधिकरणैतद्घटो दृष्टान्तः। अधिकरणं स्यादित्युक्ते गन्धादौ व्यभिचारः, गन्धत्वाधिकरणत्वस्य तत्र सत्त्वात्। एतद्घटस्वभावत्वाभावेन साध्याभावाच्च। तदर्थमुक्तमेतद्रूपेति। गन्धादेर्गन्धत्वाश्रयत्वेऽप्येतद्रूपाधिकरणत्वाभावेन हेत्वगमनान्न व्यभिचारः। समवायसंबन्धेनैतद्रूपाधिकरणत्वं विवक्षितम्। अन्यथा जगदाधारताध्यक्षत्वलक्षणसंबन्धेन कालादेरेतद्रूपाधिकरणत्वाद्व्यभिचारः स्यादिति विपर्यये पर्यवसानम्। [1]'इदं रूपमेतद्रूपाधिकरणं न भवति, एतद्घटभिन्नत्वात् पटवत्' इत्यनुमानं बोध्यम्। ज्ञप्त्यात्माश्रयस्यापादनमुत्पत्त्यापादनवदवगन्तव्यमित्याह—**ज्ञप्तेश्चेति**। तौल्यमेव दर्शयति—**तथाहीति**। **स्यादिति**। स्याद्यदीत्यन्वयः। **तदेति**। तज्ज्ञानस्य घटज्ञानस्य या उत्पत्तिस्तस्याः काले उत्पत्तिर्यस्य तदित्यन्वयः। अवर्ज्यो बहुव्रीहिः। पूर्वोक्ततर्कादिवद्विशेषणकृत्यं ज्ञेयमिति दिक्। **एवमिति**। उक्तप्रकारेणेत्यर्थः।

नन्वनवस्थायास्तर्कत्वं न संभवति, आपाद्यस्यानिष्टत्वाभावात्, विकल्पासहत्वेन दुर्निरूपत्वाच्चेति शङ्कते—**नन्विति**। **कथमिति**। किंशब्दो निषेधपरः। अनवस्थापादनमेवोपपादयितुं न शक्यत इत्यर्थः। **सामान्यमिति**। नित्यमेकमनेकानुगत-

1 इदं रूपमेतद्रूपाधिकरणं यदि स्यादिति तर्कस्यानुग्राह्यमनुमानं दर्शयति—इदं रूपमेतद्रूपाधिकरणं न भवति, एतद्घटभिन्नत्वात् पटवदिति।

प्रशिथिलमूलत्वे । चतुर्थे असंख्यत्वं संख्यानधिकरणत्वं वा ? तथाविधा-
पेक्षा बुद्धिविषयत्वं वा ? प्रथमे इष्टापत्तिप्रशिथिलमूलत्वे । द्वितीये सर्वस्य,
तदितरस्य वा ? आद्ये बाधः । द्वितीये व्याप्तेरभावात्प्रशिथिलमूलत्वम् ।
तथा समवायोयदि समवायवान् स्यादनवस्था स्यादित्यादावप्यवगन्तव्यमिति
कथमनवस्थापादानम् ?

मित्यर्थः । अत्रेदं चिन्त्यम्, अनेकत्वानिरुक्तेः । किमनेकत्वसंख्याविशिष्टेषु समवेतत्वम् ? किं वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वम् ? उत स्वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वम् ? न तावदाद्यः, गुणकर्मवृत्तिसामान्ययोरव्याप्तेः, गुणकर्मणोरद्रव्यत्वेन संख्यानधिकरणत्वात् । नापि द्वितीयः; नित्येषु विशेषेपु परमाणुरूपादिषु चातिव्याप्तेः; तेषामपि यत्किंचिदाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वात् । नापि तृतीयः, स्वशब्देन जातिविवक्षायामात्माश्रयत्वप्रसङ्गात् । [1] तस्मादनेकानुगतत्वं दुर्निरूपमिति । नन्वनुवृत्तिप्रत्ययकारणम्, अनुवृत्तिप्रत्ययप्रमाणकं वा सामान्यमिति चेत्; मैवम् । आद्ये सामग्र्यां तदेकदेशेषु चातिव्याप्तिः, तेषामप्यनुवृत्तिप्रत्ययकारणत्वात् । द्वितीयेऽनुवृत्तिप्रत्ययकारणेऽतिव्याप्तिः, अनुवृत्तिप्रत्ययस्यापि स्वकारणानुमापकतया तत्कारणस्यापि तत्प्रमाणकत्वात् । यत्त्वनुवृत्तं सामान्यमिति, तत्तुच्छम्; संयोगादावतिव्याप्तेः; तत्राप्यनुवृत्तत्वस्य सत्त्वात् । यदपि नित्यत्वे सत्यनुवृत्तत्वमिमि; तदपि तुच्छतमम्, नित्येष्वनेककार्यानुवृत्तेषु परमाणुष्वतिव्याप्तेः । तस्मात् सामान्यं दुर्निरूपमिति दिक् । अस्तु वा यत्किंचिदविचारितरमणीयं सामान्यम्; तथापि सामान्यवत्स्यात् बाधकाभावात् । न चानवस्थानन्त्यरूपबाधकसत्त्वात्कथं बाधकाभाव इति वाच्यम्, [2]अनवस्थानन्त्यस्य विकल्पासहत्वेन दुर्निरूपत्वादित्याह—तदिति । व्याप्तेरभावा-

1 अनेकानुगतत्वं दुर्निरूपमिति । स्वप्रतियोगिसमवेतत्वस्वाश्रयसमवेतत्वोभयसंबन्धेन भेदविशिष्टत्वमनेकसमवेतत्वम् । स्वत्वं केवलं परिचायकम् । सामान्याश्रयैकव्यक्तिभेदमादाय भेदवैशिष्ट्यं सामान्ये संगमयितुं शक्यत इति वदन्ति ।

अनुवृत्तिप्रत्ययकारणमिति । तादृशप्रत्यये विषयविधया सामान्यस्य कारणत्वमिति भावः ।

तत्कारणस्यापि तत्प्रमाणकत्वादिति । धूमेन कार्येण वह्निरिव, अनुवृत्तिप्रत्ययेन कार्येण लिङ्गेन तत्कारणमनुमीयते । ज्ञायमानलिङ्गस्यानुमितिकारणत्वे लिङ्गमनुमानप्रमाणमित्यनुवृत्तिप्रत्ययप्रमाणकत्वं तत्कारणस्येति भावः ।

2 अनवस्थानन्त्यस्येति । अनवस्थारूपानन्त्यस्येत्यर्थः ।

**उच्यते—यदि जातिर्जातिमती स्यात्, द्रव्यादित्रयान्नातिरिच्येत। एवं यदि समवायः समवायवान् स्यात्, द्रव्यादिपञ्चकान्यतमः स्यादित्य-**

**दिति।** दृष्टान्ताभावादिति भावः। **प्रशिथिलमूलत्वमिति।** अनवस्थायास्तर्काभासत्वेन न सत्तर्कत्वमिति भावः। **चतुर्थ इति।** असंख्यत्वपक्ष इत्यर्थः। असंख्यत्वं दुर्निरूपम्, विकल्पासहत्वादित्याह—**असंख्यत्वमिति। प्रथम इति।** संख्यानधिकरणत्वपक्ष इत्यर्थः। **आद्य इति।** सर्वस्य तथाविधापेक्षाबुद्धिविषयत्वपक्ष इत्यर्थः। अनवस्थापक्षोक्तदूषणं समवाये द्रष्टव्यमित्याह—**तथा समवाय इति।**

निरुक्तानुपपत्त्यनवकाशपुरःसरं सिद्धान्तं वक्ष्यन् प्रतिजानीते—**उच्यत इति। द्रव्यादीति।** आदिशब्देन गुणकर्मणोर्ग्रहणम्, तेषामेव जातिमत्त्वादिति भावः। द्रव्यादित्रयादतिरिच्यते जातिः। अतो न जातिमतीति विपर्यये पर्यवसानं ग्राह्यम्। [1]ततश्च 'जातिर्जातिमती न भवति, द्रव्यगुणकर्मभिन्नत्वात् विशेषवत्' इत्यनुमानं बोध्यम्। द्रव्यगुणकर्मस्तु व्यभिचारवारणार्थं द्रव्यगुणकर्मभिन्नेति विशेषणं क्रमेण द्रष्टव्यम्। अनवस्थाद्युन्नयनप्रकारं समवाये दर्शयति—**यदीति। समवाय इति।** नित्यसंबन्ध इत्यर्थः।

अत्रापीदं चिन्त्यम्—नित्यसंबन्धत्वं न समवायस्य लक्षणम्, स्वरूपसंबन्धेऽतिव्याप्तेः। न च स्वरूपसंबन्धोऽनित्यः, प्रतियोगिनोऽनित्यत्वादिति वाच्यम्; नित्यप्रतियोगिकविशेषणविशेष्यभावेऽतिव्याप्तेः। प्रतियोगिनोऽनित्यत्वेन संबन्धानित्यत्वप्रतिपादनस्य समवायेऽपि समानत्वाच्च। यत्तु भावरूपत्वे सति नित्यसंबन्धत्वं तल्लक्षणम्; अतो नोक्तदोष इति। तत्तुच्छम्। परमते अजसंयोगेऽतिव्याप्तेः। न च स एव नास्ति प्रमाणाभावादिति वाच्यम्, 'आकाशमात्मना संयुज्यते, संयोगित्वात् घटवत्' इत्यनुमानस्य तत्र मानत्वात्। न च क्रियावत्त्वं मूर्तत्वं वात्रोपाधिरिति वाच्यम्, उपाधिव्यतिरेकेण साध्यव्यतिरेके प्रसाध्यमानेऽजसंयोगित्वस्योपाधित्वात्। किंचाकाशमात्मना संयुज्यत इत्यत्रात्मनि संबन्धाधार इत्यर्थकरणे क्रियावत्त्वमूर्तत्वयोरुपाधितैव नास्ति, आत्मनि साध्याव्याप्तेः। तस्मादुक्तयुक्त्या नित्यसंबन्धत्वं न समवायस्य लक्षणमिति दिक्। **द्रव्यादीति।** आदिशब्देन गुणकर्मसामान्यविशेषा गृह्यन्ते।

1 विपर्यये पर्यवसानमनुमानमुखेन दर्शयति—ततश्चेति।

[1]तत्र गुणात्यन्ताभावविरोधिधर्मवत् द्रव्यम् । विरोधित्वं सहानवस्थायित्वम् । तच्च प्रागभावानां प्रध्वंसानां गुणानां चेति नाद्यक्षणेऽव्याप्तिः । अत एव गुणात्यन्ताभावे नातिव्याप्तिः, उक्तत्रयान्यतमत्वाभावात् । यद्वा समवायिकारणतावच्छेदकधर्मवत्त्वं तल्लक्षणमिति ।

सामान्यवानसमवायिकारणमस्पन्दात्मा गुणः । अस्पन्दात्मा गुण इत्युक्ते सामान्येऽतिव्याप्तिः । तदर्थमुक्तं सामान्यवानिति । सामान्यवान् गुण इत्युक्ते द्रव्येऽतिव्याप्तिः । तदर्थमसमवायिकारणमिति । तावत्युक्ते कर्मण्यतिव्याप्तिः । तत्परिहारार्थमस्पन्दात्मेति । नन्वसमवायिकारणत्वं सामान्यादेः सर्वथा न संभवतीति तत एव तद्व्युदाससंभवे सामान्येति पदं व्यर्थमिति चेत्, लाघवेनासमवायिकारणपदस्य समवायिकारणभिन्नमित्यस्यैवार्थस्य विवक्षितत्वात् । यद्वा गुणत्वजातिमान् गुण इति बोध्यम् ।

न तावत्संयोगविभागयोरनपेक्षकारणं कर्मेति कर्मलक्षणम्, असंभवित्वात् । समसायिकारणेच्छादेशकालाद्यपेक्षणात् । न च—पश्चाद्भावि निमित्तं नापेक्षते कर्म । तेन चेश्वरेच्छासमवायिकारणादयो व्यावर्त्यन्ते ; तेषां पूर्वभावितया पश्चाद्भावित्वाभावादिति वाच्यम् । उत्तरसंयोगे कर्तव्ये पश्चाद्भाविन्याः पूर्वसंयोगनिवृत्तेरपेक्ष्यमाणत्वात् । न च पश्चाद्भावि भावरूपं निमित्तं नापेक्ष्यत इति वाच्यम्, पूर्वसंयोगनिवृत्तिक्षणस्य भावस्यैव पश्चाद्भाविनोऽप्यपेक्षणात् । यत्तु यदनन्तरं संयोगविभागयोरुत्पत्तिस्तत्कर्मेति । तत्तुच्छम्, संयोगविभागसामग्र्यामपि तत्संभवेनातिव्याप्तेः । न च कर्मैव सामग्रीति वाच्यम्, तथा सति विभागोत्पत्तिसमय एव पूर्वसंयोगनिवृत्तेरुत्तरसंयोगस्य चोत्पत्तिप्रसङ्गात् ; सत्यां सामग्र्यां कार्यविलम्बायोगात् । तस्मान्नेदं लक्षणं घटते । तदुक्तं खण्डने—

1 गुणवत्त्वं द्रव्यस्य लक्षणमित्युक्तौ, उत्पन्नं द्रव्यं क्षणमगुणमक्रियं च तिष्ठतीति न्यायेनाद्यक्षणावच्छिन्नघटादौ गुणवत्त्वाभावादव्याप्तिः । अतो गुणात्यन्ताभावविरोधिधर्मवत्त्वमित्युक्तम् । ध्वंसप्रागभावयोरत्यन्ताभावविरोधितास्वीकारेण प्रागभावमादायाद्यक्षणावच्छिन्नघटादौ लक्षणसमन्वयः । ध्वंसप्रागभावयोरत्यन्ताभावविरोधिता नेति नव्यमतानुसारेणाह—यद्वेति । अस्पन्दात्मा स्पन्दस्वरूपभिन्नः ; कर्मभिन्न इत्यर्थः ।

[1]" यथाश्रुतेऽसंभवित्वान्निरुक्तेरप्ययुक्तितः ।
नानपेक्षतया हेतुः कर्म योगविभागयोः ॥ "

इति ।

अन्ये तु—संयोगविभागयोरसमवायिकारणं कर्म । [2]न च संयोगविभागयोरतिव्याप्तिरिति वाच्यम्, प्रकृतोभयकारणत्वस्यैव विवक्षितत्वात्; तयोरेकैककारणत्वेऽप्युभयकारणत्वाभावान्नातिव्याप्तिरित्याहुः । वस्तुतस्तु—कर्मत्वजातियोगि कर्मेति लक्षणं बोध्यम् ।

अनुवृत्तिप्रत्ययहेतुः सामान्यम् । हेतुत्वं विषयतया विवक्षितमिति [3]न पूर्वोक्तदोषावकाश इति ध्येयम् ।

नित्येष्वेव द्रव्येषु ये वर्तन्ते, ते विशेषा इति लक्षणम् । न चात्मत्वमनस्त्वयोरतिव्याप्तिरिति वाच्यम्, सकलनित्यद्रव्यवृत्तित्वस्य विवक्षितत्वात् । तयोः कालाकाशादिषु नित्येष्वसत्त्वान्नोक्तदोष इत्याहुः । अत्रेदं चिन्त्यम्—प्रतिविशेषमव्याप्तिः, सर्वेषां विशेषाणां सर्वत्राभावात् । न च यज्जातीय एवं, स विशेष इति लक्षणार्थ इति वाच्यम्; विशेषत्वजातेरनङ्गीकारात् । न चोपाधेर्विवक्षितत्वान्नोक्तदोष इति वाच्यम्, तदुपाधिसिद्धौ तदुपजीविनो लक्षणस्य वैयर्थ्यापातात् । असिद्धौ च लक्षणस्य दुरवधारणत्वादिति वयमालोचयामः ।

इष्टापत्तिरित्याशङ्क्याह—अङ्गीकृतेति । अङ्गीकृतं यद्भावषट्कं द्रव्यादिकं पूर्वोक्तं, तद्भङ्गरूपा तत्त्यागस्वभावेत्यर्थः । अव्यवस्थेति छेदः । तथाचापसिद्धान्त-

1 यथाश्रुतेऽसंभवित्वादिति । योगविभागयोः संयोगविभागयोरनपेक्षतया हेतुः कर्म न । संयोगविभागेष्वनपेक्षकारणं कर्मेति वैशेषिकोक्तलक्षणं न युक्तम् । यथाश्रुतार्थविवक्षायामसंभवः । देशकालाद्यपेक्षयैव कर्मणा संयोगादिजननेनानपेक्षकारणत्वनिरुक्तिरप्ययुक्ता । पूर्वसंयोगनिवृत्तिक्षणस्यापेक्षणादिति कारिकार्थः ।

2 न च संयोगविभागयोरतिव्याप्तिरिति वाच्यमिति । कारणाकारणसंयोगात्कार्याकार्यसंयोगो जायते । हस्तपुस्तकसंयोगात्कायपुस्तकसंयोगो जायते । कायपुस्तकसंयोगे हस्तपुस्तकसंयोगोऽसमवायिकारणम् । एवं कायपुस्तकविभागे हस्तपुस्तकविभागोऽसमवायिकारणमिति भावः ।

3 न पूर्वोक्तदोषावकाश इति । अनुवृत्तिप्रत्ययहेतुत्वस्य तादृशप्रत्ययसामग्र्यां तदेकदेशे चातिव्याप्तिरूपदोषानवकाश इत्यर्थः ।

ङ्गीकृतभावषट्कभङ्गरूपाव्यवस्थैवानवस्था स्वीकर्तव्या । अधिकाधिकजातिष्वपि सामान्येनैव रूपेणापादनादनवस्थाव्यपदेशः । एवमन्यत्राप्यूह्यम् । ये त्वन्ये तर्कविशेषाः, ते सर्वे तदितरप्रकारभेदेन संगृहीताः ।

व्याघातोऽपि तदितरप्रकारान्तर्भूतस्तर्कोऽवगन्तव्यः । यद्वा व्याघातो विरोध एवान्तर्भवतु । तथापि न काचित्क्षतिः । तत्र स्वस्य स्वापेक्षणे बाधकस्तर्क आत्माश्रयः । अन्योन्यापेक्षणे बाधकस्तर्कोऽन्योन्याश्रयः । अपेक्षणपूर्वकापेक्षणान्तरितव्यवस्थितापेक्षणे बाधकस्तर्कश्चक्रकम् । एतादृशाव्यवस्थितापेक्षणे बाधकस्तर्कोऽनवस्था । एतत्तर्कचतुष्टयान्यस्तर्कस्तदितरप्रकार इति संक्षेपः ।

ये त्वन्येऽविनिगमोत्सर्गकल्पनागौरवकल्पनालाघवाख्यास्ते तर्कलक्षणाभावात् तर्का एव न भवन्ति । तेषु तर्कव्यपदेशस्तु यथाकथंचित्साधर्म्येण ।

प्रसङ्ग इति भावः । कार्यकारणभावादिमूलानां केषांचित्तर्काणां विद्यमानत्वात्कथं तर्कपाञ्चविध्यं युज्यत इत्याशङ्क्य तेषां तदितरप्रकारभेदेऽन्तर्भाव इत्याह—**ये त्विति** । **तदितरप्रकारभेदेनेति** । उक्ततर्कचतुष्टयान्यत्वप्रकारेणेत्यर्थः ।

ननु तर्कः पञ्चविध इति कथम् ? तदतिरिक्तस्य व्याघातस्यापि विद्यमानत्वादित्यत आह—**व्याघातोऽपीति** । सहानवस्थितिसमुच्चयज्ञानमात्रं व्याघात इति पक्षमाश्रित्योक्तं पूर्वम् । इदानीं व्याघातो विरोधविशेषः, स च तर्क एवेत्याह—**यद्वेति** । **न काचित्क्षतिरिति** । न विभागभङ्गरूपक्षतिरित्यर्थः । अन्योन्याश्रयादीनामसंकीर्णोदाहरणाभावादात्माश्रयेऽन्तर्भाव इत्याशङ्क्योपाधिभेदाद्भेद इत्याह — **तत्रेत्यादिना तदितरप्रकार** इत्यन्तेन ग्रन्थेन । उपाधिभेदापादनेत्यादिग्रन्थेन प्रागेव भेदस्य दर्शितत्वात्पुनस्तत्कथनमनुपपन्नमित्याशङ्क्य विसरणशीलं प्रति ' मा विसार्षीः ' इत्युक्तमित्यभिप्रायेणाह—**संक्षेप इति** ।

नन्वविनिगमोत्सर्गादीनां चतुर्णां तर्काणामपि विद्यमानत्वात्कथं तर्कपाञ्चविध्यं युज्यत इत्याशङ्क्याह—**ये त्वन्य इति** । अविनिगमश्चोत्सर्गश्च कल्पनागौरवं च कल्पनालाघवं च तानि, तदाख्यास्तन्नामधेया इत्यर्थः । वर्तन्त इति शेषः । **त इति** । अविनिगमादय इत्यर्थः । ते तर्का एव न भवन्तीति योजना । तत्र हेतुमाह—

तथाहि—विकल्पेनान्वययोग्ये तदेकार्थान्वयनियमनिर्धारणाशक्यत्वमविनिगमः। तत्र शक्तिः स्वरूपं वा, सहकारिसाहित्यं वा, पदार्थान्तरं वा। न चैषामन्यतमाभावोऽपि तर्कः, व्याप्यारोपेण व्यापकारोपताविरहात्। कथमसौ दोषत्वेनोपवर्ण्यत इति चेत्; निर्धारणाभावरूपतयेति ब्रूमः। तत्रानिर्धारणात्मकत्वादेवाविनिगमः।

ननु—अनिर्धारणात्मकत्वमविनिगमस्य न युज्यते। तथाहि—'अनयोरेकं प्रयोजकम्' इत्यन्यतरत्वेन निर्धारणात्। विशेषतो न निर्धार्यत इति चेत्; न, तस्याप्रयोजकत्वात्। वह्निव्यक्तिविशेषानिर्धारणवद्विशेषग्राहकमानाभावेनान्यतरत्वज्ञानमेव शिथिलायत इति चेत्; न, स्वप्रमाणाभावस्य व्यभिचारित्वात्; सर्वप्रमाणाभावस्यासिद्धेः, योग्यप्रमाणाभावस्यापि तथात्वात्। तत्कथमिदं दूषणमिति।

**तर्कलक्षणाभावादिति**। तर्कलक्षणाक्रान्तत्वाभावादित्यर्थः। यदि तर्कलक्षणाक्रान्तत्वाभावेन तर्कत्वाभावः, तर्हि तेषु सर्वजनीनः तर्कव्यपदेशो भज्येतेत्याशङ्क्याह—**तेषु तर्कव्यपदेशस्त्विति**। तर्कव्यवहार इत्यर्थः। **साधर्म्येणेति**। [1]सादृश्येनेत्यर्थः। युज्यत इति शेषः। यथा सादृश्यादिदमि रजतव्यपदेशः; यथा वा रज्ज्वादौ सर्पव्यपदेशः, तथात्रापीति भावः। अविनिगमस्वरूपाज्ञाने तर्कभिन्नत्वमपि ज्ञातुं न शक्यत इति तल्लक्षणमाह—**विकल्पेनेति**। अविनिगमलक्षणान्तर्गतशक्तिपदार्थं विवेचयति—**तत्रेति**। एतेषामन्यतमाभावस्तर्कोऽस्त्वित्याशङ्क्य तल्लक्षणाक्रान्तत्वाभावादित्याह—**न चैषामिति**। शङ्कते—**कथमिति**। **असाविति**। अविनिगम इत्यर्थः। उत्तरयति—**निर्धारणेति**।

'अनयोर्मध्ये एकं प्रयोजकं भविष्यति' इत्यन्यतरत्वेन निर्धारणसंभवादनिर्धारणत्वं नोपपद्यत इति शङ्कते—**नन्विति**। ननु सामान्याकारेण तादृशज्ञानसंभवेऽपि विशेषाकारेण तदभावादनिर्धारणत्वं युक्तमित्याशङ्कते—**विशेषत इति**। **तस्येति**। विशेषाकारेण निर्धारणस्येत्यर्थः। **वह्नीति**। व्याप्तिग्रहणसमय इति शेषः। परिहरति—**नेति**। विशेषग्राहकप्रमाणाभावादिति वदता वक्तव्यम्—किं स्वप्रमाणा-

1 सादृश्येनेत्यर्थ इति। प्रमाणसहकारित्वेन तर्कसादृश्यं बोध्यम्। इदमि; इदंपदार्थे पुरोवर्तिनीति यावत्।

अत्रोच्यते—अन्यतरत्वावधारणं सामान्यावधारणमिदम् । न तु विशेषावधारणम् । विशेषावधारणोद्यतं प्रतीदमविनिगमात्मकं दूषणमुच्यते । वह्न्यनुमानेऽपि यस्तार्णादिविशेषमवधारयितुमुद्यतो वह्निमात्रमवधारयति, तं प्रतीदं दूषणं भवत्येव 'विशेषो न विधारयितुं शक्यते' इति । एवमुत्सर्गोऽपि न तर्कात्मकः । अभावोपाधिकत्वं ह्युत्सर्गः । यथा ज्ञानविशेषस्य प्रमात्वमौत्सर्गिकम्, बाधहेतुदोषाभावोपाधिकत्वात् । तदेव सांसिद्धिकमित्युच्यते । यथा जलस्य द्रवत्वं करकादिजनककारणाभावोपाधिकं तत् । एतदभिप्रायेणौत्सर्गिकं ज्ञानानां प्रामाण्यं बाधकादपोद्यत इति स्वतःप्रामाण्यवादिनो वदन्ति । यद्वाधिककोटिसंशय एवोत्सर्गः । उभयथापि न तर्कत्वमस्य संभवति । न बहुदृष्टमुपेक्ष्याबहुदृष्टस्याभ्युपगमार्हता । अर्हत्वेऽपि

भावो वा ? सर्वप्रमाणाभावो वा ? योग्यप्रमाणाभावो वा ? इति विकल्प्याद्यं कल्पं निराचष्टे—स्वप्रमाणाभावस्येति । न द्वितीय इत्याह—सर्वेति । न तृतीय इत्याह—योग्येति ।

स्वसिद्धान्तरहस्यं वक्तुं प्रतिजानीते—अत्रोच्यत इति । विशेषावधारणोद्यतं प्रत्यविनिगमात्मकं दूषणमुच्यते ; न सामान्यावधारणोद्यतं प्रति, येनास्य दोषाभावत्वं स्यादित्याह—अन्यतरत्वेति । प्रसिद्धानुमानेऽपि दशाविशेषेऽविनिगमात्मकं दूषणं संभवतीत्याह—वह्न्यनुमानेऽपीति । उक्तन्यायमन्यत्राप्यतिदिशति—एवमिति । यथा ह्यविनिगमो न तर्कात्मकः, तथोत्सर्गोऽपि न तर्कात्मक इत्येवंशब्दार्थः । उत्सर्गस्य तर्कात्मकत्वाभावे किमात्मकत्वं स्यादित्याशङ्कमानं प्रत्याह—अभावेति । तदेव दर्शयति—यथेति । प्रमात्वमिति । तद्वति तत्प्रकारकानुभवत्वमित्यर्थः । औत्सर्गिकमिति । सामान्यतः प्राप्तमित्यर्थः । स्वाभाविकमिति भावः । एतदभिप्रायेणेति । बाधकहेतुदोषाभावोपाधिकत्वाभिप्रायेणेत्यर्थः । स्वतःप्रामाण्यवादिन इति । भट्टाचार्यप्रभृतय इत्यर्थः । निगदव्याख्यातमन्यत् । पूर्वमुत्सर्गस्याभावोपाधिकत्वमङ्गीकृत्य तर्कभिन्नत्वमुक्तम् । इदानीमधिककोटिकसंशयात्मकत्वमुत्सर्गस्येति तर्कभिन्नत्वमित्याह—यद्वेति । उभयथापीति । अभावोपाधिकत्वसंशयात्मकत्वान्यतरत्वेऽपीत्यर्थः । अविनिगमादिवत् कल्पनागौरवस्यापि तर्कभिन्नत्वं प्रतिपादयितुं तल्लक्षणमाह—न बहुदृष्ट इति । तदपीति । कल्पनागौरवमपीत्यर्थः । तत्र हेतुमाह—

तद्विपरीतापरिच्छेदः कल्पनागौरवम् । तदपि न तर्केऽन्तर्भवति, परिच्छेदाभावरूपत्वात् । एवं कल्पनालाघवमपि । तद्वैपरीत्यमेव तु दूषणम्; यथा क्षित्यादिकर्तुरेकत्वम् ।

यत्तु खण्डनकृतानौचित्यं तर्कान्तरं व्युत्पादितं, तस्यानौचित्यमेव । तथाहि—अर्थान्तरमर्थान्तरेण परिहरतो नान्यन्निग्रहस्थानमस्तीत्यनौचित्यातिरिक्तं किमन्यद्वक्तव्यमित्यनौचित्याख्यतर्काङ्गीकरणम् । तथानौचित्यमनौचित्यान्तरेण परिहरतः कथं दूषणमभिधातव्यम्? अनौचित्यमेवेति चेत्, तुल्यमर्थान्तरेऽपि । भवतु वा निग्रहस्थानान्तरमनौचित्यम्; तर्कत्वं पुनरस्य कुतः?

## तर्काभासनिरूपणम्

इदानीं तर्काभासो निरूप्यते । तत्रात्माश्रयस्य प्रकारभेदात् । स च प्रकारोऽन्यवृत्तित्वे सति स्ववृत्तित्वादिलक्षणव्याघातादुन्नीयते । यथाभिधेयत्वेऽभिधेयत्वस्य; एतद्घटप्रागभावस्यैतद्घटपूर्वकालावृत्तितायाम् । अन्यो-

**परिच्छेदेति** । उक्तन्यायमन्यत्राप्यतिदिशति—**एवमिति** । **यथेति** । 'क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत्' इत्यनुमानेन क्षितिकर्तृसिद्धौ, स च कर्तैको नाना वेति विशये लाघवात् क्षितिकर्तुरेकत्वसिद्धिरिति भावः ।

**अनौचित्यमिति** । अनौचित्याख्यमित्यर्थः । **तस्येति** । अनौचित्याख्यस्येत्यर्थः । तदेव प्रतिपादयति—**तथाहीति** । अनौचित्यं निग्रहस्थानान्तरं स्यादिति शङ्कते—**भवतु वेति** । तस्य निग्रहस्थानान्तरत्वाभ्युपगमे तर्काभिन्नत्वापत्तिरित्यत्राह—**तर्कत्वमिति** ।

## तर्काभासनिरूपणम्

सत्तर्कबुद्धावत्यन्तोपयोगित्वात्तर्काभासान्निरूपयितुमुपक्रमते—**इदानीमिति** । **तर्काभास इति** । तर्कलक्षणरहितत्वे सति तर्कवदवभासमानत्वं तत्त्वम् । **तत्रेति** । आत्माश्रयादिषु पञ्चसु तर्केष्वित्यर्थः । **आत्माश्रयस्येति** । तर्काभासत्वमिति शेषः । प्रकारं निर्वक्ति—**स चेति** । उदाहरति—**यथेति** । आत्माश्रयाभासात्मकतर्काभासं निरूप्यान्योन्याश्रयाभासात्मकं तर्काभासं निर्वक्ति—**अन्योन्येति** ।

न्याश्रयस्य व्यक्तिभेदात् । यथा संयोगाद्घटस्योत्पत्तिः; तस्मात्संयोगस्य । चक्रकस्यापि व्यक्तिभेदात् । यथा व्याप्त्यनुभवात्संस्कारः ; संस्कारात् स्मृतिः ; स्मृतेः परामर्शोऽनुभवः । अनवस्थाया अनादितः । यथा बीजाङ्कुरपरंपरायाः । एवं तदितरप्रकारभेदस्याप्याभासत्वं पञ्चधा—प्रशिथिलमूलत्वविपर्ययापर्यवसितत्वेष्टापादनत्वानुगुणत्वमिथोविरोधा इति । तत्र प्रशिथिलमूलो यथा—'यदि शब्दोऽनित्यः स्यात्, तदा गुणो न स्यात्' । अत्र व्यतिरेकव्याप्त्यभावः । अप्रसिद्धविपर्ययसाध्यो विपर्ययापर्यवसितः । यथा सांख्यं प्रति 'यदि घटो नित्यः स्यात्, तदा सामान्यवत्त्वे सति चाक्षुषो न स्यात्' इति । अत्र विपर्यये यदनित्यत्वं साध्यं तत् सांख्यस्याप्रसिद्धम् । असिद्धविपर्ययसाधनमिष्टापादनम् । यथा 'इदं तेजःसंयोगि जलं यदि

तदुदाहरति—यथेति । चक्रकाभासात्मकं तर्काभासं निर्वक्ति—चक्रकेति । तस्योदाहरणमाह—यथा व्याप्त्यानुभवादिति । स्पष्टमन्यत् । तर्काभासं तदितरप्रकाराख्यं विभजते—एवमिति । तत्रेति । तेषां मध्य इत्यर्थः । व्यतिरेकेति । ईश्वरज्ञानादौ व्यभिचारादिति भावः । द्वितीयमुदाहरति—अप्रसिद्धेति । यदीति । घटो नित्यः प्रागभावाप्रतियोगी स्याद्यदीति योजना । सामान्यवत्त्वे सतीति । यन्नित्यं तत् दृष्टं न भवतीति व्याप्तेर्नित्यगोत्वादौ भङ्गपरिहारार्थम्—अत्रेति । आपाद्यापादकयोरित्यर्थः । विपर्यय इति । अवसाने सतीति शेषः । अनित्यत्वमिति । प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वमित्यर्थः । साध्यमिति । सिषाधयिषाविषयीभूतमित्यर्थः । तदिति । अनित्यत्वमित्यर्थः । सांख्यस्य । निरीश्वरसांख्यस्येत्यर्थः । तन्मते सकर्तृकत्वाभावादिति भावः । तृतीयमुदाहरति—असिद्धेति । इदमिति । तेजःसंयोगीदं जलमिति योजना । शीतेति । अत्र स्पर्शाधिकरणं स्यादित्युक्ते पृथिव्यां व्यभिचारः । तदर्थमुक्तं शीतस्पर्शेति । असिद्धमिति । गन्धस्य पृथिवीमात्रवृत्तित्वादिति भावः । ननु 'सुरभि जलम्' इति प्रतीत्यन्यथानुपपत्त्या तत्रापि गन्धवत्त्वं साध्यत इति चेत्; न, 'रक्तः स्फटिकः' इति प्रतीतिवत् 'शीतो वायुः' इति प्रतीतिवच्च तत्प्रतीत्युपपत्तेर्नोक्तदोष इति दिक् । चतुर्थमुदाहरति—सिद्धविपर्यय इत्यादिना । निगदव्याख्यातमेतत् । पञ्चमं दर्शयति—प्रतिरुद्धेति । व्यतिरेकः । प्रतिपक्षव्यतिरेक इत्यर्थः । आकाशैकगुण इति ।

शीतस्पर्शाधिकरणं स्यात्, निर्गन्धं स्यात्' इति। अत्र विपर्यये गन्धवत्त्वमसिद्धम्। सिद्धविपर्ययोऽनुगुणः। यथा—'हिमं यदि स्नेहानधिकरणं स्यात्, शीतस्पर्शानधिकरणं स्यात्'। अत्र विपर्यये यत् साध्यं स्नेहाधिकरणत्वं, तद्वैशेषिकस्य सिद्धमेव। प्रतिरुद्धव्यतिरेको मिथोविरोधः। यथा—'यदि शब्दोऽनित्यः स्यात्, आकाशैकगुणो न स्यात्' 'शब्दो यदि नित्यः स्यात्, सामान्यवत्त्वे सत्यस्मदादिबाह्यकरणग्राह्यो न स्यात्' इति। अत्र व्यतिरेके परस्परं सप्रतिपक्षता। अमीषां क्वचित् संकीर्णता भवति; यथा हेत्वाभासानाम्। तदेवं तर्काभासा मतानुज्ञाभेदा इति।

इति तर्कवादः

---

आकाशविशेषगुण इत्यर्थः। अत्र विपर्यये 'शब्दो नित्यः, आकाशविशेषगुणत्वात्; न यदेवं न तदेवम्; यथा पाकजरूपम्' इत्यनुमानं बोध्यमिति दिक्। 'शब्दो यदि नित्यः' इत्यत्रापि विपर्यये 'शब्दोऽनित्यो भवितुमर्हति, सामान्यवत्त्वे सत्यस्मदादिबाह्यकरणग्राह्यत्वात्, घटवत्' इत्यनुमानं बोध्यम्। ग्राह्यत्वादित्युक्ते परमाण्वादौ व्यभिचारः। तदर्थमुक्तम्—**करणेति**। करणपदमिन्द्रियपरम्। तेन परमाण्वादेरनुमानरूपकरणग्राह्यत्वाद्व्यभिचारो दुर्वार इति दूषणमलग्नकं वेदितव्यम्। तावत्युक्ते संख्यादौ व्यभिचारः स्यात्। तत्परिहारार्थम्—**एकेति**। अत्रैकपदं मात्रार्थकं बोध्यम्, अन्यथोक्तदोषानिवृत्तेः। तथाप्यात्मनि व्यभिचारो भवेत्। अतो **बाह्येति**। तथापि योगजधर्मानुगृहीतेन चक्षुरादिना परमाणुर्योगिना गृह्यत एवेति तत्र व्यभिचारः स्यात्। अत उक्तम्—**अस्मदादीति**। तावत्युक्ते रूपत्वादौ व्यभिचारः स्यात्। अत उक्तम्—**सामान्यवत्त्वे सतीति**। अत्रास्पर्शवत्त्वे सतीति विशेषणं देयम्। [1]अन्यथा नयनगतपित्तद्रव्ये व्यभिचारः स्यादिति दिक्। **परस्परमिति**। नित्यत्वानित्यत्वयोरिति भावः। **अमीषामिति**। प्रदर्शिततर्काभासानामित्यर्थः। अत्र दृष्टान्तमाह—**यथेति**।

1 अन्यथा नयनगतपित्तद्रव्ये व्यभिचारः स्यादिति। नयनगतपित्तद्रव्यस्य नित्यत्वाभावात्कथं व्यभिचार इति विचारणीयम्।

## व्याप्तिवादः

तर्कनिरूपणानन्तरं व्याप्तिर्निरूप्यते, तदधीनज्ञानत्वात्तस्याः । ननु केयं व्याप्तिः ? संबन्धमात्रं वा ? अव्यभिचरितसंबन्धो वा ? अविनाभावो वा ? स्वाभाविकसंबन्धो वा ? निमित्तनैमित्तिकत्वं वा ? तादात्म्यं वा ?

हेत्वाभासानामिति । सव्यभिचारादीनामित्यर्थः । तदिति । यस्मादुपाधेरसंकरस्तस्मादित्यर्थः । उक्तन्यायमन्यत्राप्यतिदिशति—एवमिति । मतानुज्ञेति । स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषप्रसञ्जो मतानुज्ञा । पक्षोऽत्र सिद्धान्तो विवक्षितः ; न पुनः सिषाधयिषितधर्मविशिष्टधर्मिमात्रम् । अभ्युपगमोऽप्यपरिहरणम् । तेन सिद्धान्ते परोक्तं दूषणमपरिहृत्य परसिद्धान्ते दोषप्रसञ्जनं मतानुज्ञेत्यर्थः । एतच्च निग्रहस्थानमग्रे स्पष्टतरमुपपादयिष्यामः ।

इति तर्कवादः ।

---

## व्याप्तिवादः ।

महागणपतिं वन्दे मङ्गलायतनं शुभम् ।
सिद्धये चिन्तितार्थस्य प्रत्यूहावलिशान्तये ॥

तर्कं सप्रपञ्चं निरूप्य क्रमप्राप्तां व्याप्तिं निरूपयितुं प्रतिजानाति—तर्केति । ननु व्याप्तिनिरूपणं तर्कनिरूपणानन्तरमित्यसंगतम्, संगत्यभावादित्याशङ्क्याह—तदधीनेति । तदधीनं तर्कायत्तं ज्ञानं यस्याः; तस्या भावस्तत्त्वम् । तस्मादित्यर्थः । तस्या इति । व्याप्तेरित्यर्थः । तेनोपजीव्योपजीवकभावलक्षणा संगतिर्बोध्येति सिद्धम् ।

संबन्धमात्रमिति । सामानाधिकरण्यमात्रमित्यर्थः । ननु व्यभिचारसंबन्धेऽतिव्याप्तिः; तस्यापि तत्त्वादिति चेत् ; न, तस्यापि केनचित्सह व्याप्तत्वान्नोक्तदोष इति दिक् । धूमादिव्याप्तिस्तु विशिष्य निर्वक्तव्येति भावः । ननु किमिदं संबन्धत्वम् ? व्याप्तिस्वरूपं वा ? व्याप्तिपदप्रवृत्तिनिमित्तं वा ? नाद्यः, लिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्ताव एतल्लक्षणाभिधानस्यार्थान्तरत्वात् । न च संबन्धमात्रम्, तथा तद्बोधादनुमित्यनुत्पत्तेः । न द्वितीयः, संबन्धज्ञानेऽपि व्याप्तिपदाप्रयोगादित्यस्वरसादाह—

विशिष्टवैशिष्ट्यं वा ? साध्याभावव्यापकाभावप्रतियोगित्वं वा ? कात्स्न्र्येन साधनसाध्यसहभावो वा ? अनौपाधिकसंबन्धो वा ? साधनत्वाभिमतसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यं वा ?

अव्यभिचरितेति । ननु किमिदमव्यभिचरितत्वम् ? साध्यतावच्छेदकावच्छिन्नसाध्यात्यन्ताभाववदवृत्तित्वं वा ? साध्यवदन्यावृत्तित्वं वा ? अन्यद्वा ? सर्वथापि नोपपद्यते, केवलान्वयिन्यव्याप्तेरित्यपरितुष्यन्नाह—अविनाभाव इति । साध्येन विना न भावो हेतोः; साध्येन विना अभाव इति वा तदर्थः । नन्वर्थद्वयमप्यनुपपन्नम्, केवलान्वयिन्यसंभवादित्यत आह—स्वाभाविकेति । किमिदं स्वाभाविकत्वम् ? स्वभावजन्यत्वं वा ? स्वभावाश्रितत्वं वा ? स्वभावाश्रयत्वं वा ? नाद्यः, घटत्वादौ द्रव्यत्वाद्यव्याप्तेः । न द्वितीयः, शब्दादेराकाशव्याप्यतापत्तेः । न तृतीयः, आकाशस्य शब्दादिव्याप्यतापत्तेरित्यरुचेराह—निमित्तेति । [1] 'इदं रूपवत्, रसवत्त्वात्' इत्यत्राव्याप्तिरित्यरुचेराह—तादात्म्यमिति । संबन्धविशेष इत्यर्थः । नन्विदमसंगतम्, अव्यापकत्वात्; अभेदेन गम्यगमकभावानुपपत्तेरित्यरुचेराह—विशिष्टेति । व्यापकेन सह व्याप्यवैशिष्ट्यमित्यर्थः । एतावदज्ञानेऽप्यनुमितेर्जायमानत्वाद्गौरवकरत्वाच्च नेदमित्यत आह—साध्याभावेति । साध्याभावस्येतरभेदाभावस्य व्यापकीभूतो योऽयमभावः पृथिवीत्वाभावः, तत्प्रतियोगित्वं [2]पृथिवीत्वादौ वर्तत इत्यर्थः । ननु किमिदं साध्यत्वम् ? सिद्धिकर्मत्वं वा ? सिषाधयिषाविषयत्वं वा ? व्याप्तिप्रतियोगित्वं वा ? न तावदाद्यः, घनगर्जितस्थलेऽव्याप्तेः । न द्वितीयः, बाधावतारे महानसवह्नौ तदभावात् । नापि तृतीयः, आत्माश्रयप्रसङ्गादित्यरुचेराह—कात्स्न्र्येनेति । कृत्स्नेन साधनेन साध्यसंबन्धो व्याप्तिरित्यर्थः । नन्विदमसंगतम्, एकव्यक्तिलिङ्गेऽनेकाशेषत्वरूपस्य कात्स्न्र्यस्याभावादव्याप्तेः । न च संभाविताशेषत्वमात्रं कृत्स्नपदेन विवक्षितम्; अतो नोक्तदोष इति वाच्यम्; नानाव्यक्ति-

1 इदं रूपवत् रसवत्त्वादित्यत्राव्याप्तिरिति । रूपरसयोः साध्यहेत्वोः कार्यकारणभावविरहादिति भावः ।

अव्यापकत्वादिति । वह्निमान् धूमादित्यत्र साध्यहेत्वोस्तादात्म्यं नास्तीत्यव्याप्तिरिति भावः । दूषणान्तरमाह—अभेदेनेति ।

2 पृथिवीत्वादौ वर्तत इति । व्यतिरेकव्याप्तिस्वरूपं भवतीति केवलव्यतिरेकिणि पृथिवी इतरभिन्ना पृथिवीत्वादित्यत्र समन्वय उपपादितः । वह्निमान् धूमादित्यादावन्वयव्यतिरेकिण्यपि समन्वयो भवति ।

**तत्र नाद्यः। न हि संबन्धमात्रज्ञानादनुमितिरुत्पद्यते ; किंतु तद्विशेषज्ञानात्। अन्यथा रासभादपि वह्निरनुमीयेत, संबन्धमात्रस्य तत्रापि विद्यमानत्वात्।**

केऽपि प्रत्येकं सकलधूमसंबन्धस्य वह्नावभावात्। नापि कृत्स्नेन साध्येन संबन्धस्तलक्षणार्थ इति वाच्यम्, अयोगोलकीयवह्निना समं धूमसंबन्धाभावादव्याप्तेः। तस्मात् **लीलावतीकारोक्तं** लक्षणं लीलया खण्डितमित्यरुचेराह—**अनौपाधिकेति**। ननु किं तदनौपाधिकत्वम्? उपाध्यजन्यत्वं वा? उपाधिरहितत्वं वा? नाद्यः, धूमे साध्ये वह्नेरपि गमकत्वप्रसङ्गात्। न हि तयोः संबन्ध उपाधिना जन्यते। न द्वितीयः, उपाधिरहितत्वं किं तदुपाधिरहितत्वम्? किं वान्योपाधिरहितत्वम्? नाद्यः, असंभवात्। वह्नौ साध्ये धूमस्याप्यगमकत्वप्रसङ्गात् ; तदुपाधिरहितत्वस्य तत्र प्रत्वेतुमशक्यत्वात्, तदुपाधिप्रतीतौ सोपाधितापत्तेः। न द्वितीयः, धूमस्यापि क्वचिदुपाधित्वेन वह्निरहस्यासंभवात्। [1]उपाधिनिर्वचनेऽन्योन्याश्रयप्रसङ्गादित्यपरितुष्यन्नाह—**साधनत्वाभिमतेति**। साधनत्वाभिमतं धूमादि ; तत्समानाधिकरणो योऽयमत्यन्ताभावो घटाद्यत्यन्ताभावः; तदप्रतियोगि वह्न्यादि ; तत्सामानाधिकरण्यं धूमादावस्त्येवेत्यर्थः। पर्वतीयवह्नेर्महानसीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वादव्याप्तिः। [2]न च समानाधिकरणयोरेव व्याप्तिरिति वाच्यम्, तदा पृथिवीत्वादिना गन्धाद्यनुमानं न स्यात्। द्रव्यत्वादेः संयोगाव्याप्यतापत्तिश्च। न च प्रतियोग्यसमानाधिकरणत्वं व्याप्यवृत्तित्वं

1 उपाधिनिर्वचनेऽन्योन्याश्रयप्रसङ्गादिति। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिलक्षणम्। व्यापकत्वं व्याप्तिनिरूपकत्वम्। व्याप्तिश्चानौपाधिकत्वमिति व्याप्तिज्ञानाधीनमुपाधिज्ञानम्। उपाधिज्ञानाधीनं च व्याप्तिज्ञानमित्यन्योन्याश्रय इति भावः।

2 न च समानाधिकरणयोरेव व्याप्तिरिति। तथाच पर्वतीयवह्नेर्महानसीयधूमसामानाधिकरण्यं नास्तीति तयोर्वह्निधूमयोर्न व्याप्तिः। अपितु समानाधिकरणयोः पर्वतीयवह्निधूमयोरेव। तस्मिंश्च वह्नौ तद्धूमसमानाधिकरणाभावप्रतियोगित्वं नास्तीति न दोष इति भावः।

पृथिवीत्वादिना गन्धाद्यनुमानं न स्यादिति। पृथिवीत्वजातेरेकत्वेन सकलपृथिवीसाधारणत्वात्, घटपटादिगन्धानां सर्वेषामपि पृथिवीत्वसमानाधिकरणत्वात् समानाधिकरणयोरेव व्याप्तिरित्युक्तावपि गन्धवान् पृथिवीत्वादित्यत्राव्याप्तिः। पृथिवीत्वसमानाधिकरणे पटीयगन्धे पृथिवीत्वाधिकरणघटनिष्ठात्यन्ताभावप्रतियोगित्वसत्त्वादिति भावः।

व्याप्यवृत्तित्वम्। अवच्छिन्नवृत्तिकान्यत्वम्।

**न द्वितीयः । व्यभिचारः साध्यात्यन्ताभावसामानाधिकरण्यम् । अतस्तदभावोऽपि साध्याभावनिरूपणाधीननिरूपणः । तथाच केवलान्वयिनि साध्याभावस्याप्रसिद्धेर्न व्यभिचरितत्वं शक्यग्रहणमिति ।**

वात्यन्ताभावविशेषणम् ; ततश्च नोक्तदोष इति वाच्यम् ; [1]संयोगादौ साध्ये सत्त्वादेरनैकान्तिकत्वाभावप्रसङ्गात् । न हि प्रतियोगिविरोधी संयोगादेरपरोऽत्यन्ताभावोऽस्ति, अधिकरणभेदेनाभावभेदाभावादिति संक्षेपः ।

तदेवं विकल्प्य यथोद्देशं दूषयति—**नाद्य इति । संबन्धेति** । सामानाधिकरण्यज्ञानमात्रादित्यर्थः । **अनुमितिरिति** । व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमित्यर्थः । **नोत्पद्यते हीति** योजना । यादृशव्याप्तिज्ञानमनुमितौ करणं, तादृशी व्याप्तिर्न संबन्धमात्रम्, अतिप्रसङ्गादिति भावः । तर्हि कीदृशव्याप्तिज्ञानादनुमितिरुत्पद्यत इति जिज्ञासायामाह—**किंत्विति । तद्विशेषेति** । संबन्धविशेषज्ञानात् ; तद्वन्निष्ठात्यन्ताभावाप्रतियोगिसामानाधिकरण्यज्ञानादिति यावत् । न चैतदेवास्तु तल्लक्षणमिति वाच्यम्, अग्रे निराकरिष्यमाणत्वादिति भावः । **अन्यथेति** । संबन्धमात्रस्य व्याप्तित्व इत्यर्थः । अलक्ष्ये रासभ उक्तलक्षणसद्भावं दर्शयति—**संबन्धमात्रस्येति** ।

**न द्वितीय इति** । अव्यभिचरितः संबन्ध इत्यर्थः । व्यभिचाराज्ञाने तदभावरूपाव्यभिचरितत्वं ज्ञातुं न शक्यत इति तल्लक्षणमाह—**व्यभिचार इति । साध्यात्यन्ताभावेति** । साध्यतावच्छेदकावच्छिन्नसाध्यात्यन्ताभावसामानाधिकरण्यमित्यर्थः । [2]अन्यथा 'इदं संयोगि, द्रव्यत्वात्' इत्यत्रातिव्याप्तिः स्यादिति भावः ।

1 संयोगादौ साध्ये सत्त्वादेरनैकान्तिकत्वाभावप्रसङ्गादिति । अयं संयोगी, सत्त्वादित्यत्रातिव्याप्तिरिति भावः । अधिकरणभेदेनाभावभेदे प्रमाणाभावात् द्रव्यवृत्तिर्गुणवृत्तिश्च संयोगाभाव एक एव । द्रव्यनिष्ठसंयोगाभावस्य प्रतियोगिसमानाधिकरणत्वेन प्रतियोग्यसमानाधिकरणाभावपदेनाभावान्तरमादाय द्रव्यत्वसमानाधिकरणाभावाप्रतियोगित्वमिव, सत्ताधिकरणगुणनिष्ठसंयोगाभावस्यापि प्रतियोगिसमानाधिकरणभिन्नत्वाभावेनाभावान्तरमादाय सत्तासमानाधिकरणाभावाप्रतियोगित्वं संयोगे वर्तत इत्यतिव्याप्तिः ।

2 अन्यथा इदं संयोगि द्रव्यत्वादित्यत्रातिव्याप्तिः स्यादिति । संयोगत्वावच्छिन्नाभावो न द्रव्ये वर्तते । सर्वावयवावच्छेदेनापि द्रव्ये तत्तत्संयोगस्य सत्त्वेन संयोगानवच्छेदकभागाप्रसिद्ध्या किमवच्छेदेन संयोगत्वावच्छिन्नाभावो द्रव्ये वर्तेत ? ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वात् संयोगप्रागभाववत्युत्पत्तिकालावच्छिन्नघटादौ, संयोगध्वंसवति प्रलयावच्छिन्नपरमाणौ

अत एव न तृतीयः । अविना अव्यतिरेकेण भावो वा, विना व्यतिरेकेण यो भावः, तस्याभावो वा अविनाभावः । उभयथापि साध्यात्यन्ताभावनिरूप्यत्वात् केवलान्वयिनि तस्याभावः ।

अस्तु ; प्रकृते किमायातम् ? तत्राह—तथाचेति केवलान्वयिनीति । 'इदं वाच्यं ज्ञेयत्वात्' इत्यादावित्यर्थः । अप्रसिद्धेरिति । अप्रसिद्धिनिबन्धनाव्याप्तिरित्यर्थः ।

अत एवेति । केवलान्वयिन्यव्याप्तेरेवेत्यर्थः । केवलान्वयिन्यव्याप्तिमेव प्रतिपादयितु विकल्पयति—अविना अव्यतिरेकेणेति । तस्येति । साध्यात्यन्ताभावस्येत्यर्थः ।

ननु—'इदं वाच्यं ज्ञेयत्वात्' इत्यत्र स्वरूपसंबन्धेन वाच्यत्वस्य घटे विद्यमानत्वेऽपि [1]समवायितया वाच्यत्वाभावो घट एव प्रसिद्धो भवति, व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावस्य केवलान्वयित्वात् । न चैवं घटे व्यभिचारहेत्वसिद्धिश्चेति वाच्यम् । साध्यात्यन्ताभाववद्वृत्तित्वमात्रं न व्यभिचारः, येनोक्तदोषः स्यात् । किंतु साध्यतावच्छेदकावच्छिन्नसाध्यात्यन्ताभाववद्गामित्वम् । एतादृशवाच्यत्वाभावो घटे न विद्यत इति न व्यभिचारो न हेत्वसिद्धिश्चेति चेत्—न । व्यभिचारस्य तादृशत्वे तदभावः साध्यतावच्छेदकावच्छिन्नसाध्याभावासामानाधिकरण्यमव्यभिचारः । ततश्चाप्रसिद्धिः । [2]प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदकः, प्रतियोगिनि प्रतियोगितावच्छेदकधर्म-

च संयोगत्वावच्छिन्नात्यन्ताभावो न वर्तते । तथाच साध्यतावच्छेदकावच्छिन्नाभाववद्वृत्तित्वस्य द्रव्यत्वेऽसत्त्वान्नातिव्याप्तिरिति भावः । ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वाभावादुत्पत्तिकालावच्छेदेन घटादौ द्रव्ये संयोगत्वावच्छिन्नाभावो वर्तत इति नव्यमते तु प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वस्य व्यभिचारपदार्थत्वं स्वीकृत्य निरुक्तातिप्रसङ्गो वारणीयः ।

1 समवायितया वाच्यत्वाभावो घट एव प्रसिद्ध इति । वाच्यत्वं पदशक्तिविषयत्वम् । तच्च स्वरूपसंबन्धेनैवान्यत्र वर्तते, न समवायेन । तत्रापि यत्किंचिद्वस्तु स्वरूपसंबन्धेनैव वर्तते, न समावायेन । इत्थं च समवायप्रतियोगित्वरूपं वा, समवायानुयोगित्वरूपं वा समवायित्वं वाच्यत्वे नास्ति । वाच्यत्ववत्यपि घटे वाच्यत्वावृत्तिना समवायित्वेन वाच्यत्वाभावः संभवति । प्रतियोगिनो वाच्यत्वस्य प्रतियोगितावच्छेदकीभूतसमवायित्ववैशिष्ट्याभावेन प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यधिकरणतारूपविरोधिनोऽभावादयमभावः सार्वत्रिकः केवलान्वयी ।

2 व्यधिकरणधर्मावच्छिन्नाभावं खण्डयति—प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इति । अभावोपलधिकारणत्वादिति । समवायितया वाच्यत्वं नास्तीति बुद्धौ वाच्यत्वं

न चतुर्थः । स्वाभाविक इति स्वभावादुत्पद्यते वा? ज्ञायते वा? स्वभावोऽपि स्वरूपं वा? स्वधर्मो वा? सोऽपि साध्यस्य वा? साधनस्य वा? अन्यस्य वा? इति सर्वथाप्यव्याप्त्यतिव्याप्त्यादिदूषणग्रस्ततया-दलक्षणम् ।

न पञ्चमोऽपि । अकार्यकारणभूतयो रूपरसयोरतिव्याप्तेः ; कार्यकारणभूतयोरपि दण्डघटयोरव्याप्तेः ।

वैशिष्ट्यज्ञानस्याभावोपलब्धिकारणत्वात् । प्रतियोगिज्ञानमात्रस्याभावज्ञानहेतुत्वे निर्विकल्पकादपि 'घटो नास्ति' इति प्रतीत्यापत्तिः । ननु व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावानभ्युपगमे [1] 'गवि शशशृङ्गं नास्ति' इति प्रतीतिः कथमुपपद्यत इति चेत् ; न, गवाधिकरणत्वेन शशीयतया शृङ्गप्रतियोगिकाभावप्रमाया असिद्धेः, प्रमाणाभावात् । ननु शुक्तौ 'रजतम्' इति भ्रमानन्तरम् 'इदं रजतमिह नास्ति' इति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाभावसिद्धिरिति चेत् ; न, तत्रेदंत्वस्यैव तदवच्छेदकत्वात् । न हि भ्रमेण तदवच्छेदकत्वं गृहीतमिति वस्तुत्वपि तथा, भ्रमोच्छेदापत्तेः । अनवच्छेदकस्यापि रजतत्वस्य भ्रमत्वज्ज्ञानाविरोधाच्चेति संक्षेपः ।

न चतुर्थ इति । स्वाभाविकः संबन्ध इत्यर्थः । सर्वथा अव्याप्तीति । स्वभावादुत्पद्यत इति पक्षे घटत्वादौ द्रव्यत्वाद्यव्याप्यतापत्तेरव्याप्तिरित्यर्थः । स्वभावात् ज्ञायत इति पक्षे शब्दादेराकाशव्याप्यतापत्तेरतिव्याप्तिरित्यर्थः । आदिशब्देनासंभवो बोध्यः । अथ स्वभावाश्रयत्वं स्वाभाविकत्वमिति चेदाकाशस्य शब्दादिव्याप्यतापत्तेरतिव्याप्तिरिति दिक् ।

न पञ्चम इति । निमित्तनैमित्तिकत्वमित्यर्थः । अव्याप्तेरिति । रूपरसयोर्निमित्तनैमित्तिकत्वाभावादिति भावः । न केवलं लक्षणस्याव्याप्तिः; किंत्वतिव्याप्तिरपीत्याह — कार्येति ।

समवायीति ज्ञानमपेक्षितम् । तच्च वाच्यत्वं समवायीति विशेषदर्शनदशायां न संभवतीति तादृशाभावबुद्धिरप्रामाणिकीति भावः ।

1 गवि शशशृङ्गं नास्तीति प्रतीतिः कथमुपपद्यत इति । व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमे तु शशीयत्वेन शृङ्गाभावे गवाधिकरणकत्वात्प्रतीतिविषय इति भावः ।

नापि षष्ठः । न हि शिंशपास्वलक्षणेन वृक्षस्वलक्षणमनुमीयते; सिद्धसाधनात्, असिद्धेर्वा । किंतु शिंशपात्वेन वृक्षत्वम् । तत्पुनस्तद्भिन्नमेव । व्यावर्त्यभेदाद्व्यावृत्तिभेद इति त्वमेव वदसि ।

न सप्तमः, विशिष्टवैशिष्ट्यमात्रस्य व्यभिचारिसाधारण्यात्; व्यापकेन सह व्याप्यवैशिष्ट्यस्यात्माश्रयादिग्रस्तत्वात् ।

नाप्यष्टमः, । केवलान्वयिनि तदभावात् ।

नवमोऽपि न । किं कृत्स्नसाध्यस्य साधनेन सह संबन्धः? उत कृत्स्नस्य साधनस्य साध्येन संबन्धः ? नाद्यः, धूमादावसंभवात् । न हि धूमः कृत्स्नवह्निसहचरितः, अयोगोलकादौ तदभावात् । न द्वितीयः । न हि कापि वह्निव्यक्तिः सकलधूमसहचरिता । अथ वह्निमत्त्वं साध्यम्, तत् सकलधूमसहचरितमेवेति मतम्; तदपि न; तर्हि धूमवत्त्वं साधनमुक्तं भवति । तच्चैकमेव । तदा च क्व कृत्स्नशब्दार्थः ? तस्याशेषबहुवाचित्वात् । न साधनस्य

नापि षष्ठ इति । तादात्म्यमित्यर्थः । न हीति । शिंशपास्वलक्षणेन शिंशपात्वरूपेण हेतुना [1]वृक्षस्वलक्षणं वृक्षत्वरूपं साध्यं नानुमीयते हीति योजना । तत्र हेतुमाह—सिद्धेति । शिंशपात्वावच्छेदेन वृक्षत्वरूपस्य सिद्धत्वेन सिद्धसाधनादित्यर्थः । ननु शिंशुपात्ववृक्षत्वरूपयोः सामानाधिकरण्याभावात्कथं सिद्धसाधनमित्यरुचेराह— असिद्धेरिति । शिंशपात्वसामानाधिकरण्येन वृक्षत्वरूपस्याप्रसिद्धेरित्यर्थः । तर्हि शिंशपात्वेन किमनुमीयत इति जिज्ञासायामाह—किंत्विति ।

सप्तमपक्षे विशिष्टवैशिष्ट्यं व्याप्तिरिति वदता वक्तव्यम्—किं विशिष्टवैशिष्ट्यमात्रम्? कि वा व्यापकेन सह व्याप्यवैशिष्ट्यं व्याप्तिरिति विकल्प्याद्यं कल्पं निराकरोति—विशिष्टेति । न द्वितीय इत्याह—व्यापकेनेति । व्यापकत्वव्याप्यत्वयोर्निर्वचन आत्माश्रयादिदोषप्रसङ्गादिति भावः ।

नाप्यष्टम इति । साध्याभावव्यापकाभावप्रतियोगित्वपक्ष इत्यर्थः । तदभावादिति । साध्याभावाभावादित्यर्थः । तद्घटितं लक्षणं तत्र नास्तीत्यव्याप्तिरिति भावः ।

1 वृक्षत्वस्य वृक्षभिन्नमात्रं व्यावर्त्यम् । शिंशपात्वस्य शिंशपाभिन्नवृक्षोऽपि व्यावर्त्यः ।

कृत्स्नत्वं वयमाचक्ष्महे ; अपि तर्हि, तदधिकरणस्य ; तदा कृत्स्नधूमाधिकरण-संबद्धमेव वह्निमत्त्वमिति कृत्स्नशब्दार्थसत्त्वाददोष इति चेत् ; न, एकव्यक्ति-मात्राधिकरणयोर्व्याप्यव्यापकयोस्तदभावात् ; यथा आकाशत्वशब्दयोः । साध्यायोगव्यवच्छेदसंबन्धित्वमनया गिराभिहितमिति चेत् ; न, अग्रे निरा-करिष्यमाणत्वात् । किंच केवलव्यतिरेकिणि साध्यसाधनसहचारग्रहाभावात् कथमनुमितिरुत्पद्यते ?

नापि दशमः ; अनौपाधिकत्वं ह्युपाधिज्ञानाधीनज्ञानम् ; उपाधिश्च साध्यव्यापकः साधनाव्यापको वाच्यः ; व्यापकत्वं व्याप्यत्वप्रतियोगिकमि-त्यन्योन्याश्रयादिति । ननु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं व्यापकत्वम् ; तच्च न व्याप्यत्वनिरूप्यम् ; अतः कथमन्योन्याश्रयादि ? भवत्वेतद्यथा तथा वा । तथाप्युपाधिविरहः कथमवधारणीयः ? न तावद्वह्निधूमसंबन्धः साध्य-

नवमपक्षं दूषयितुं विकल्पयति—किं कृत्स्नसाध्यस्येति । असंभवादिति । कृत्स्नवह्निसंबन्धाभावादित्यर्थः । धूमादौ कृत्स्नवह्निसंबन्धाभावः कथमित्याशङ्क्य व्यभि-चारादित्याह—न हीति । न द्वितीय इत्यादिः अग्रे निराकरिष्यमाणत्वादित्यन्तो ग्रन्थः स्पष्टार्थः । वह्नित्वावच्छेदकावच्छिन्नेन वह्निना धूमत्वावच्छेदकावच्छिन्नस्य धूमस्य व्याप्तिग्रहे न कोऽपि दोष इत्यरुचेराह—किंचेति । केवलव्यतिरेकिणि पृथिवीत्वादौ लक्षणस्याव्याप्तिरिति भावः ।

ननु व्यापकत्वं न व्याप्तिप्रतियोगित्वम्, येनान्योन्याश्रयः स्यात् । किंत्वन्य-देवेत्याशङ्कते—नन्विति । तद्वन्निष्ठेति । साधनवन्निष्ठो योऽयमत्यन्ताभाव इतरा-त्यन्ताभावः, तदप्रतियोगित्वं साध्यस्यास्तीत्यर्थः । अत्र प्रतियोगिव्यधिकरणत्वेनात्यन्ता-भावो विशेषणीयः । [1]तेन संयोगादौ लक्षणस्य नाव्याप्तिरिति ध्येयम् । तथापीति । आधुनिकव्यापकत्वनिर्वचनेनान्योन्याश्रयपरिहारेऽपीत्यर्थः । वह्निधूमसंबन्धस्य निरुपाधि-कत्वमिति तदता वक्तव्यम्—यत्किंचित्साध्यव्यापकसाधनाव्यापकधर्मशून्यत्वं वा ? एतत्सा-

1 तेन संयोगादौ लक्षणस्य नाव्याप्तिरिति । व्यापकत्वलक्षणस्य न द्रव्यत्वव्यापके संयोगादावव्याप्तिरित्यर्थः । आधुनिकव्यापकत्वनिर्वचनेनेति । तन्निष्ठव्याप्तिनिरूपकत्वं तद्व्यापक-त्वमिति पुरातननिर्वचनम् ।

व्यापकसाधनाव्यापकधर्मरहितः, यत्किंचित्साध्यव्यापकसाधनाव्यापकधर्मराहित्यग्रहेऽपि व्याप्तेरग्रहात् । अथैतत्साध्यव्यापकसाधनाव्यापकधर्मरहित इत्युच्यते, तदा वह्निधूमसंबन्धस्य सोपाधिकतैवापतिता । वह्निमत्त्वव्यापकस्य धूमवत्त्वाव्यापकत्वं धूमवत्त्वाव्यापकस्य वह्निमत्त्वव्यापकत्वं निषिध्यत इति चेत्, तथाप्यन्यस्य कस्यचिद्धर्मस्यैतादृशनिषेधे धूमवत्त्वे किं दर्शितम् ?

किंच साध्याव्यापकस्य साधनव्यापकस्य च यथोपाधित्वं तथोपाधिप्रस्तावे प्रपञ्चेन दर्शयिष्यामः । अपिच योग्यानामुपाधीनां व्यतिरेको योग्यानुपलब्ध्यात्रधार्यताम् । अतीन्द्रियाणां तु कथमत्रधार्यते ? अनुमानादिति चेत् ; न, तत्राप्यनुमानपरंपरायामनवस्थानात् । क्वचिदाप्तोपदेशादिति चेत् ; न, संकेतादिग्रहेऽनुमानापेक्षायामनवस्थानात् ।

ध्यव्यापकसाधनाव्यापकधर्मशून्यत्वं वा ? इति विकल्प्याद्यं कल्पं निराचष्टे—यत्किंचित्साध्येति । द्वितीयमुत्थापयति—अथैतत्साध्येति । तादृशधर्मस्यासिद्धत्वे निषेध्यत्वानुपपत्तिः, सिद्धत्वे तस्य निषेधायोग इत्याह—तदेति । साध्यव्यापकस्य साधनाव्यापकत्वनिषेधेऽपीत्यर्थः । शङ्कते—वह्निमत्त्वेति । साध्यव्यापकत्वे सति साधनाव्यापकत्वं नोपाधेर्लक्षणम्, [1]साधनावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेरित्यत आह—किंचेति । तद्व्याख्यानावसरे तस्योपाधित्वं वयमप्युपपादयिष्यामः । वह्निधूमसंबन्धस्योपाधिरहितत्वं योग्यानुपलब्धिसहकृतेन प्रत्यक्षेणावधार्यत इत्यत आह—अपिचेति । अतीन्द्रियाणामिति । उपाधीनामित्यर्थः । व्यतिरेक इत्यनुषङ्गः । [2]योग्यानुपलब्धेरभावादित्यर्थः । नन्वतीन्द्रियोपाधिनिरासोऽनुमानादवधार्यत इति शङ्कते—अनुमानादिति । तत्रापीति । उपाध्यभावग्राहकानुमानेऽपीत्यर्थः । अनवस्थापरिहारमाशङ्कते—क्वचिदिति । संकेतेति । संकेतः समयः पुरुषकृतः ।

1 साधनावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेरिति । ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वमुपाधिः । भावत्वे विनाशित्वव्यापकता नास्ति, प्रागभावे व्यभिचारात् । साधनीभूतजन्यत्वावच्छिन्नविनाशित्वव्यापकता त्वस्ति ; तस्याजन्ये प्रागभावेऽसत्त्वात्, घटादौ च भावत्वस्य सत्त्वात् । एवं च साध्यव्यापकताघटितलक्षणस्य तत्र भावत्वेऽव्याप्तिरित्यर्थः ।

2 योग्यानुपलब्धेरभावादिति । अतीन्द्रिय उपाधिर्यद्यत्र स्यात्तदोपलभ्येतेत्यापादनासंभवेन प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपयोग्यताविशिष्टाया अनुपलब्धेरभावादित्यर्थः ।

नन्वतीन्द्रियाणामप्युपाधीनां योग्यधर्मावच्छेदेन योग्यत्वात्तद्व्यतिरेकोऽपि योग्यानुपलब्ध्यैवावधार्यत इति चेत्, भवेदेवं यदि प्रत्यक्षेण पृथिव्यां जलपरमाणुव्यतिरेकं भवाननवधारयेत्। तस्यापि जलत्वेन रूपेण योग्यत्वात् तद्व्यतिरेकोऽपि प्रत्यक्षेणावधार्यत इति चेत्; जलपरमाणुर्यदि ग्रहणयोग्यः, तर्हीनन्तरकाले 'जलपरमाणुरत्र न वा' इति संदेहो न स्यात्।

ननु न वयं साध्यव्यापकसाधनाव्यापकधर्मवत्त्वं सोपाधिकत्वमाचक्ष्महे; किंतु साध्याव्यभिचारिव्यभिचारित्वम्। तद्व्यतिरेकश्च सुग्रह एवेति चेत्; मैवम्। अनया वचनभङ्ग्या साध्यव्यापकाव्याप्यत्वं सोपाधिकत्वमुक्तं भवति। इदं च न घटते, प्रागुक्तदोषादेव। दूषणान्तरमप्यत्र।

न पुनरविनाभाववत् स्वाभाविकः। आदिशब्देन पदपदार्थविभागप्रतीतिरुच्यते। **तद्ग्रहे**। तज्ज्ञान इत्यर्थः।

नन्वतीन्द्रियोपाधेर्निरासोऽपि योग्यानुपलब्ध्यावधार्यताम्; तस्यापि योग्यधर्मसमानाधिकरणत्वेन योग्यत्वादिति चोदयति—**नन्विति**। **भवेदेवमिति**। प्रत्यक्षेण पृथिव्यां जलपरमाणुव्यतिरेकं भवाननवधारयेद्यदि, तदैवं भवेदिति योजना। अयमाशयः—यथा जलपरमाणुव्यतिरेकस्य योग्यपृथिवीत्वधर्मसमानाधिकरणत्वेऽपि पृथिव्यां न प्रत्यक्षत्वं, तथातीन्द्रियोपाधिव्यतिरेकस्य योग्यधर्मसमानाधिकरणत्वेऽपि न प्रत्यक्षत्वमिति। जलपरमाणोः परमाणुत्वेनायोग्यत्वेऽपि जलत्वेन रूपेण योग्यत्वात्तदभावः प्रत्यक्षेण निश्चीयत इत्याशङ्कते—**तस्यापीति**। जलपरमाणोरपीत्यर्थः। इष्टापत्तिरित्यभिमानः। पराभिमानं खण्डयति—**तर्हीति**। इष्टापत्तावनुभवविरोधः स्यादिति भावः।

ननु हेतौ प्रकारान्तरेणानौपाधिकत्वं सुग्रहमिति शङ्कते—**नन्विति**। **किंतु साध्येति**। धूमः साध्यः; तदव्यभिचार्यार्द्रेन्धनसंयोगः; तद्व्यभिचारित्वं तदत्यन्ताभावसमानाधिकरणत्वमयोगोलकीयवह्नौ विद्यत इत्यर्थः। **तद्व्यतिरेकश्चेति**। सोपाधिकत्वव्यतिरेक इत्यर्थः। **सुग्रह एवेति**। धूमकत्त्वहेताविति शेषः। निषेधति—**मैवमिति**। **प्रागुक्तदोषादेवेति**। पूर्वोक्तान्योन्याश्रयरूपदोषादेवेत्यर्थः। न केवलं प्रागुक्तदोषमात्रम्; किंतु दोषान्तरमपीत्याह—**दूषणान्तरमपीति**। अतिव्याप्तिर्दूषणान्तरमित्यर्थः। **अत्रेति**। अनौपाधिकत्वघटितलक्षण इत्यर्थः। दोषान्तरमेव प्रतिपाद-

तथाहि—सोपाधेरपि साध्यव्यापककेवलान्वयिव्याप्यत्वादनौपाधिकत्व-प्रसङ्गः। साध्यव्यापकसकलाव्याप्यत्वं तदिति चेत्; न, किंचित्साध्यव्यापकव्याप्यत्वे विद्यमाने सकलतद्व्यापकाव्याप्यत्वमिति सुभाषितम्। किंचित्साध्यव्यापकव्याप्यत्वशून्यत्वमभिमतमिति चेत्; न, किंचित्तद्व्यापकव्याप्यत्वस्यैव सत्त्वात्। किंचित्तद्व्यापकव्याप्यत्वे सति किंचित्तद्व्यापकाव्याप्यत्वमिति चेत्; न, एतस्यापि तादृशत्वात्। तद्व्यापकव्याप्यत्वात्यन्ताभावराहित्यं तदिति चेत्; न, एतावतापि तद्व्यापकव्याप्यत्वमेवोक्तं भवति। तत्र चोक्तमेव दूषणम्।

अपिच यदीदमौपाधिकत्वं तदैतद्व्यतिरिकेण यावत्तद्व्यापकव्याप्यत्वमनौपाधिकत्वमुक्तं भवति। तत्र यावत्पदार्थान्तर्भूतं समव्याप्यत्वमप्यस्ति। तदा च समव्याप्तव्याप्यत्वमित्येवास्तु। इतरेषामर्थगत्या वैयर्थ्यमेव। समव्याप्तव्याप्यत्वमित्येवास्त्विति चेत्; न, समव्याप्तपरंपरायामनवस्थापातात्।

नापि चरमः, धूमसमानाधिकरणात्यन्ताभावाप्रतियोगि भवति प्रमेयत्वम्। तेन सह सामानाधिकरण्यमस्ति रासभादेः। अतस्तस्यापि वह्नि-

यति—तथाहीति। साध्येति। धूमरूपसाध्यव्यापकप्रमेयत्वव्याप्यत्वाद्वह्नेरति-व्याप्तिरिति भावः। ननु साध्यव्यापकयत्किंचिद्धर्मव्याप्यत्वं नानौपाधिकत्वम्, येनोक्तदोषः स्यात्; किंतु साध्यव्यापकसकलव्याप्यत्वम्। तद्रहितत्वं सोपाधिकत्वमिति नोक्तदोष इत्याशङ्कते—साध्यव्यापकेति। परिहरति—नेति। सुभाषितमित्यतः प्राक् सोपाधिकत्वमित्यनुषङ्गः। शङ्कते—किंचिदिति। दूषयति—नेति। पुनः शङ्कते—किंचित्तद्व्यापकेति। परिहरति—नेति। एतस्यापीति। उक्तनिर्वचनस्यापीत्यर्थः। तादृशत्वादिति। किंचित्तद्व्यापकाव्याप्यत्वादित्यर्थः। चोदयति—तद्व्यापकेति। तदिति। अनौपाधिकत्वमित्यर्थः। तत्र चोक्तमेवेति। व्यभिचारिण्यतिव्याप्तिरित्युक्तमेवेत्यर्थः। दोषान्तरमाह—अपिचेति। एतद्व्यतिरेकेणेति। तद्व्यापकव्याप्यत्वव्यतिरेकेणेत्यर्थः। उक्तमिति। तथाच स्ववचनव्याघात इति भावः।

नापि चरम इति। साधनत्वाभिमतसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यमित्यर्थः। रासभेऽतिव्याप्तमिदं लक्षणमित्याह—धूमेति। अतिव्याप्तिपरिहारमाशङ्कते—यत्समानाधिकरणेति। तथापीति। रासभेऽतिव्याप्तिपरिहारेऽ-

मत्त्वेन सह व्याप्तिः स्यात् । यत्समानाधिकरणात्यन्ताभावाप्रतियोगि यत् तेन सह तस्य सामानाधिकरण्यं तद्विवक्षितमिति चेत्; तथाप्यव्याप्यवृत्ते-र्व्याप्यं किमपि न स्यात्, तस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगि-समानाधिकरणत्वात् । अव्याप्यवृत्तेर्व्याप्यं न किंचिदिति चेत्, तर्ह्याद्य-शब्दात्संयोगानुमानमुत्तरशब्दात्तच्छब्दानुमानं भोगात्सुखानुमानमित्येवमा-दिकं भज्येत । संयोगित्वादि तत्रानुमीयते; तच्च व्याप्यवृत्त्येवेति चेत्; न,

पीत्यर्थः । तस्येति । अव्याप्यवृत्तिव्याप्यस्य द्रव्यत्वादेरिति यावत् । तत्राव्याप्तिरिति भावः । अव्याप्यवृत्तिव्याप्ये नाव्याप्तिः, तस्यैवाभावादिति भ्रान्तो देशयति—अव्या-प्येति । अतिप्रसङ्गापादनेन पराभिमानं खण्डयति—तर्हीति । संयोगानुमान-मिति । 'आद्यः [1]शब्दोऽसमवायिकारणजन्यः, भावकार्यत्वात् रूपादिवत्' इत्यनुमान-मित्यर्थः । एवमिति । तत्राप्यनुमानं प्रयोक्तव्यमिति दिक् । भज्येतेति । सर्वानुभव-विरोध इति भावः । शङ्कते—संयोगित्वादीति । आदिशब्देन शब्दवत्त्वादि गृह्यते । अव्याप्यवृत्तित्वादिति । स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वादित्यर्थः । अन्यथेति । तत्संबन्धस्याव्याप्यवृत्तित्वानङ्गीकार इत्यर्थः । तत्रापीति । तत्संबन्धेऽ पीत्यर्थः ।

ननु किमिदमव्याप्यवृत्तित्वम् ? प्रदेशवृत्तित्वं वा ? स्वात्यन्ताभावसमानाधिकरणत्वं वा ? नाद्यः, आरम्भप्रदेशव्यतिरेकेणावयविनः प्रदेशान्तराभावात् । प्रदेशवृत्तित्वे च संयोगस्यावयविनः संयोगानधिकरणत्वप्रसङ्गः, प्रदेशतद्वतोर्भिन्नत्वात् । न द्वितीयः, भावस्य स्वात्यन्ताभावसमानाधिकरणत्वे भावाभावयोर्विरोधोच्छेदप्रसङ्गात्, प्रतियोगिसमान-देशकालत्वेऽत्यन्ताभावस्यान्योन्याभावत्वप्रसङ्गाच्चेत्यभिप्रायेण [2]शङ्कते--अव्याप्यवृत्तीति ।

1 आद्यशब्दोऽसमवायिकारणजन्य इति । द्वितीयशब्दं प्रति प्रथमशब्दस्यासमवायि-कारणत्वात् द्वितीयशब्दासमवायिकारणतया संयोगानुमानं न संभवतीति आद्यशब्द इत्युक्तम् ।

2 अन्योन्याभावत्वप्रसङ्गादिति । घटाधिकरणे भूतले घटवत्तादशायां घटान्योन्या-भावो वर्तते । एवं संयोगात्यन्ताभावोऽपि यदि संयोगाधिकरणे संयोगकाले वर्तेत, तदा तस्या-प्यन्योन्याभावत्वं स्यादित्याशयः ।

**संयोगाद्यव्याप्यवृत्तितया तत्संबन्धस्याप्यव्याप्यवृत्तित्वात् । अन्यथा तत्रापि प्रमाणाभावप्रसङ्गः । अव्याप्यवृत्ति किमपि नास्तीति चेत्; न । एतल्लक्षणानुरोधेन तदपि नाङ्गीकर्तव्यमिति महत्साहसम् । अतः का व्याप्तिरिति ।**

**अत्रोच्यते । केचित्—संबन्धमात्रमेव व्याप्तिः, सर्वेषामेव संबन्धानां व्याप्तिरूपत्वात् । तर्हि व्यभिचारिसंबन्धिलिङ्गदर्शनेऽप्यनुमितिः स्यादिति चेत्, तद्दर्शनेऽप्यस्त्येव कस्यचिद्धर्मस्यानुमितिः । न हि यद्व्यभिचारि तत् सर्वं प्रति व्यभिचारि । संबन्धस्याननुगमो दोष इति चेत्;**

**एतल्लक्षणानुरोधेनेति** । साधनत्वाभिमतसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यानुरोधेनेत्यर्थः । **तदपीति** । अव्याप्यवृत्त्यपीत्यर्थः । **महत्साहसमिति** । अव्याप्त्यादिग्रस्तलक्षणाभ्युपगमस्य प्राकरः । अबाधितप्रतीतिसिद्धाव्याप्यवृत्तित्वनिरासश्चातित्रपाकर इति भावः । पूर्वपक्षमुपसंहरति—**अत इति । का व्याप्तिः ।** न काचिदपि व्याप्तिरित्यर्थः, उक्तलक्षणानां दूषितत्वादिति भावः ।

प्रथमलक्षणे पूर्वपक्षिणोक्तं दूषणमुद्धर्तुं प्रतिजानीते—**अत्रोच्यत इति । केचिदिति** न्यायैकदेशिनो भूषणकारादय इत्यर्थः । **संबन्धमात्रमिति** । सामानाधिकरण्यमात्रमित्यर्थः । एवकारो नियतसामानाधिकरण्यमिति मतान्तरनिरसार्थ इति **न्यायभूषणप्रकाशेऽभिहितं गदाधरमिश्रेण** । संयोगादावतिव्याप्तिरित्यत आह—**सर्वेषामिति** । संयोगादीनामपि लक्ष्यत्वान्नातिव्याप्तिरिति भावः । 'अयं धूमवान् वह्निमत्त्वात्' इत्यत्राव्याप्तिमाशङ्कते—**तर्हीति** । इष्टापत्त्या परिहरति—**तद्दर्शनेऽपीति** । तादृशहेतुदर्शनेऽपीत्यर्थः । तादृशहेतुदर्शने कथमनुमितिः? व्यभिचारित्वादित्यत आह—**न हीति** । क्वचित् कश्चिद्धेतुः, गुणदोषादिवदिति भावः । शङ्कते—**संबन्धस्येति** । वदन्तीत्यस्वरसोद्भावनम् । तद्बीजं तु किं तत् संबन्धमात्रम्? व्याप्तिस्वरूपं वा? व्याप्तिपदप्रवृत्तिनिमित्तं वा? नाद्यः, लिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्ताव एतल्लक्षणाभिधानस्यार्थान्तरत्वात् । [1]न च संबन्धमात्रं तथा, तद्बोधादनुमित्यनुत्पत्तेः । नापि द्वितीयः, संबन्धज्ञानेऽपि व्याप्तिपदाप्रयोगादिति पूर्वोक्तं न विस्मर्तव्यमिति ।

1 न च संबन्धमात्रं तथा । तथा; लिङ्गपरामर्शविषयव्याप्तिस्वरूपम् । तद्बोधात् । संबन्धवद्धूमवानयमिति ज्ञानात् वह्निमानित्याद्यनुमितेरनुत्पत्तेरित्यर्थः ।

न, संबन्धबुद्ध्यसाधारणनिमित्तपदे विशेषणतैव काचिदभिषिच्यताम् ; या तथाविधबुद्धिविषयः । भवतापीदमङ्गीकर्तव्यम् । अन्यथा तत्रापि कथं संबन्धानुगतमतिः ?— इति वदन्ति ।

अन्ये तु—भवतु संबन्धमात्रं व्याप्तिः ; तथापि विशेषजिज्ञासायां कं दृश-संबन्धज्ञानादनुमितिरुत्पद्यत इति वक्तव्यम् । तच्च दुर्वचम् । तद्वरं केवलान्वयिसाध्ये साध्यसामानाधिकरण्यमेव व्याप्तिः । अन्यत्र चाव्यभिचरितत्वमेव व्याप्तिरस्तु । न चाननुगमो दोषः, तृणारणिमणिन्यायात् — इति वदन्ति ।

अपरे तु —अनन्यगत्या तृणारणिमणिन्यायोऽङ्गीक्रियते । अत्र तु सकलसाधारणं तद्वन्निष्ठात्यन्ताभावाप्रतियोगिसामानाधिकरण्यमेव गतिः । संयोगादीनामव्याप्यवृत्तित्वेऽन्यथानुमानमस्ति – इति ब्रुवन्ति ।

वस्तुतस्तु प्रतियोगिसमानाधिकरणात्यन्ताभावेतरस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सह सामानाधिकरण्यं यस्य, तदेव तस्य व्याप्तिरित्युच्यते ।

अन्ये त्वित्यादिकमारभ्य तृणारणिमणिन्यायादित्यन्तं ग्रन्थवृन्दं स्पष्टार्थमित्युपेक्षितम् ।

एकेनैव सामान्यलक्षणेनोपपत्तावनेकविशेषलक्षणानुसरणे महद्गौरवं स्यात् । सामान्यलक्षणकथनमन्तरेण विशेषलक्षणाभिधानानुपपत्तिश्च । न च संबन्धमात्रं तत्, तस्य दूषितत्वात् । सति गत्यन्तरे तृणारणिमणिन्यायो न प्रवर्तत इत्यस्वरसादाह— अपरे त्विति । सकलसाधारणमिति । केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिसाधारणमित्यर्थः ।

'इदं संयोगि, द्रव्यत्वात्' इत्यत्राव्याप्तमिदं लक्षणमित्यरुचेराह--वस्तुतस्त्विति । प्रतियोगिसमानाधिकरणात्यन्ताभावेतरत्वं स्वसमानाधिकरणात्यन्ताभावविशेषणम् । तेन संयोगादिसाध्यकद्रव्यत्वादिहेतौ नाव्याप्तिरिति ध्येयम् ।

ननु —महानसनिष्ठवह्नेः पर्वतनिष्ठधूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वादव्याप्तिः । न च समानाधिकरणयोरेव व्याप्तिरिति वाच्यम् ; यतः [1]पृथिवीत्वादिना

1 पृथिवीत्वादिना गन्धाद्यनुमानं न स्यादिति । परस्परासमानाधिकरणानां सर्वेषां गन्धानामनुगतपृथिवीत्वसमानाधिकरणत्वात् । समानाधिकरणयोरेव व्याप्तिरित्युक्तावपि गन्धवान् पृथिवीत्वादित्यत्राव्याप्तिर्भवति ।

गन्धाद्यनुमानं न स्यात् । मल्लिकाकुसुमनिष्ठगन्धात्यन्ताभाववति पुंनागकुसुमादौ पृथिवीत्वहेतोः सत्त्वाद्व्यभिचारः । रासभादेरपि वह्निव्याप्यतापत्तिः, तत्राप्युक्तलक्षणसत्त्वात्; स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना प्रमेयत्वेन सह तस्यापि समानाधिकरणत्वात । [1]स्वशब्देन साधनाभिधाने आत्माश्रयत्वप्रसङ्गात्, तदनभिधानेऽसंभवाच्चेति चेत् —मैवम् । स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नेन साध्यसामान्येनेति यावत् । अन्यनिष्ठवह्नेः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेऽपि तत्प्रतियोगिता न वह्नित्वेनावच्छिद्यते । धूमवति वह्निर्नास्तीत्यप्रतीतेः । अत एव [2]गन्धादिसाध्यकपृथिवीत्वादौ नाव्याप्तिरिति द्रष्टव्यम् ।

ननु सामान्यं यदि न विशेषाभावप्रतियोगितावच्छेदकं, तदाभावप्रतियोगितावच्छेदकमेव नेत्यायातम्, [3]विशेषाभावकूटानिरिक्तस्य सामान्याभावस्याभावात् । एवंच वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्नसमानाधिकरणत्वात् वह्नेर्धूमव्याप्यतापत्तिरिति चेत्; न । [4]सामान्यधर्मावच्छिन्नप्रतियोगिकश्चाभावः पृथगेव । वह्निसमानाधिकरणायोगोलकीयसामान्याभावप्रतियोगितावच्छेदकत्वाद्धूमत्वस्येति

1 स्वशब्देन साधनाभिधाने आत्माश्रयत्वप्रसङ्गादिति । साधनत्वस्य व्याप्तिमत्त्वरूपत्वादिति भावः । तदनभिधानेऽसंभावाच्चेति । स्वशब्देन साधनोपादान एव निरुक्तं रूपं साधने स्यात्, नान्यथेति भावः । प्रतियोगितानवच्छेदकावच्छिन्नेन साध्यसामान्येनेति यावदिति । साध्यसामान्यम्; साध्यतावच्छेदकावच्छिन्नम् । फलतः प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नेनेत्यर्थः ।

2 गन्धादिसाध्यकपृथिवीत्वादौ नाव्याप्तिरिति । पृथिवीत्वाधिकरणे मल्लिकाकुसुमे पुंनागकुसुमगन्धाभावसत्त्वेऽपि मल्लिकागन्धसत्त्वेन गन्धो नास्तीत्यप्रतीतेः, पृथिवीत्वसमानाधिकरणगन्धाभावप्रतियोगितायामनवच्छेदकमेव साध्यातावच्छेदकं गन्धवत्त्वमिति नाव्याप्तिरिति भावः ।

3 विशेषाभावकूटातिरिक्तस्य सामान्याभावस्याभावादिति । यत्र घटो नास्तीति प्रतीतिः, तत्र सामान्याभावः सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावः स्वीक्रियते । तत्र न कोऽपि घटोऽस्ति । अतश्च तत्तद्घटविशेषाभावसमुदायो वर्तते । सामान्याभावस्वीकर्तृभिरप्यङ्गीकृतेन विशेषाभावकूटेनैव घटो नास्तीति प्रतीतेरुपपत्तौ नातिरिक्तसामान्याभावः कल्प्यते, मानाभावादिति भावः ।

4 सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावः पृथगेवेति । विशेषाभावकूटादतिरिक्त एवेत्यर्थः । पूर्वमापादितां धूमवान् वह्नेरित्यत्रातिव्याप्तिं परिहरति—वह्निसमानाधिकरणायोगोलकीयसामान्याभावप्रतियोगितावच्छेदकत्वादिति । वह्निसमानाधिकरणो योऽयोगोलकीयसामान्याभावः, अयोगोलकनिष्ठः सामान्यधर्मावच्छिन्नाभावः वह्न्यधिकरणायोगोलकनिष्ठधूमत्वावच्छिन्नाभाव इति यावत् । तत्प्रतियोगितावच्छेदकत्वादित्यर्थः ।

नोक्तदोषः। [1]विशेषाभावकूटस्यैव सामान्याभावरूपत्वे प्रसिद्धरूपवदन्यत्वे वावगते 'वायौ रूपं न वा? वायू रूपवान्न वा?' इति संशयो न स्यात्, विशेषाभावकूटस्य निश्चितत्वादिति दिक्।

[2]अत्र स्वपदं यदवच्छिन्नपरम्। अत एव 'अयं धूमवान् वह्नेः' इत्यत्र धूमस्यापि महानसनिष्ठवह्निसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्नत्वाद्वह्नेरपि धूमव्याप्यतापत्तिरिति दूषणमलग्नकं वेदितव्यम्, धूमस्य वह्नित्वावच्छिन्नायोगोलकीय-वह्निसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वादेव। यस्येति। यदवच्छिन्नस्य साधनसामान्यस्येति यावत। यदवच्छिन्नस्येत्यनेन लक्ष्यानिर्देशः। तदुक्तमनुमान-प्रकाशे रुचिदत्तेन— 'प्रतियोग्यसमानाधिकरणस्य यदवच्छिन्नसमानाधिकरणात्यन्ता-भावस्य प्रतियोगितावच्छेदकं यन्न भवति, तदवच्छिन्नेन केनापि तदवच्छिन्नस्य सामा-नाधिकरण्यं तदवच्छिन्नेन सह व्याप्तिरिति।

नन्वेवम् 'अयं धूमवान् वह्नेः' इत्यत्रातिव्याप्तिः, प्रमेयत्वेन धूमस्यापि तादृशाभाव-प्रतियोगितानवच्छेदकावच्छिन्नत्वादिति चेत्; न, विकल्पासहत्वात्। तथाहि—धूमस्य वह्निव्यापकता प्रमेयत्वेन रूपेणापाद्यते? धूमत्वेन रूपेण वा? आद्ये, इष्टापत्तिः, प्रमेयत्वेन रूपेण धूमे वह्निव्यापकत्वाभ्युपगमे बाधकाभावात्। न द्वितीयः, धूमत्वेन रूपेण धूमस्य प्रतियोगितानवच्छेदकावच्छिन्नत्वाभावात्। प्रकृते [3]अवच्छेदकत्वमन-तिरिक्तदेशवृत्तित्वम्; न त्वन्यदिति न परोक्तदोषावकाशः।

1 सामान्याभावस्य पृथक्त्वे युक्तिमाह—विशेषाभावकूटस्यैवेति। रूपं पृथिव्यां जले तेजसि च वर्तते। पार्थिवं जलीयं तैजसं चेति रूपविशेषाः। वायौ पार्थिवं जलीयं तैजसं च रूपं नास्तीति निश्चयेऽपि वायू रूपवान्न वेति संशयो जायते। तत्र रूपं रूपसामान्याभावश्चेति कोटिद्वयम्। यदि रूपसामान्याभावो रूपविशेषाभावकूट एव, तदा तस्य वायौ निश्चितत्वात् निश्चिते च संशयायोगात् तत्कोटिकः संशयो न स्यात्। अनुभूयते च संशयः। अतो निश्चित-विशेषाभावकूटातिरिक्तः अनिश्चितो रूपत्वावच्छिन्नप्रतियोगिताकाभावः संशयविषयो भवती-त्युपपद्यत इति समुदितार्थः।

2 स्वपदस्य साधनीभूततत्तद्व्यक्तिपरत्वे, महानसीयवह्निसमानाधिकरणाभावप्रतियोगि-तानवच्छेदकत्वात्साधनतावच्छेदकधूमत्वस्य धूमवान् वह्नेरित्यत्रातिव्याप्तिः स्यादिति साधनता-वच्छेदकतत्तद्धर्मावच्छिन्नपरमिति।

3 अवच्छेदकत्वमनतिरिक्तदेशवृत्तित्वं न त्वन्यदिति न परोक्तदोषावकाश इति। प्रति-योगितानवच्छेदकेत्यत्र स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशे, प्रमेयधूमवान् वह्नेरित्यत्र गुरुधर्मा-वच्छिन्नसाध्यके व्यभिचारिण्यतिव्याप्तिः। वह्निसमानाधिकरणप्रमेयधूमाभावप्रतियोगितायां-

ननु—तथापि प्रतियोगिव्यधिकरणपदं व्यर्थम् , व्यावर्त्याभावात् । न च ‘ इदं संयोगि, द्रव्यत्वात् ’ इयत्र द्रव्यत्वहेतुनिष्ठव्याप्ताव्याप्तिवारणार्थं तद्विशेषणमुक्तमिति वाच्यम् , तत्र व्याप्तिलक्षणासत्त्वस्य वक्तुमशक्यत्वात् । तथाहि ; संयोगादिसाधक-द्रव्यत्वहेतावव्याप्तिरिति वदता वक्तव्यम्—संयोगसामान्यात्यन्ताभावसामानाधिकर-ण्याद्वा ? तद्विशेषाभावसामानाधिकरण्याद्वा ? नाद्यः, [1]द्रव्यत्वहेतोः संयोगसामान्यात्य-न्ताभावसामानाधिकरण्यस्य निश्चेतुमशक्यत्वात् । न द्वितीयः, विशेषाभावस्य सामान्या-भावव्याप्तत्वात्तदभावे तदभावात् । अन्यथा व्यापकनिवृत्त्या व्याप्यनिवृत्तेरावश्यकमिति सिद्धान्तभङ्गो वज्रलेपायेत । तस्मात् प्रदियोगिव्यधिकरणपदं व्यर्थमिति चेत्—न , [2]‘अयमेतत्संयोगी, एतत्त्वात् ’ इत्यादावव्याप्तिवारणार्थं तदुपादानादिति । यत्तु संयो गावच्छिन्नप्रदेशे तदभावानुमानं स्यात् , व्याप्तेः सत्त्वादिति ; तन्न, बाधेन तत्रानुमिति-प्रतिबन्धादिति संक्षेपः ।

ननु किं प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधि-करण्यज्ञानमनुमितिहेतुः? किं [3]वा यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति, तेन समं तस्य सामानाधिकरण्यमित्यन्योन्याभावगर्भव्याप्तिज्ञानं तत्कारणम् ?

लाधवेन धूमत्वस्यैवावच्छेदकत्वात् तत्समनियतस्य गुरोः प्रमेयधूमत्वस्यानवच्छेदकत्वात् , तादृशसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य वह्नौ सत्त्वात् । अतोऽनतिरिक्तवृत्तित्वरूपमव-च्छेदकत्वं विवक्षणीयम् । तथाच प्रमेयधूमत्वे गुरावपि प्रमेयधूमाभावप्रतियोगिताशून्यावृत्तित्वं वर्तत इति विवक्षितप्रतियोगितावच्छेदकत्वात्साध्यतावच्छेदकस्य नातिव्याप्तिरिति भावः ।

1 द्रव्यत्वहेतोः संयोगसामान्यात्यन्ताभावसामानाधिकरण्यस्य निश्चेतुमशक्यत्वा-दिति । प्रतियोग्यनवच्छेदकप्रदेशाभावेन संयोगाभाववृत्तेरसंभवः । एवं प्रागभावस्यात्यन्ता-भावविरोधितयोत्पत्तिकालावच्छेदेनापि द्रव्ये संयोगसामान्याभावो न वर्तत इति प्राचीना वदन्ति । नवीनास्तु ध्वंसप्रागभावयोरत्यन्ताभावेन सह विरोधे मानाभावादुत्पत्तिकालावच्छेदेन द्रव्ये संयोगसामान्याभावो वर्तत इत्याहुः । एवं विवादसद्भावात् द्रव्ये संयोगसामान्याभावनिर्णयो नास्तीति भावः ।

2 अयमेतत्संयोगी एतत्त्वादित्यादाविति । एतत्त्ववति वृक्षादौ एतत्संयोगानवच्छेदक-मूलाद्यवच्छेदेनैतत्संयोगत्वावच्छिन्नाभावसत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्यैतत्संयोगत्वे सत्त्वा-दव्याप्तिर्भवतीति भावः ।

3 किं वा यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामा-नाधिकरण्यं व्याप्तिरिति । धूमाधिकरणे पर्वतादौ वह्निमद्भेदो नास्ति, पर्वतो न वह्निमानिति प्रती-

इति विशये, अत्यन्ताभावगर्भव्याप्तावत्यन्ताभावे प्रतियोगिव्यधिकरणत्वप्रवेशादन्योन्याभावगर्भव्याप्त्यपेक्षया गौरवमिति न तज्ज्ञानमनुमितिहेतुः ; किंत्वन्योन्याभावगर्भव्याप्तिज्ञानम्, लाघवात् । ततश्चात्यन्ताभावगर्भव्याप्तिलक्षणकथनमसंगतम्, तज्ज्ञानस्यानुमितिहेतुत्वाभावात् । तदुक्तं **चिन्तामणौ भूयोदर्शनवादे गङ्गेशेन**—"उक्तव्याप्तिप्रकारेष्वन्योन्याभावगर्भव्याप्तिरनुमितिहेतुः, लाघवात् । अतो नाननुगमः । [1]अनौपाधिकत्वं तु तल्लक्षणम्" इति ।

अत्रोच्यते—न व्याप्तिरनुमितिहेतुः । किंतु तज्ज्ञानम् । ततश्च यद्व्याप्तिज्ञानस्यानुमितिहेतुत्वे हेतुतावच्छेदकं लघु भवति, सा व्याप्तिः स्वीकर्तव्या । तादृशी च गुरुशरीरात्यन्ताभावगर्भव्याप्तिः । अत्यन्ताभावविशेषणस्य प्रतियोग्यसमानाधिकरणत्वांशस्य ज्ञानमनुमितिहेतुरिति न तद्विशेषणोपादानम् ; अपितु व्याप्तिस्वरूपकथनाय । ततश्च व्याप्तिलक्षणप्रविष्टप्रतियोगिव्यधिकरणत्वस्य ज्ञानं विना स्वसमानाधिकरणेत्यादिव्याप्तिज्ञाने सति वह्न्यनुमितिसंभवात् संयोगात्यन्ताभावो न प्रतियोग्यसमानाधिकरण इति ज्ञानवतो द्रव्यत्वादिना संयोगाद्यनुमानाच्च साधनसमानाधिकरणो योऽत्यन्ताभावः प्रतियोगिसमानाधिकरणत्वेन न ज्ञायते, तदप्रतियोगित्वेन ज्ञायमानं यत्साध्यं साधननिष्ठतत्समानाधिकरणत्वाज्ञानवत्त्वमेव तद्व्याप्तिज्ञानस्यानुमितिहेतुतावच्छेदकं वक्तव्यम् । तच्चान्योन्याभावगर्भव्याप्तिज्ञानस्य तद्धेतुतावच्छेदकं यत्, तदपेक्षया लघुशरीरमेव भवति । तस्यापि तद्धेतुतावच्छेदकं नोक्तस्वरूपम् ; अपितु तज्ज्ञानत्वमेव । तथासति संयोगवदन्योन्याभावोऽव्याप्यवृत्तिरिति ज्ञानवतोऽपि द्रव्यत्वेन संयोगाननुमानापातात् । किंतु तत्रापि साधनसमानाधिकरणो योऽन्योन्याभावः प्रतियोगितावच्छेदकसमानाधिकरणत्वेन न ज्ञायते, तत्प्रतियोगितानवच्छेदकत्वेन ज्ञायमानं यत्साध्यं साधननिष्ठतत्सामानाधिकरण्यज्ञानमेव तदवच्छेदकं वाच्यम् । इदं च

तेरभावात् । अपितु घटवद्भेदो वर्तते । तस्य न वह्निमान् प्रतियोगीति लक्षणसमन्वयः । भेदस्य व्याप्यवृत्तित्वात् एतत्संयोगि एतत्त्वादित्यत्राव्याप्तिविरहेण तद्वारकं विशेषणं नोपादेयमित्यत्र लाघवं बोध्यम् ।

1 अनौपाधिकत्वं तु तल्लक्षणमिति । व्याप्तिज्ञापकमित्यर्थः । मणिकारवाक्यार्थविपर्यासेनान्योन्याभावघटितव्याप्त्यपेक्षयात्यन्ताभावघटितव्याप्तिस्वरूपे मूलोक्त एव लाघवं प्रदर्श्य, तस्यैवानुमित्युपयोगित्वं सप्रपञ्चं निरूपयितुं प्रतिजानीते—अत्रोच्यत इति ।

**उभयनिरूप्यतया तु संबन्धव्यपदेशः; नोभयवृत्तितया, तदभावात्। इदमेव व्याप्यत्वमित्यभिधीयते। एवंविधात्यन्ताभावाप्रतियोगित्वमेव व्यापकत्वम्। सामान्यलक्षणं व्याप्यत्वव्यापकत्वयोर्धर्मवत्त्वमेव। केवलव्यतिरेकिण्यप्यस्या व्याप्तेर्ज्ञानादनुमितिरुत्पद्यते। साप्येवंविधा भवति। एतावानेव परं विशेषः—अत्र व्यतिरेकयोरेव सामानाधिकरण्यप्रतिसंधानम्। अन्यत्र साध्यसाधनयोरिति। यद्वा व्यतिरेकव्याप्त्या तत्रान्वयव्याप्त्यनुमानानन्तरमनुमितिरस्तु।**

तदपेक्षया गौरवग्रस्तमेव, [1]स्थानद्वयेऽवच्छेदकपदार्थस्याधिकस्य प्रवेशात्। तस्मात् गौरवस्य वैपरीत्यमापतितम्। ततश्चात्यन्ताभावगर्भव्याप्तिलक्षणकथनमेव युक्तम्, तज्ज्ञानस्यैवानुमितिहेतुत्वादिति भावः।

ननु सामानाधिकरण्यं समानेनाधिकरणेन संबन्धः। संबन्धत्वं च विशिष्टधीनियामकत्वम्। तच्च जनकत्वगर्भम्। [2]जनकत्वं च नियमघटितम्। ततश्चात्माश्रयत्वमित्यत आह—**उभयनिरूप्येति। तदभावादिति।** उभयवृत्तित्वरूपसंबन्धलक्षणलक्षितत्वाभावादित्यर्थः। अत एव नात्माश्रयादिरिति भावः। यद्वा सामानाधिकरण्यस्योभयनिष्ठत्वाभावात् संबन्धव्यपदेशो न घटत इत्याशङ्क्य, तस्योभयनिष्ठत्वाभावेऽप्युभयनिरूप्यतया संबन्धव्यपदेशो युज्यत इति नोक्तदोष इत्याह—**उभयनिरूप्येति।** ननु व्याप्तिलक्षणान्तर्गतयत्तदादिशब्दार्थपर्यालोचनानां साधनादिघटितत्वादात्माश्रयः स्यादित्यत आह—**इदमेवेति।** एतादृशसामानाधिकरण्याश्रयत्वमेवेत्यर्थः। साक्षाद्व्याप्त्याश्रयत्वानभ्युपगमान्नात्माश्रयादिरिति भावः।

नन्वेतादृशाभावाप्रतियोगिना साध्येनेत्यर्थकरणे आत्माश्रयः स्यादित्याशङ्क्याह—**एवंविधेति।** प्रतियोगिसमानाधिकरणात्यन्ताभावेतरस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेवेत्यर्थः। न तु व्याप्तिप्रतियोगित्वादिर्व्यापकत्वम्, येनात्माश्रयः स्यादिति भावः। अननुगतिभीरूणां मतमाह—**सामान्येति।** व्यापकस्यापि क्वचित् व्याप्यत्वात्

1 स्थानद्वये अवच्छेदकपदार्थस्याधिकस्य निवेशादिति। प्रतियोगितावच्छेदकसमानाधिकरणत्वेन न ज्ञायते इत्यत्र, अन्योन्याभावप्रतियोगितानवच्छेदकं साध्यमित्यत्र चावच्छेदकपदार्थस्य निवेशादित्यर्थः।'

2 जनकत्वं च नियमघटितमिति। नियतपूर्ववृत्तित्वं जनकत्वम्। नियतत्वं व्यापकत्वम्। तच्च व्याप्तिनिरूपकत्वमिति भावः।

नन्‍ु तदधिकरणाधिकरणकत्वं सामानाधिकरण्यम् । तच्च व्यापकस्यापि भवतीति तस्यापि स्वापेक्षया व्याप्यत्वप्रसङ्ग इति चेत्; न, यत्सामानाधिकरण्यमित्युक्तत्वात् । न ह्येतस्य यत्सामानाधिकरण्यं तदेव तद्व्यापकस्येति संभवति, विशेषणभेदात् । यद्वा, अभेदेऽपि व्याप्यव्यापकभावो मन्तव्य इत्युपाधिप्रस्तावे वक्ष्यते ।

व्याप्यस्यापि क्वचित् व्यापकत्वात् परस्परं नातिव्याप्तिरिति भावः । ननु कथमिदं सकलसाधारणम्? 'पृथिवी इतरेभ्यो भिद्यते, पृथिवीत्वात्' इत्यत्राव्याप्तेरित्यत आह—केवलव्यतिरेकिण्यपीति । व्यतिरेकिणि व्यतिरेकिव्याप्तिज्ञानम्, अन्वयिन्यन्वयव्याप्तिज्ञानमनुमितिहेतुः, तृणारणिमणिन्यायादिति भावः ।

ननु सति गत्यन्तरे तृणारणिमणिन्यायानुसरणमसंगतम् । प्रकृते गत्यन्तरमस्ति । ततश्चानुमितित्वावच्छिन्नानुमितिं प्रत्यनुगतकारणाभावादननुगमः । न चोक्तान्यतरत्वेनानुगम इति वाच्यम्, अन्वयव्यतिरेकव्याप्त्यन्यतरत्वेन तज्ज्ञानाभावेऽपि केवलं व्याप्तिज्ञानेऽप्यनुमितेर्जायमानत्वादित्यरुचेराह— यद्वेति । निरुपाधिव्यतिरेकसहचारेणान्वयव्याप्तिग्रहे सर्वत्रानुमितौ तज्ज्ञानमेव हेतुरिति भावः ।

ननु त्वदुक्तव्याप्तिलक्षणं व्यापकेऽतिप्रसक्तमिति शङ्कते—नन्विति । **तदधिकरणाधिकरणंकत्वमिति** । [1]साध्याधिकरणाधिकरणकत्वमित्यर्थः । नन्वतिव्याप्त्युद्धारः कथमित्याशङ्क्याह—**यदित्यादि** । **सामानाधिकरण्यम्** । वर्तत इति शेषः । **तदेव तद्व्यापकस्येति संभवतीति** । विशेषणभेदाद्विशिष्टभेद इति नातिव्याप्तिरिति भावः । ननु विशेषणभेदाद्विशिष्टभेदाभ्युपगमे प्रतिजन्यवस्तु तत्तत्क्षणविशिष्टत्वस्यावश्यकत्वेन क्षणभङ्गुरताप्रसङ्गात्प्रत्यभिज्ञानं क्वचिदपि न स्यादित्यरुचेराह—**यद्वेति** ।

न्यायादिगम्यं जगदेकनाथं
नित्यं विभुं निर्जितदैत्यबृन्दम् ।
लक्ष्मीनृसिंहं गरुडाचलस्थ-
मशेषतत्त्वार्थविदे प्रपद्ये ॥

1 साध्याधिकरणाधिकरणकत्वमिति । साध्याधिकरणमधिकरणं यस्य, तत्त्वमित्यर्थः । साध्याधिकरणवृत्तित्वमिति यावत् ।

ननु किं भूयोदर्शनेन व्याप्तिर्गृह्यते? उत एकदर्शनेनापि? तत्र केचित्—न प्रथमदर्शनादेव व्याप्तिग्रहः संभवेत्, तदनन्तरमपि व्याप्ति-संदेहात्। अतो भूयःसाहित्यसंवेदन एव नियमसंवेदनव्यवस्थिरिति। तदसत्, त्रिचतुरसाहित्यसंवेदनेऽपि क्वचित् व्याप्तिसंदेहस्य तदवस्थत्वात्।

उच्यते—बाधकतर्कसहकृतैरिन्द्रियादिभिर्व्याप्तिः परिच्छिद्यते। भूयस्त्वादिकमनुपयुक्तम्। न हि बहुषु स्थानेषु दर्शनं भूयोदर्शनम्। नापि बहु दर्शनं भूयोदर्शनं, व्यभिचारिसाधारण्यात्।

बाधकतर्कसहकृतमिन्द्रियादिकं व्याप्तिग्राहकमिति सिद्धान्तयिष्यन् प्रथमं विचाराङ्गं संशयं दर्शयति—**किं भूयोदर्शनेनेति। तदनन्तरमिति**। प्रथमदर्श-नानन्तरमित्यर्थः। **भूयः साहित्यसंवेदन एवेति**। तादृशसंवेदने सत्येवेत्यर्थः। **नियमसंवेदनव्यवस्थितिरिति**। व्याप्तिज्ञाननिश्चय इत्यर्थः। भूयोदर्शनगम्यत्वं व्याप्तेरिति वदता वक्तव्यम्—दर्शनानां प्रत्येकं व्याप्तिग्राहकत्वं वा? मिलितानां वा? न तावदाद्यः, प्रत्येकमहेतुत्वात्। न द्वितीयः, आशुविनाशिनां क्रमिकाणां मेलका-भावात्। यत्तु इन्द्रियसहकृतास्तावज्ज्ञानजन्यसंस्कारा व्याप्तिग्रहहेतवो भवन्तु, इन्द्रियस्य प्रत्यभिज्ञायां तथात्वकल्पनादिति। तन्न। प्रत्यभिज्ञाने समानविषये स्मरणे च संस्कारो हेतुः। ततश्च सहचारविषयसंस्कारेण व्याप्तिज्ञानं कथं जन्येत? अतिप्रसङ्गात्। अपिच भूयःसु स्थलेषु दर्शनं वा? भूयसां साध्यसाधनानां दर्शनं वा? भूयांसि दर्शनानि वा? नाद्यः, एकत्र पृथिव्यादौ रूपरसयोर्व्याप्यव्यापकयोर्व्याप्तिग्रहात्। न द्वितीयः, द्रव्यत्व-घटत्वयोर्भूयस्त्वाभावेऽपि व्याप्तिग्रहात्। नापि तृतीयः, एकत्र धारावाहिके व्याप्तिधी-प्रसङ्गात्। तस्मात् भूयोदर्शनं न व्याप्तिधीहेतुरित्येतत्सर्वं मनसि निधाय दूषणान्तरेण दूषयति—**तदसदिति। त्रिचतुरेति**। उपलक्षणं चैतत्। शतशो दर्शनेऽपीत्यर्थः। **क्वचिदिति**। पार्थिवत्वलोहलेख्यत्वयोरित्यर्थः। **न नियम इति**। नियमग्रहो न संभवतीत्यर्थः। व्यभिचारोपलब्धेर्वज्रलेपायितत्वादिति भावः।

गौतममतसिद्धान्तं वक्तुं प्रतिजानीते—**उच्यत इति। इन्द्रियादिभिरिति**। आदिशब्देनाप्तोपदेशादयो गृह्यन्ते। इदं च तर्कपरिच्छेदे व्याप्तिग्राहकविचारावसरे सम्यग्व्याख्यातमस्माभिः। तत्रैवानुसंधेयम्। विस्तरभयान्नेह लिख्यते।

ननु सकलोपसंहारेण व्याप्तिग्रहणमिष्यते । तथाच सर्वासां व्यक्तीनां व्याप्तिग्रहणसमये भानं स्यात् । अन्यथानुमितौ ययोर्लिङ्गलिङ्गिनोर्भानं तयोर्व्याप्तेरग्रहणात्कथं तदनुमितिरुत्पद्येत ? इत्थमपि वा यद्यनुमितिरुत्पद्यते, तदातिप्रसक्तिः । ततो बलात् सामान्यलक्षणया प्रत्यासत्त्या सर्वासामेव व्याप्यव्यापकव्यक्तीनां व्याप्तिज्ञानविषयत्वमिति ।

ननु भूयोदर्शनं विना कथं व्याप्तिग्रह इत्यत आह—**भूयस्त्वादिकमिति** । अनुपयुक्तत्वमेव दर्शयति—**न हीति** । एकत्र रूपरसयोर्व्याप्तिग्रहादिति दूषणे सत्यपि दूषणान्तरमाह—**व्यभिचारीति** । ननु बाधरूतर्कसङ्कुतेन्द्रियादिना कथं व्याप्तिग्रहः स्यात् ? संबन्धाभावादिति चेत्; न, संयुक्तविशेषणतायाः प्रत्यासत्तेः सत्त्वादिति भावः ।

ननु सकलधूमनिष्ठव्याप्तिग्रहणसमये सर्वासां व्यक्तीनामभानेऽनुमितिविषयत्वेनाभिमतयोर्लिङ्गलिङ्गिनोर्व्याप्तेरग्रहात्तदनुमितिः कथमुत्पद्यते ? भाने वा सर्वव्यक्तिभानं सामान्यलक्षणप्रत्यासत्तिमन्तरा न संभवतीति साभ्युपगन्तव्येति शङ्कते—[1]**नन्विति** । **लिङ्गलिङ्गिनोरिति** । अनुमितौ लिङ्गभानपक्षमाश्रित्योक्तम् । **कथमिति** । कारणाभावादिति भावः । **सामान्येति** । इन्द्रियसंबद्धविशेषगतयेत्यर्थः । यद्वा तद्व्यतिरिक्तयेत्यर्थः । अयमाशयः—सकलधूमव्यक्तिविषयो व्याप्तिग्रहः सामान्यलक्षणप्रत्यासत्त्या भवति । अन्यथा पर्वतीयधूमनिष्ठव्याप्त्यग्रहे तस्माद्वह्न्यनुमितिः कथं जायते ? [2]सामान्यलक्षणप्रत्यासत्तिरिन्द्रियसंबद्धविशेषणता, अतिरिक्तैव वा । तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसंनिकर्षस्य हेतुत्वेनानागतादौ संयोगादेरभावादिति ।

1 लिङ्गलिङ्गिनोरिति । लिङ्गं साधनं हेतुः । लिङ्गी साध्यम् । अनुमितौ लिङ्गभानपक्षमाश्रित्येति । लिङ्गोपधानमते वह्निव्याप्यधूमवान्पर्वतो वह्निमानित्येवानुमितिः । एतच्च युक्त्योपपादयिष्यते ।

2 सामान्यलक्षणप्रत्यासत्तिः इन्द्रियसंबद्धविशेषणता, अतिरिक्तैव वेति । स्वजन्यज्ञानप्रकारत्वरूपेन्द्रियसंबन्धाश्रयस्य सामान्यस्य व्यक्तिषु धर्मिताख्यस्वरूपसंबन्धरूपेत्यर्थः । तथाच सामान्यं लक्षणं निरूपकं यस्या इति व्युत्पत्त्या चक्षुरादिजन्यज्ञानप्रकारीभूतधूमत्वादिसामान्यनिरूपिता धर्मिताख्यविशेषणतैव सामान्यलक्षणा । सा चाभावादिग्राहकचक्षुःसंयुक्तविशेषणतादिवत् विशेषणताप्रत्यासत्त्यन्तर्गतैव । अथवा, इन्द्रियसंबद्धा, इन्द्रियसंबद्धनिष्ठविशेष्यतानिरूपिता विशेषणता प्रकारता यस्या घटत्वादिरूपप्रत्यासत्तेः, सा इन्द्रियसंबद्धविशेषणता । चक्षुरादिजन्यज्ञानप्रकारीभूतसामान्यनिरूपितधर्मितायाः तादृशसामान्यस्य वा प्रत्यासत्तित्वे,

तदसत् । यद्धर्मपुरस्कारेण भवता व्याप्तिग्रहणमङ्गीक्रियते, तद्धर्मवतो रेवानुमितिविषयत्वमस्तु । एतावताप्यतिप्रसक्तिनिवारणं भवत्येवेति किमिति सामान्यलक्षणया प्रत्यासत्त्या सर्वव्यक्तीनां भानमास्थेयम् ?

सामान्यलक्षणप्रत्यासत्तिस्वीकर्त्रानुमानप्रामाण्यमङ्गीकर्तव्यम् । एवं चानुमानादेव देशान्तरीयधूमोपस्थितिसंभवे सति किं सामान्यलक्षणप्रत्यासत्त्या ? न च वाच्यम्—व्याप्त्यादिस्मृतिविलम्बेनानुमाने विलम्बितत्वमिति, अनुमानानवतारदशायामपि व्यभिचारसंशय इत्यत्र प्रमाणाभावात् । तथाच सर्वत्र तत्संशयो नास्त्येव, क्वचित्कोटिस्मरणादिविरहस्यापि संभवात् । यत्र तत्संशयस्तत्र विशेषादर्शनादप्रसिद्धज्ञानजनकत्वं क्वचित्कल्पनीयम् । तच्चावश्यकल्पनीयत्वेनानुमानमेव कल्प्यते, क्लृप्तत्वात् । तस्मान्न सामान्यलक्षणप्रत्यासत्तिः ।

ननु सामान्यलक्षणप्रत्यासत्त्यकल्पने पक्षवृत्तिधूमे व्याप्त्यग्रहात्परामर्शाभावेनानुमानमपि न स्यादिति चेत्; न, व्याप्यतावच्छेदकप्रकारकज्ञानस्यैवानुमितिहेतुत्वमिति [1]परसिद्धान्तात् । अत एव सामान्यलक्षणप्रत्यासत्त्यकल्पने पक्षीयसाध्यज्ञानाभावेन विशेषणज्ञानाभावान्नानुमितिरिति निरस्तम्, विशिष्टवैशिष्ट्यावगाहिज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्यैव कारणत्वमिति परसिद्धान्तात् । न च—अनागतहेतुज्ञानार्थं सामान्यलक्षणप्रत्यासत्त्यनभ्युपगमेऽप्यनागतगोचरप्रत्यासत्तिसिद्ध्यर्थं तत्स्वीकार आवश्यकः, संशयेऽनागतविशेष्यके विशेष्यप्रत्यासत्तिजन्यत्वस्वीकारादिति वाच्यम्; संशयस्य मानसत्वेनाप्युपपत्तेः प्रत्यासत्त्यर्थं तदकल्पनात्; अतीन्द्रियविशेष्यकसंशयवत् । चक्षुरन्वयाद्यनुविधानस्य सहचारादिसाधारणधर्मदर्शनोपक्षीणत्वात्; अन्यत्र बाधकाभावेन तस्य

इन्द्रियभेदेन पुरुषभेदेन च कार्यकारणभावबाहुल्यं कारणतावच्छेदकगौरवं चेत्यस्वरसादाह—अतिरिक्ता वेति । संयोगादिलक्षणप्रत्यासत्तिघटकादतिरिक्ता वेत्यर्थः । तच्चातिरिक्तं धूमत्वादिरूपसामान्यधर्मप्रकारकं ज्ञानं निर्विकल्पकसाधारणं धूमत्वादिज्ञानं वा । षोढा संनिकर्षपरिगणनं तु लौकिकसंनिकर्षाभिप्रायेण । इत्थं च सामान्यं लक्षणं विषयतया निरूपकं यस्याः सा सामान्यलक्षणेति व्युत्पत्तिर्बोध्या ।

34 परसिद्धान्तादिति । परस्य सामान्यलक्षणप्रत्यासत्तिमनङ्गीकुर्वतो मीमांसकादेः सिद्धान्तादित्यर्थः । वह्निव्याप्यो धूमः, धूमवान् पर्वत इति ज्ञानद्वयादेवानुमित्युपपत्तेर्व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शस्यानपेक्षणात् पक्षवृत्तिधूमे व्याप्तिग्रहो नावश्यक इति भावः । अत एवेति । विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्यैव कारणत्वं, न तु विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वमिति वक्ष्यमाणयुक्तेरेवेत्यर्थः ।

चाक्षुषत्वात् । अत एव व्यभिचारसंशयोपपादकत्वेनैवानुमानमुदयनेन [1]न्यायकुसुमाञ्जलौ "शङ्का चेदनुमास्त्येव" इत्यनेन साधितम् । तस्मात् व्यभिचारसंशयानुरोधेन न सामान्यलक्षणप्रत्यासत्तिसिद्धिरित्येतत् सर्वं मनसि निधाय प्रकारान्तरेणापि दूषयति —तदसदिति ।

यत्तूक्तमनुमानप्रकाशे रुचिदत्तेन—'वह्निमान्' इत्यनुमितेर्विशेषणज्ञानजन्यत्वानुमानादेव सामान्यलक्षणप्रत्यासत्तिसिद्धिः । न च दृष्टान्ताभावः, तथा सति तत एव 'गौः' इति विशिष्टज्ञानेऽपि विशेषणज्ञानजन्यत्वानुमितिविरहान्निर्विकल्पकासिद्धिप्रसङ्गात् । यदि च साध्यप्रसिद्धिपदार्थोपस्थित्यादेरनुमित्यादौ विशेषणज्ञानत्वेन न हेतुत्वम् ; किंतु विशेषणतावच्छेदकप्रकारकज्ञानत्वेन ; विशिष्टवैशिष्ट्यज्ञाने सर्वत्र तथैव कल्पनादित्युच्यते, एवमपि निर्विकल्पकासिद्धिस्तदवस्था । यदि च [2]यद्विशेषयोरिति न्यायेन विशिष्टज्ञानमात्रे विशेषणज्ञानत्वेन हेतुत्वे बाधकाभाव इति मन्यसे, तदा प्रकृतेऽपि तुल्यम् । यद्यपि परस्य निर्विकल्पकासिद्धिरेव,[3] तथापि तत्साधकयुक्तिं परोऽप्यङ्गीकारणीय इति स्वमतावष्टम्भेनेदमुक्तमिति ध्येयम् । न चानुमानादेव विशेषणज्ञानमस्त्विति वाच्यम् , अनवस्थानात् । तस्मात्तत्राक्षिप्ता सामान्यलक्षणप्रत्यासत्तिर्व्याप्त्यादिकमपि ग्राहयतीति तत्त्वमिति । तत्तुच्छम् , अनुमानादेव विशेषणज्ञानसिद्धेः । न चानवस्था, विषयान्तरसंचारात् क्वचिद्विश्रान्त्युपपत्तेः । अन्यथा प्रामाण्यस्याप्यनुमानग्राह्यत्वं न स्यात् । तदनुमापकलिङ्गपक्षव्याप्त्यादिज्ञाने प्रामाण्यसंशये सति स्वविषयनिश्चयार्थं प्रामाण्यानुसरणे कारणमुख्यनवस्था दुष्परिहरा स्यादिति ध्येयम् ।

1 न्यायकुसुमाञ्जलाविति । कालान्तरे देशान्तरे वा धूमो वह्निं व्यभिचरिष्यतीति व्यभिचारसंशयादनुमानं न प्रमाणमिति शङ्कायां, "शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम्" इति संग्रहकारिकामुपन्यस्य "कालान्तरे कदाचिद्व्यभिचरिष्यतीति कालं भाविनमाकलय्य शङ्केत । तदाकलनं च नानुमानमवधीर्य कस्यचित् । अनाकलने वा कमाश्रित्य व्यभिचारः शङ्क्येत ? तथाच सुतरामनुमानस्वीकारः । एवं देशान्तरेऽपि वक्तव्यम्" इति ग्रन्थेन समाहितमाचार्यैः । तत्र च व्यभिचारशङ्कोपपादकज्ञानमनुमानादेव भवतीति स्पष्टं ज्ञायते ।

2 यद्विशेषयोरिति न्यायेनेति । 'यद्विशेषयोः कार्यकारणभावोऽसति बाधके स तत्सामान्ययोरपि' इति न्यायाकारः ।

3 निर्विकल्पकासिद्धिरेवेति । मीमांसकमते निर्विकल्पकानङ्गीकारादिति भावः । श्रोतृसुखं स्यादित्युपहासः ।

नन्तु यदि प्राक् पर्वतीयवह्निधूमव्यक्ती सामान्येन रूपेण न प्रकाशिते, तदा 'अयं धूमो वह्निव्याप्यो न वा' इति संदेहः स्यात् । तदा च कुतानुमितिः ? मम तु पर्वतीयवह्निधूमव्याप्तेरेव पूर्वं भानादनन्तरं पर्वतवर्तिधूमदर्शनात्संस्कारोद्बोधात् व्याप्तिस्मृतिरुत्पद्यते । ततो न व्याप्तिसंदेह इति ।

मैवम् । नावश्यं धूमदर्शनात् व्याप्तिस्मरणेन भवितव्यमित्यस्ति नियमः । ततो यदा व्याप्तिस्मरणं नोत्पद्यते, तदा कथं संदेहनिवृत्तिः ?

यत्तु—'गौः' इति विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वाभावे निर्विकल्पकासिद्धिप्रसङ्ग इति । तत्तुच्छम् । सामान्यलक्षणप्रत्यासत्तिमनङ्गीकुर्वाणं प्राभाकरं प्रति निर्विकल्पकासिद्धिप्रसङ्गः स्यादित्युत्तरं श्रोतृसुखं स्यात्, तन्मते तदभावात् । न च तत्साधकयुक्ति परोऽप्यङ्गीकारणीय इति वाच्यम्, तत्साधकयुक्तेराभासत्वात् । किंच यत्किंचिद्विशेषणज्ञानजन्यत्वेनापि तदुपपत्तिरिति दिक् ।

**यद्धर्मपुरस्कारेणेति** । धूमत्ववह्नित्वोभयधर्मपुरस्कारेणेत्यर्थः । **भवता** । सामान्यलक्षणप्रत्यासत्त्यभ्युपगन्त्रेत्यर्थः । **तद्धर्मवतो रेवेति** । धूमत्ववह्नित्वधर्मवतोर्धूमाग्न्योरित्यर्थः । सामान्यलक्षणानभ्युपगमेऽतिप्रसङ्गः स्यादित्यत आह—**एतावतापीति** । **किमितीति** । सर्वव्यक्तीनां सामान्यलक्षणया प्रत्यासत्त्या भानं किमित्यास्थेयमिति योजना ; प्रयोजनाभावात्प्रमाणाभावाच्चेति भावः ।

अथ सामान्यलक्षणप्रत्यासत्त्यनभ्युपगमे सर्वासां व्यक्तीनामप्रतीतौ तन्निष्ठव्याप्त्यग्रहात्कथमनुमितिरुत्पद्यत इति शङ्कते—**नन्विति** । व्याप्तिसंदेहेऽपि जायतामनुमितिरित्याशङ्क्याह—**तदा चेति** । [1]यत्संशयन्यायेन व्याप्तिनिश्चयस्यैवानुमितिजनकत्वादिति भावः । **मम त्विति** । सामान्यलक्षणप्रत्यासत्त्यभ्युपगन्तुरित्यर्थः । **भानादिति** । सामान्यलक्षणप्रत्यासत्त्येति भावः । **अनन्तरमिति** । व्याप्तिग्रहानन्तरमित्यर्थः । **ततो न व्याप्तिसंदेह इति** । ततश्चानुमितिरुत्पद्यत इति भावः ।

परिहरति—**मैवमिति** । धूमदर्शनस्य नियमेन व्याप्तिस्मृतिहेतुत्वं न संभवतीत्याह—**नावश्यमिति** । अस्तु ; प्रकृते किमायातम् ? तत्राह—**तत इति** । ततश्च

1 यत्संशयन्यायेनेति । 'यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ, तन्निश्चयस्तद्धेतुरिति न्यायाकारः ।

तत्रानुमितिरेव नोत्पद्यतामिति चेत् ; न । अस्माकमप्येवमस्तु यदा व्याप्ति-संदेहस्तदानुमितिर्नोत्पद्यत इति । भवतां सर्वदा संदेहेन भवितव्य-मिति चेत् ; न । भवेदेवं यदि सर्वत्र तथाविधसंदेहकारणं समानधर्मदर्श-नादि स्यात् ।

व्यर्थविशेषणे व्याप्तिर्नास्तीति केचित् । तन्न, विरुद्धसव्यभिचार-व्याप्यत्वासिद्ध्यादीनां व्याप्तिभङ्गलिङ्गानामभावात् । तथाहि—'घटोऽ-नित्यः, प्रमेयत्वे सति कृतकत्वात्' इत्ययं न विरुद्धः, साध्यसमानाधिकरण-त्वात् । नापि साधारणानैकान्तिकः, साध्याभावासामानाधिकरण्यात् । नाप्यसाधारणः, सपक्षवृत्तित्वात् । नापि व्याप्यत्वासिद्धः । असिद्धिरत्रा-ग्रहणम् । तच्च किं प्रतिकूलतर्कसद्भावात् ? उतानुकूलतर्काभावात् ? आहोस्विदुपाधिसंदर्शनात् ? नाद्यः, तस्याभावात् । न द्वितीयः, य एव विपक्षे बाधकस्तर्कः केवलव्याप्तिग्रहे स एव विशिष्टेऽप्यस्तु । न तृतीयः ।

परमते संदेहनिवृत्त्यभावात् कथमनुमितिरुत्पद्यत इति भावः । शङ्कते—तत्रेति । व्याप्तिसंदेह इत्यर्थः । प्रतिबन्द्या परिहरति—अस्माकमपीति । सामान्यलक्षण-प्रत्यासत्त्यनभ्युपगन्तॄणामित्यर्थः । तन्निश्चयेऽनुमितिरुत्पद्यत इति भावः । शङ्कते—भवतामिति । व्याप्तिस्मृत्यभावादिति भावः । तथाविधसंदेहः । धूमो वह्निव्याप्यो न वेति संदेहः । सर्वत्र तथाविधसंदेहकारणं स्याद्यदि संदेहेन भवितव्यमिति योजना ।

ननु भूयोदर्शनस्य व्याप्तिग्राहकत्वाभावे 'घटोऽनित्यः, प्रमेयत्वे सति कृतक-त्वात्' इत्यादावपि व्याप्तिग्रहः स्यादित्याशङ्क्याह—व्यर्थविशेषण इति । हेत्वा-भासानामन्यतमाभावाद्व्याप्तिरस्त्वित्यभिप्रायेण परिहरति—तन्नेति । न विरुद्ध इति । न साध्याभावव्याप्त इत्यर्थः । तत्र हेतुमाह—साध्येति । सद्धेतुवदिति भावः । नापि साधारण इति । न विपक्षवृत्तिरित्यर्थः । तत्र हेतुमाह—साध्या-भावेति । नाप्यसाधारण इति । न सकलसपक्षव्यावृत्त इत्यर्थः । तत्र हेतुमाह—सपक्षेति । नापि व्याप्यत्वासिद्धः । नानिश्चितपक्षवृत्तिरित्यर्थः । ननु कथमसिद्धेरत्राग्रहणं स्यादित्याशङ्क्याह—तच्चेति । असीद्धेरग्रहणमित्यर्थः । तस्येति । प्रतिकूलतर्कस्येत्यर्थः । केवलव्याप्तिग्रह इति । कृतकत्वनिष्ठव्याप्तिग्र

उपाधिः केवले चेन्नास्ति, तदा विशिष्टे भविष्यतीत्यसंभावितमेव । साधनांश-स्योपाधित्वमस्तीति चेत्; न, 'इन्द्रनीलं गन्धवत्, प्रमेयत्वे सति नीलरूपाधिकरणत्वात्' इत्यत्रैकस्य साधनव्यापकत्वात्; अपरस्य साध्या-व्यापकत्वात् । साध्यसाधनसंबन्धव्यापकं नीलरूपाधिकरणत्वं भवत्येवेति चेत्; न, तथापि साधनव्यापकत्वात्प्रमेयत्वविशिष्टनीलरूपाधिकरणत्व-व्याप्यत्वात् । 'इदमभिधेयम्, भावत्वानधिकरणत्वे सति प्रमेयत्वात्' इत्यत्र कः प्रतीकारः ? उभयोरपि साधनव्यापकत्वात् ।

अथ— प्रमेयत्वे सति कृतकत्वं नानित्यत्वव्याप्यम्, व्यभिचारा-वारकविशेषणयोगित्वात् भूतत्वे सति मूर्तत्वादितिवदित्युच्यते; तर्हि साध्या-भावसामानाधिकरण्ये साध्ये बाधात् । प्रत्युत, इदमनित्यत्वव्याप्यं तद-भावासमानाधिकरणत्वादिति तद्व्याप्यत्वस्यैव साधयितुं शक्यत्वात् । तत्कथं व्यर्थविशेषणत्वमिति ।

इत्यर्थः । **स एवेति** । अनुकूलतर्क एवेत्यर्थः । **विशिष्ट इति** । प्रमेयत्वविशिष्ट-कृतकत्वहेतावित्यर्थः । शङ्कते—**साधनांशस्येति** । कृतकत्वभागस्येत्यर्थः । व्यर्थ-विशेषणस्थले सर्वत्र साधनांशस्य नोपाधित्वम्, साध्यव्यापकत्वाभावादिति परिहरति—**इन्द्रनीलमिति** । **अपरस्येति** । नीलरूपाधिकरणत्वस्येत्यर्थः । **साध्येति** । मल्लिकाकुसुमादौ व्यभिचारादिति भावः । शङ्कते—**साध्यसाधनेति** । साधन-समानाधिकरणत्वान्नायमुपाधिरिति परिहरति—**नेति** । **तथापीति** । साध्यसाधनसंब-न्धव्यापकत्वेऽपीत्यर्थः । साधनव्यापकत्वमेव दर्शयति—**प्रमेयत्वविशिष्ट इति** । इतोऽपि साधनांशस्य नोपाधित्वमिति दर्शयति—**इदमिति** । **उभयोरपीति** । भावत्वा-नधिकरणत्वप्रमेयत्वयोरित्यर्थः ।

ननु—व्यर्थविशेषणस्थले न व्याप्तिग्रहः, व्यभिचारावारकविशेषणयोगित्वादिति चोदयति—**अथेति** । **भूतत्वे सतीति** । 'इदं क्रियावत्, भूतत्वे सति मूर्तत्वात्' इत्यत्र भूतत्वे सतीति विशेषणस्य व्यभिचारावारकत्वेन न व्याप्तिग्रहः; तद्वदत्रापीति भावः । प्रमेयत्वे सति कृतकत्वहेतोरनित्यत्वव्याप्यत्वानङ्गीकारेऽनित्यत्वाभावव्याप्यत्व-मङ्गीकर्तव्यम् । एकतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् । ततश्च बाध इति परिहरति—**तर्हीति** । प्रमेयत्ववदुभयव्याप्यत्वमस्तीत्याशङ्क्याह—**प्रत्युतेति** ।

अत्रोच्यते । अत्र केचित्—नायं व्याप्तिदोषः; किं त्वधिकं नाम निग्रहस्थानम् । अनित्यत्वज्ञापनस्य कृतकत्वेनैव कृतत्वात् प्रमेयत्वमधिकम् । यद्वा-प्रमेयत्वस्याकाङ्क्षैव नास्तीत्यपार्थकं नाम निग्रहस्थानम् । यत्र द्वयमपि साध्यं भवति, तत्रापि प्रथमेनैवाकाङ्क्षापूरणादन्यत्राकाङ्क्षाविरहः ।

वस्तुतस्तु व्यर्थविशेषणे व्याप्तिग्रहाभाव एव । तथाहि—'इदमनित्यत्वव्याप्यं, साध्याभावासमानाधिकरणत्वात्' इत्यत्र 'इदमनित्यत्व-

इदमिति । प्रमेयत्वे सति कृतकत्वमित्यर्थः । अनित्यत्वव्याप्यमिति । [1]अनित्यत्वनियतसमानाधिकरणमित्यर्थः । तदभावेति । अनित्यत्वाभावासमानाधिकरणत्वादित्यर्थः ।

सिद्धान्तं वक्तुं प्रतिजानीते—अत्रोच्यत इति । केचित् । भूषणकारादय इत्यर्थः । अधिकमिति । हेतूदाहरणाधिकमधिकमित्यर्थः । हेत्वाधिक्याभावान्नाधिकाख्यनिग्रहस्थानमित्याशङ्क्याह—अनित्यत्वेति । अधिकाख्यनिग्रहस्थानस्य पुरुषदोषत्वं नियमकथायामेव ; न वस्तुदोषत्वमित्यरुचेराह—यद्वेति । यद्वा तल्लक्षणाक्रान्तत्वाभावान्नाधिकमित्यरुचेराह—यद्वेति ।

ननूपायस्यानुपायता दोषः; न तूपायान्तरसत्त्वमित्यरुचेराह—वस्तुतस्त्विति । व्याप्तिग्रहणाभावमेव दर्शयति—तथाहीति । इदमिति । प्रमेयत्वे सति कृतकत्वमित्यर्थः । साध्याभावेति । साध्यमनित्यत्वम् । तदभावो नित्यत्वम् [2]तदधिकरणानधिकरणत्वादित्यर्थः । अत्र प्रतिपक्षमाह—इदमिति । अनित्यत्वेति । [3]अनित्यत्वव्याप्यत्वप्रकारकमनित्यत्वव्याप्यत्वसमानाधिकरणं यद्विषयत्वं तदनधिकरणमिति समासः । तद्व्यभिचारावारकेति । अनित्यत्वव्यभिचारावारकेत्यर्थः । अत्र

1 अनित्यत्वनियतसमानाधिकरणमिति । अनित्यत्वनियतसामानाधिकरण्यवदित्यर्थः ।

2 तदधिकरणानधिकरणत्वादिति । तदधिकरणमनधिकरणं यस्य, तत्त्वात्; तदधिकरणावृत्तित्वादिति यावत् ।

3 अनित्यत्वव्याप्यत्वप्रकारकमित्यादि । अनित्यत्वव्याप्यत्वप्रकारकम् अनित्यत्वव्याप्यत्वप्रकारतानिरूपितं यत् अनित्यत्वव्याप्यत्वसमानाधिकरणं विषयत्वमित्यर्थः । अनित्यत्वव्याप्यत्वावच्छिन्नम् अनित्यत्वव्याप्यनिष्ठविषयत्वमिति यावत् ।

व्याप्यत्वप्रकारकानित्यत्वव्याप्यत्वसमानाधिकरणविषयत्वानधिकरणं, तद्व्यभिचारावारकविशेषणयोगित्वात्, संप्रतिपन्नवत्' इति विरोधिधर्मदर्शने व्याप्तेरदर्शनात्। न च साध्याभावसमानाधिकरणत्वमेवोपाधिः, पूर्वसाधनव्यतिरेकस्यानुपाधित्वात्।

इति व्याप्तिवादः।

## उपाधिवादः

किमिदमुपाधित्वम्? साध्यव्यापकत्वे सति साधनाव्यापकत्वं वा? साध्यसमव्यापकत्वे सति साधनाव्यापकत्वं वा? पक्षधर्मावच्छिन्नसाध्य-

सामान्यव्याप्तिरभिमता; अन्यथा दृष्टान्तासिद्धेरिति ध्येयम्। सोपाधिकत्वान्नायं हेतुः साधुरित्याशङ्क्याह—**न चेति**। **पूर्वसाधनेति**। पूर्वसाधनं साध्याभावासमानाधिकरणत्वम्। तद्व्यतिरेकस्य; तदभावस्येत्यर्थः। **अनुपाधित्वादिति**। उपाध्याभासत्वादित्यर्थः। अयमाशयः—'शब्दो नित्यः, श्रावणत्वात् शब्दत्ववत्; 'शब्दोऽनित्यः, महाभूतविशेषगुणत्वात् संप्रतिपन्नवत्'; एवं 'शर्करारसोऽनित्यः, अनित्यवृत्तिगुणत्वात्'; 'शर्करारसो नित्यः, रसनेन्द्रियजन्यनिर्विकल्पकविषयत्वात्' इत्यादौ पूर्वसाधनतायाः प्रयोगानुरोधेनाव्यवस्थितत्वमिति वस्तुव्यवस्थानं न स्यात्, उपाधेर्नित्यदोषत्वात्। न हि यद्येन सोपाधि संबद्धं तत्तेन निरुपाधि संबद्धं भवतीति।

इति व्याप्तिवादः।

## उपाधिवादः।

पूर्वं साधनव्यतिरेकस्यानुपाधित्वमुक्तम्। उपाधिस्वरूपाज्ञानेऽनुपाधित्वं ज्ञातुं न शक्यत इत्युपाधिर्निरूप्यत इति प्रथमं तत्स्वरूपमाक्षिपति—**किमिदमिति**। अथवा व्याप्तिनिरूपणानन्तरमुपाधिस्वरूपं विचारयितुं प्रथमं तदङ्गतया पूर्वपक्षयति—**किमिदमिति**। किंशब्दो निषेधपरः। उपाधिस्वरूपमेव निर्वक्तुमशक्यमिति पूर्वपक्षिणो भावः। **साध्येति**। ननु व्यापकत्वं व्याप्तिनिरूपकत्वं वा? तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं वा? नाद्यः। व्याप्तौ गृहीतायामुपाधिप्रत्ययः, उपाधिप्रत्यये सति तदभाव-

व्यापकत्वे सति साधनाव्यापकत्वं वा? पक्षावृत्तित्वे सति साध्यव्यापकत्वं वा? पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वं वा? यद्विशिष्ट-

रूपानौपाधिकप्रत्ययाधीनव्याप्तिप्रत्यय इत्यन्योन्याश्रयः । न चानौपाधिकत्वज्ञानं न व्याप्तिज्ञानकारणम्; अतो न व्यापकत्वादिज्ञानेऽन्योन्याश्रय इति वाच्यम्। अनौपाधिकत्वज्ञानस्य व्याप्तिज्ञानं प्रति प्रतिबन्धकाभावत्वेन हेतुत्वादुक्तदोषो दुर्वारः। अन्यथोपाधिज्ञाने सत्यपि व्याप्तिधीः स्यात्। न द्वितीयः, संयोगस्य द्रव्यत्वव्यापकत्वं न स्यादिति चेत्; न । प्रतियोग्यसमानाधिकरणतद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं व्यापकत्वमिति नोक्तदोषः। तादृशाभावप्रतियोगित्वमव्यापकत्वम्। ननु प्रतियोगित्वं विरोधित्वम्। तच्च सहानवस्थाननियमः। स च व्याप्तिगर्भ इति पुनरन्योन्याश्रय इति चेत्; न, प्रतियोगित्वं तदधिकरणानधिकरणत्वम्। प्रकृतव्यापकत्वनिरुक्ताविदं प्रतियोगित्वम्। न तु तल्लक्षणमिदम्, [1]गोत्वाश्वत्वयोराकाशादिघटात्यन्ताभावयोश्चातिव्याप्तिप्रसङ्गात्; अन्योन्याभावप्रतियोगिन्यसत्त्वाच्च । एवंच साध्यत्वाभिमतसमानाधिकरणात्यन्ताभावाप्रतियोगित्वे सति साधनत्वाभिमतसमानाधिकरणात्यन्ताभावप्रतियोगित्वमिति लक्षणार्थः। अत्र सत्यन्तमात्रे कृते सदनुमानेऽपि प्रमेयत्वस्योपाधिता स्यात्, तस्यापि तादृशत्वात्। तन्निवृत्तये साधनत्वाभिमतेत्याद्युत्तरदलम्। तस्य केवलान्वयित्वेनैतादृशत्वाभावान्न दोषः। सत्यन्तं विहाय तदितराभिधाने आकाशादेः सर्वत्रोपाधिता स्यात्, तस्यैतादृशत्वात्। अतस्तदुपात्तम्। आकाशादेस्तादृशाभावप्रतियोगित्वेन तदप्रतियोगित्वाभावान्नातिव्याप्तिः। ननूभयत्राभिमतपदं व्यर्थमिति चेत्; न। साध्यत्वसाधनत्वे व्यापकत्वव्याप्यत्वे। न च सोपाधौ वस्तुतस्ते भवतः। ततश्चासंभवः। तदर्थमभिमतपदमुभयत्रावश्यकम्। एवमुत्तरलक्षणेष्वपि विशेषणकृत्यं ज्ञेयमिति संक्षेपः।

1 गोत्वाश्वत्वयोराकाशादिघटात्यन्ताभावयोश्चातिव्याप्तिप्रसङ्गादिति। तदधिकरणावृत्तित्वं तत्प्रतियोगित्वमिति लक्षणाङ्गीकारे, गोत्वाधिकरणावृत्तेरश्वत्वस्य गोत्वप्रतियोगित्वापत्तिः। एवमवृत्तेराकाशस्य घटाभावाधिकरणावृत्तित्वेनाकाशस्य घटाभावप्रतियोगित्वापत्तिरित्यर्थः। अन्योन्याभावप्रतियोगिन्यसत्त्वाच्चेति। घटभेदप्रतियोगित्वं न स्यादित्यर्थः।

[1]ननु वल्लभोक्तलक्षणे अभिमतपदद्वयं व्यर्थम्, असाधकतायां व्यर्थविशेषणत्वात्; पक्षेतरेऽतिव्याप्तेः । पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधावव्याप्तत्यापत्तेः, समव्याप्तोपाधावव्याप्तेश्चेत्यरुचेराह—**साध्यसमेति** । [2]साध्यव्यापकत्वे सति साध्यव्याप्यत्वे सति साधनाव्यापकत्वमिति लक्षणं पर्यवसन्नम् । समपदम् 'अनित्यः शब्दः कृतकत्वात्' इत्यत्राश्रावणत्वस्योपाधित्वनिवृत्तये । शेषं पूर्ववत् । ननु विषमव्याप्तोपाधावार्द्रेन्धनादावव्याप्तिः । न च तस्यानुपाधित्वम्, [3]दूषकताबीजसाधारण्यादित्यरुचेराह—**पक्षधर्मावच्छिन्नेति** । इदं च 'वायुः प्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वात्' [4]इत्यत्रोद्भूतरूपवत्त्वोपाधावव्याप्तिवारणाय । ननु 'शब्दोऽभिधेयः, प्रमेयत्वात्' इत्यत्राश्रावणत्वमुपाधिः स्यात् । शब्दवृत्तिगुणत्वावच्छिन्नाभिधेयत्वस्याश्रावणत्वं व्यापकं, साधनाव्यापकं चेत्यरुचेराह—**पक्षावृत्तित्वे सतीति** । इदं च प्रमेयत्वेऽतिव्याप्तिवारणायेति मन्तव्यम् । ननु 'श्रूयमाणो वर्णात्मकः शब्दोऽनित्यः, कृतकत्वात्' इत्यत्र [5]ध्वन्यतिरिक्तश्रावणान्यत्वमुपाधिः स्यात्, सकलपक्षावृत्तित्वादित्यत आह—**पर्यवसितेति** । पर्यवसितत्वं पक्षधर्मताबललभ्यत्वम् । तेन 'शब्दोऽनित्यत्वातिरिक्तैतद्धर्मातिरिक्तधर्मवान्, प्रमेयत्वात्' इत्यत्र पर्यवसितानित्यत्वसाध्यव्यापकं कृतकत्वमुपाधित्वेन

1 वल्लभोक्तलक्षण इति । न्यायलीलावतीकारेण वल्लभाचार्येणोक्ते लक्षण इत्यर्थः । 'किं पुनरुपाधित्वम्? साध्यकृत्स्नसहचारिणः साधनैकदेशवृत्तित्वम्' इति लीलावतीग्रन्थः । साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति तदर्थः । निरुक्तेन हेतुनाभिमतपदमुपादेयमिति भावः । असाधकतायामिति यत्रोपाधिरुद्भाव्यते तं हेतुं पक्षीकृत्योपाधिना हेतुना असाधकत्वस्यानुमाने हेतुकोटिप्रविष्टस्याभिमतत्वस्य व्यर्थत्वादित्यर्थः ।

2 साध्यसमेति । धूमवान् वह्नेरित्यादौ आर्द्रेन्धनप्रभववह्निरुपाधिः । स च धूमव्याप्योऽपि भवति, धूमशून्येऽयोगोलके तादृशवह्नेरसत्त्वादिति भावः ।

3 दूषकताबीजसाधारण्यादिति । व्यापकव्यभिचारेण हेतौ व्याप्यीभूतसाध्यव्यभिचारानुमानरूपदूषकताबीजस्य विषमव्याप्तोपाधिस्थलेऽपि सत्त्वादित्यर्थः ।

4 उद्भूतरूपवत्त्वोपाधावव्याप्तिवारणायेति । प्रत्यक्षत्वाधिकरणे रूपादौ उद्भूतरूपवत्त्वाभावेन साध्यव्यापकत्वाभावादव्याप्तिः । अतः पक्षधर्मावच्छिन्नसाध्यव्यापकेत्युक्तम् । पक्षस्य वायोर्धर्मः बहिर्द्रव्यत्वम् । तदवच्छिन्नप्रत्यक्षत्वं घटादावेव, न रूपादौ । तत्र चोद्भूतरूपवत्त्वं वर्तत एवेतिनाव्याप्तिरित्यर्थः ।

5 ध्वन्यतिरिक्तश्रावणान्यत्वमुपाधिः स्यादिति । श्रावणान्यत्वस्योपाधित्वं न संभवति, पक्षव्यतिरिक्तेऽनित्ये ध्वनौ श्रावणान्यत्वविरहेण साध्याव्यापकत्वात् । अत उक्तं ध्वन्यतिरिक्तेति ।

**साधने साध्यसामानाधिकरण्यं तत्त्वं वा ? साध्यसाधनसंबन्धव्यापकत्वे सति साधनाव्यापकत्वं वा ? साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वं वा ?**

संगृह्यते। यदि तत्र कृतकत्वं साध्यते, तदा अनित्यत्वमुपाधित्वेन संगृह्यत इति रत्नकोशकारस्य तात्पर्यम्।

ननु द्व्यणुकस्य सावयवत्वे सिद्धे 'द्व्यणुकमनित्यद्रव्यासमवेतं जनिमत्त्वानधिकरणद्रव्यत्वात्' इत्यत्र निःस्पर्शद्रव्यसमवेतत्वमुपाधिः स्यात्। तथाहि—तत्र नित्यद्रव्यसमवेतत्वं पर्यवसितसाध्यम्। [1]तद्व्यापकं निःस्पर्शद्रव्यसमवेतत्वं साधनाव्यापकं च भवतीत्यत आह—**यद्विशिष्टसाधन** इति। 'धूमवान् वह्नेः' इत्यत्र यद्विशिष्टे आर्द्रेन्धनसंयोगविशिष्टे साधने वह्नौ साध्यसामानाधिकरण्यं धूमसामानाधिकरण्यं, तत्त्वमार्द्रेन्धनसंयोगादौ वर्तत इत्यर्थः।

नन्वनुमानमात्रे प्रमेयत्वादेरुपाधितापत्तिरित्यत आह—**साध्यसाधनसंबन्धेति**। 'प्रध्वंसः प्रध्वंसाभावप्रतियोगी, जन्यत्वात्' इत्यत्र [2]भावत्वोपाधावव्याप्तिवारणाय साध्यसाधनसंबन्धव्यापकत्वे सतीति पदम्। जन्यत्वानित्यत्वसंबन्धस्य व्यापकं भावत्वं भवतीति नाव्याप्तिरिति दिक्।

नन्विदमसंगतम्, 'जलं प्रमेयं, रसवत्त्वात्' इत्यत्र पृथिवीत्वस्योपाधित्वप्रसङ्गात् प्रमेयत्वरसवत्त्वसंबन्धस्य पृथिवीत्वं व्यापकं रसवत्त्वाव्यापकं च भवतीत्यरुचेराह—**साधनावच्छिन्नसाध्येति**। इदं च 'ध्वंसोऽनित्यः, जन्यत्वात्' इत्यत्र भावत्वोपाधावव्याप्तिवारणाय।

1 तद्व्यापकं निःस्पर्शद्रव्यसमवेतत्वमिति। परमाणुव्यतिरिक्तं सर्वमपि नित्यद्रव्यमाकाशादिपञ्चकं स्पर्शशून्यमेव। परमाणुश्चानेनैव सेत्स्यति। एवंच नित्यद्रव्यसमवेते सर्वत्र निःस्पर्शद्रव्यसमवेतत्वमस्तीति तद्व्यापकत्वं बोध्यम्।

2 भावत्वोपाधावव्याप्तिवारणायेति। प्रध्वंसाभावप्रतियोगित्ववति प्रागभावे भावत्वाभावेन साध्याव्यापकत्वादव्याप्तिः। साध्यसाधनसंबन्धव्यापकत्वं तु संभवति। ध्वंसप्रतियोगित्वजन्यत्वसंबन्धः सामानाधिकरण्यरूपो निरूपकतया घटादावेवास्ति; न प्रागभावे, तस्याजन्त्वादिति भावत्वस्य तद्व्यापकत्वं घटते।

तत्र नाद्यः, साधनावच्छिन्नसाध्यव्यापकोपाधावव्याप्तेः ; पक्षेतरविशेषेऽतिव्याप्तेश्च ।

ननु पक्षे यत्र साध्यं वर्तते तत्र पक्षेतरत्वस्य साध्याव्यापकत्वमेव । यत्र तु पक्षे साध्यं नास्ति तत्र पक्षेतरत्वमुपाधिरङ्गीक्रियत एव । यथा बाधोन्नीतः पक्षेतरः । तत् कथमतिव्याप्तिरिति चेत् ; भवतु वस्तुगतिरीदृशी । तथापि पक्षातिरिक्ते साध्यव्यापकत्वं गृहीतम् । एतदेवोपाधेर्दूषकत्वम् । तच्च पक्षेतरेऽप्यस्ति । अन्यथा, आर्द्रेन्धनत्वादेरपि पक्षे साध्यसंदेहदशायामनुपाधित्वप्रसङ्गः ।

नन्विदमसंगतम् । उपाधिव्यतिरेकेणैतादृशसाध्यव्यतिरेकः साध्यः । तत्रार्थान्तरम् । केवलसाध्ये विवादः, न च विशिष्टसाध्य इति । यद्वा 'जलं प्रमेयं, रसवत्त्वात्' इत्यत्र पृथिवीत्वस्योपाधित्वप्रसङ्ग इति दिक् ।

तदेवं विकल्प्य यथाक्रमं दूषयति—**तत्रेति** । तेषां मध्य इत्यर्थः । **नाद्य इति** । साध्यव्यापकत्वे सति साधनाव्यापकत्वपक्ष इत्यर्थः । **साधनेति** । 'ध्वंसो विनाशी, जन्यत्वात्' इत्यत्र साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः । आदिशब्देन मित्रातनयत्वेन श्यामत्वसाधने शाकपाकजन्यत्वं गृह्यते । ततश्चोभयत्राव्याप्तिरित्यर्थः । न च तयोरनुपाधित्वम् ; दूषकताबीजसाम्यादिति दिक् । लक्षणस्यातिव्याप्तिमप्याह—**पक्षेतरेति** । [1]पक्षमितरयतीति व्युत्पत्त्या पक्षेतरपदं पर्वतेतरत्वादिपरम् । पक्षातिरिक्ते साध्यव्यापकत्वाभिप्रायेणेदं बोध्यम् ।

ननु पक्षेतरेऽतिव्याप्तिं ब्रुवता त्वया वक्तव्यम्—बाधानुन्नीतपक्षेतरे वा ? बाधोन्नीतपक्षेतरे वा ? नाद्यः, साध्यव्यापकत्वाभावात् । पक्षे साध्यस्य सत्त्वेनोपाधेरसंभवात् । तदुक्तमभियुक्तैः—

1 पक्षमितरयतीति व्युत्पत्त्येति । इतरयति व्यावर्त्यं करोतीत्यर्थः । पर्वतेतरत्वस्य व्यावर्त्यः पर्वतः । अतः पर्वतेतरत्वं पक्षेतरशब्दार्थः । पक्षादितरः पक्षभिन्न इत्यर्थस्वीकारे पक्षभिन्नस्य प्रमेयत्वस्य साधनव्यापकत्वेनातिव्याप्तिकथनमसंगतं स्यात् । इतरशब्दात् सर्वनामकार्यादर्शनमप्यनुपपन्नं स्यादिति पक्ष इतरो यस्मादिति बहुव्रीहिसमासाश्रयणेन पक्षनिष्ठभेदप्रतियोग्यर्थः । "न बहुव्रीहौ" इति निषेधादितरशब्दात्सर्वनामकार्याभावः संगच्छते । तादात्म्यसंबन्धेन तस्योपाधित्वापत्तिर्विवक्षिता । साधनाधिकरणे पक्षे पक्षेतरस्य तादात्म्येनासत्त्वेन साधनाव्यापकत्वादतिव्याप्तिः संगच्छत इत्यपि केचित् ।

ननु—व्यतिरेकिसत्प्रतिपक्षत्वं सर्वत्र दूषकताबीजमुपाधेः । तच्च पक्षेतरत्वे न संभवति, असाधारणत्वात् । तथाहि—'पर्वतोऽनग्निः पर्वतेतरान्यत्वात्' इत्ययं सकलसपक्षविपक्षव्यावृत्तत्वादसाधारण इति चेत् न । यद्यसाधारण्यात् पक्षेतरत्वस्यानुपाधित्वं, तदा केवलान्वयिनि केवलव्यतिरेकिणि च साध्ये पक्षेतर उपाधिः स्यात्; विपक्षसपक्षयोरप्रसिद्धावसाधारण्याभावात् ।

"अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसंभवः ॥"

इति ।

नापि द्वितीयः, तस्य लक्ष्यत्वान्नातिव्याप्तिरित्याभिसन्धिमान् पराशयमविद्वान् शङ्कते—नन्विति । बाधानुन्नीतपक्षेतरेऽतिव्याप्तिरित्यभिप्रायेण परिहरति—भवत्विति । ईदृशीति । पक्षे साध्यव्यापकत्वभङ्गरूपेत्यर्थः । तर्हि कथमुपाधित्वमित्यत आह—तथापीति । पक्षे साध्यव्यातकत्वभङ्गेऽपीत्यर्थः । अस्तु । प्रकृते किमायातम्? तत्राह—तच्चेति । पक्षातिरिक्ते साध्यव्यापकत्वमित्यर्थः । अनङ्गीकारे बाधकमाह—अन्यथेति । तदा पक्षातिरिक्तस्थले साध्यव्यापकत्वं त्वयाप्यङ्गीकरणीयम् । तद्वत् प्रकृतेऽपीति भावः ।

पर्वतेतरान्यत्वस्य पर्वतमात्रवृत्तित्वेनासाधारण्यात् पक्षेतरो नोपाधिरिति शङ्कते—नन्विति । उक्तप्रणाड्यान्वयव्यतिरेकिणि पक्षेतरत्वस्योपाधित्वाभावेऽपि केवलान्वयिकेवलव्यतिरेकिणोः पक्षेतरत्वमुपाधिः स्यात्, व्यतिरेकेऽसाधारण्याभावात् । एकत्र विपक्षव्यावृत्तत्वाभावात्; अपरत्र सपक्षव्यावृत्तत्वाभावादिति परिहरति—यद्यसाधरण्यादिति ।

पक्षेतरत्वमुपाधिरिति वदता वक्तव्यम्—किं केवलान्वयिनि 'इदं वाच्यम्, ज्ञेयत्वात्' इत्यादौ? किं वा व्यतिरेकिणि 'पृथिवी इतरेभ्यो भिद्यते, पृथिवीत्वात्' इत्यादौ? अथवा 'वर्णात्मकः शब्दोऽनित्यः, कृतकत्वात्' इत्याद्यन्वयव्यतिरेकिणि? नाद्यः, प्रतिपक्षानुमानबाधात्; वाच्यत्वाभावस्याप्रसिद्धत्वात् । न द्वितीयः, पृथिवीतरत्वाभावस्योपाधिव्यतिरेकस्येतरभेदाभावाभावसमानाधिकरणत्वेन विरुद्धत्वात् । न तृतीयः,

अथेदमुच्यते—यस्य व्यतिरेकेण प्रतिपक्षः संभवति, स धर्म उपाधिः। न च पक्षेतरस्य व्यतिरेकस्तादृशः। तथाहि—केवलान्वयिनि साध्येऽत्यन्ताभावस्याप्रसिद्धत्वात्केवलव्यतिरेकिणि साध्ये प्रतिपक्षानुमानस्य विरुद्धत्वादन्वयव्यतिरेकिणि साध्ये साधारण्यात्—इति। तन्न, 'परमाणुः सावयवः, मूर्तत्वात्' इत्यत्र धर्मिग्राहकप्रमाणबाधोन्नीतपक्षेतरत्वस्योपाध्यभावत्वप्रसङ्गात्। न च बाधादेव हेतोर्दुष्टत्वाद्बाधोन्नीतपक्षेतर-

शब्देतरत्वाभावत्वस्य शब्दमात्रवृत्तित्वेनासाधारण्यादिति शङ्कते—अथेदमिति। यस्येति। उपाधेरित्यर्थः। अस्तु; प्रस्तुते किमायातम्? तत्राह—न चेति। तथाहि इत्यादिकमारभ्य साधारण्यादित्यन्तं वाक्यकदम्बमतिरोहितार्थमित्यवगन्तव्यम्। व्यतिरेकिणि पक्षेतरत्वस्योपाधित्वं संभवति। यदि प्रतिपक्षानुमानस्य विरुद्धत्वान्नोपाधित्वं, तर्हि 'परमाणुः सावयवः मूर्तत्वात्' इत्यत्रापि बाधोन्नीतपक्षेतरत्वस्योपाधित्वं न स्यात्। मूर्तत्वहेतोर्विरोधेनैव दुष्टत्वादिति प्रतिबन्द्या परिहरति—तन्नेति। मूर्तत्वादिति। इयत्तावच्छिन्नपरिमाणयोगित्वादित्यर्थः। धर्मिग्राहकप्रमाणेति। ननु किमिदं धर्मिग्राहकप्रमाणम्? न तावत् 'अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं, परिमाणतारतम्यत्वात् महत्परिमाणतारतम्यवत्' इत्यनुमानं तत्। अणुपरिमाणशब्देनाणुनिष्ठपरिमाणविवक्षायां त्वदभिमताणूनामेवासिद्धौ तत्परिमाणस्य तत्तारतम्यस्य चाप्रसिद्धत्वादाश्रयासिद्धिः। तेषु परिमाणतारतम्यस्यानङ्गीकाराच्च। महत्त्वाप्रकर्षतारतम्यस्य क्वचिद्विश्रान्तिसाधने त्रसरेणुष्वेव विश्रान्तिसिद्धिरिति सिद्धसाधनत्वात्। नापि 'पृथिवीत्वं नित्यवृत्ति, घटवृत्तिजातित्वे सति पटवृत्तिजातित्वात् सत्तावत्' इत्यनुमानम्। पृथिवीव्यतिरिक्ताश्रयत्वमुपाधिः। परमते सत्ताया अपि नित्यवृत्तित्वानङ्गीकारात्साध्यविकलो दृष्टान्तः। नापि 'अयं घट एतद्घटातिरिक्तानित्यमूर्तातिरिक्तमूर्तान्यः, मेयत्वात् घटवत्' इत्यनुमानम्, 'अयं घट एतद्घटातिरिक्तनित्यसावयवातिरिक्तसावयवान्यः, मेयत्वात्' इत्यपि प्रयोगस्य सुवचत्वात्। नापि 'द्व्यणुकं स्वन्यूनपरिमाणद्रव्यारब्धं, कार्यद्रव्यत्वात्' इत्यनुमानं तत्, दीर्घतन्त्वारब्धत्रितन्तुकपटे व्यभिचारात्; दीर्घविस्तृतदुकूलरज्जुद्वये व्यभिचाराच्च।

अत्रोच्यते—'पृथिवीत्वं नित्यवृत्ति, घटवृत्तिजातित्वे सति पटवृत्तिजातित्वात् सत्तावत्' इत्यनुमानं धर्मिग्राहकपरमाणुसाधकप्रमाणम्। न च पृथिवीव्यतिरिक्ताश्रयत्व-

त्वस्यानुपाधित्वमिति वाच्यम्, विरुद्धेऽपि हेतावनुपाध्यभावप्रसङ्गात्; विरुद्धत्वेनैव हेतोर्दूषितत्वात्। अत्राप्येवमस्तु; का नो हानिरिति चेत्, तर्ह्यनैकान्तिकेऽपि हेतौ भवता प्रयोजकं वक्तव्यम्। अनैकान्तिकत्वज्ञाने तत्राप्येवमिति चेत्, एतावतापि किमुपाधिरनैकान्तिके न भवति? किंतु भवन्नप्यनैकान्तिकतादशायां न दोषः, तत्कर्तव्यस्यानैकन्तिकत्वेनैव कृतत्वात्। अन्यथा व्यभिचारे चावश्यमुपाधिरुपाधौ चावश्यं व्यभिचार इति भग्नं स्यात्।

मुपाधिः, दूषकताबीजाभावात्। तथाहि—न तावत् पृथिवीव्यतिरिक्ताश्रयत्वान्यत्वेन नित्यवृत्तित्वव्यतिरेकः, सताया व्यभिचारात्। न च सत्तायां प्रमाणाभाव इति वाच्यम्। 'विवादाध्यासितानि द्रव्यगुणकर्माणि सामान्यवन्ति, भावत्वे सत्यनित्यत्वात् गोवत्' इत्यनुमानं सत्तायां प्रमाणम्। नाप्ययं हेतुर्नित्यवृत्तित्वव्यभिचारी, नित्यवृत्तित्वव्यापकपृथिव्यतिरिक्ताश्रयत्वव्यभिचारित्वादिति व्यभिचारोन्नयनम्, [1]परमते विशेषपदार्थे व्यभिचारात्। एतेन 'पृथिवीत्वमनित्यमात्रवृत्ति, पृथिवीमात्रवृत्तित्वात् घटत्ववत्' इति **खण्डनकारोक्तं** प्रत्युक्तम्। अनित्यमात्रवृत्तित्वं नामानित्येतरावृत्तित्वम्; न त्वन्यत्, गौरवात्। एवंच बाधः, अनित्येतरकालेऽपि तस्य सत्त्वात्। न च समवायसंबन्धेनानित्यमात्रवृत्तित्वं विवक्षितमिति वाच्यम्। मात्रशब्दस्य कार्त्स्न्यार्थकत्वं वा? व्यावृत्त्यर्थकत्वं वा? नाद्यः, अनित्यमात्रे सर्वत्र तदभावात्। नापि द्वितीयः, समवायसंबन्धेनानित्येतरावृत्तित्वं नामानित्येतरवृत्तित्वाभावः। [2]ततश्चानित्येतरवृत्तित्वस्यासिद्धत्वे

1 परमते विशेषपदार्थे व्यभिचारादिति। भावप्रधानो निर्देशः। विशेषत्वे व्यभिचारादित्यर्थः। नित्यवृत्तित्वव्यभिचारित्वाभावो विशेषत्वे वर्तते। विशेषस्य नित्यवृत्तित्वनियमेन नित्यवृत्तित्वाभाववद्वृत्तित्वाभावसत्त्वात्। पृथिवीव्यतिरिक्ताश्रयत्वव्यभिचारित्वमपि वर्तते। पृथिवीव्यतिरिक्ताश्रयत्वाभाववति पृथिवीपरमाण्वाश्रिते विशेषे विशेषत्वस्य सत्त्वेन पृथिवीव्यतिरिक्ताश्रयत्वाभाववद्वृत्तित्वस्याक्षतत्वात्। विशेषे तु न व्यभिचारः संभवति, नित्यवृत्तित्वाभाववति परमाणौ विद्यमाने तस्मिन् नित्यवृत्तित्वव्यभिचारित्वस्यैव सत्त्वेन तदभावादिति बोध्यम्। पृथिवीव्यतिरिक्ताश्रयत्वमित्यत्र व्यतिरिक्त आश्रयो यस्येति व्युत्पत्त्या पृथिवीव्यतिरिक्तवृत्तित्वमर्थो बोध्यः।

2 अनित्येतरवृत्तित्वस्यासिद्धत्वे निषेधायोगात् तस्य सिद्धत्वे सुतरां निषेद्धुमशक्यत्वादिति। अनित्येतराकाशादिनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्य शब्दादौ प्रसिद्धस्य पक्षे पृथिवीत्वे निषेधः संभवत्येवेति कथमेतदिति पर्यालोचनीयम्।

अपिच व्यभिचारोन्नायकतयैव किं न सर्वोपाधीनां दूषकत्वम्? तच्च पक्षेतरेऽपि संभवति। तथाहि—धूमवत्त्वं वह्निमत्त्वव्यभिचारि, पर्वतेतरत्वव्यभिचारित्वात् प्रमेयत्वादिवत्। व्याप्यत्वासिद्ध्युन्नायकत्वेन वा दूषकत्वमस्तु। न हि यत् यद्व्यापकाव्याप्यं तत् तद्व्याप्यं भवति।

निषेधायोगः; तस्य सिद्धत्वे सुतरां निषेद्धुमशक्यत्वमिति वयमालोचयामः। तत्र हेतुमाह—**विरुद्धेऽपीति**। उपाध्यभावत्वमिष्टमिति शङ्कते—**अत्रापीति**। परमाणुसावयवत्वसाधकानुमानेऽपीत्यर्थः। बाधकाभावादिति भावः। **तर्ह्यनैकान्तिकेऽपि हेतावित्यारभ्य अनैकान्तिकत्वेनैव कृतत्वादित्यन्तं** वाक्यवृन्दमतिरोहितार्थम्। **अन्यथेति**। अनैकान्तिके सत्युपाध्यभावाङ्गीकार इत्यर्थः। इष्टापत्तावपसिद्धान्तापातादिति भावः।

**अपिचेति**। सर्वेषामुपाधीनां व्यभिचारोन्नायकतयैव दूषकत्वम्। तच्च व्यभिचारोन्नायकत्वं पक्षेतरेऽपि न संभवति किमिति योजना कार्या। तत्र व्यभिचारोन्नायकत्वमेव दर्शयति—**तथाहीति**। [1]धूमवद्व्यतिरिक्ताश्रयत्वमत्रोपाधिरित्यरुचेराह—**व्याप्यत्वासिद्ध्युन्नायकत्वेनेति**। **न हीति**। 'धूमवत्त्वं वह्निमत्त्वव्याप्यं न भवति, वह्निमत्त्वव्यापकपर्वतेतरत्वाव्याप्यत्वात्' इत्यनुमानं बोध्यम्। ननु व्यभिचारोन्नायकत्वेन वा व्याप्यत्वासिद्ध्युन्नायकत्वेन वा पक्षेतरत्वस्य नोपाधित्वम्। उभयथापीतरान्यत्वादित्युक्तेऽसिद्धिः। तद्वारणाय पर्वतपदम्। इतरत्वव्यभिचारित्वादित्युक्तेऽसिद्धिः स्यात्। अन्योन्याभावाधिकरणत्वरूपस्येतरत्वस्य केवलान्वयित्वेन तदत्यन्ताभावस्याप्रसिद्धत्वात्, अव्याप्यत्वस्याप्रसिद्धत्वाच्च। व्यभिचारावारकत्वात् व्यर्थविशेषणत्वं शङ्कते—**नन्विति**। प्रतिबन्धोत्तरयति—**तर्हीति**। **त्वन्मत इति**। नैयायिकमत इत्यर्थः। **बाधोन्नीत इति**। 'राजसूयं ब्राह्मणकर्तव्यम्, स्वर्गसाधनत्वात् ज्योतिष्टोमवत्' इत्यत्र [2]राजकर्तृकागमबाधोन्नीतपक्षेतरत्व इत्यर्थः। **एवमिति**। व्यभिचारावारकविशेषणवत्त्वेनानुपाधित्वं स्यादपीत्यर्थः।

1 धूमवद्व्यतिरिक्ताश्रयत्वमत्रोपाधिरिति। वह्निव्यभिचारित्वाधिकरणे प्रमेयत्वादौ धूमवद्व्यतिरिक्तवृत्तित्वमस्तीति साध्यव्यापकता। साधनवति पक्षे धूमवत्त्वे धूमवद्व्यतिरिक्ताश्रयत्वं नास्तीति पक्षान्तर्भावेण साधनाव्यापकता बोध्या।

2 राजकर्तृकागमबाधोन्नीतपक्षेतरत्व इति। राजसूये राजकर्तृकत्वबोधकेन 'राजा राज-

नन्वितरत्वमन्योन्याभावाधिकरणत्वम् । तच्च केवलान्वयि । ततस्तदत्यन्ताभावस्याप्रसिद्धत्वादितरत्वव्यभिचारित्वमसिद्धम् । अतोऽसिद्धिनिवारणार्थं पर्वतादिविशेषणमाद्रियते । ततो व्यभिचारावारकविशेषणत्वात् व्यर्थविशेषणत्वम् । अतः कथं व्यभिचारोन्नायकत्वम् ? व्याप्यत्वासिद्ध्युन्नायकत्वं वा ? मैवम् । तर्हि त्वन्मते बाधोन्नीतेऽप्येवं स्यात् ।

ननु सकलानुमानभङ्गभिया बाधोन्नीतान्यपक्षेतरत्वस्य नोपाधित्वम् ; अन्यथा असाधकतानुमानेऽप्येष दोष इति चेत् ; न, अत एव लक्षणेऽतिव्यापकत्वमुच्यते, अनुपाधावपि गतत्वात् । किंच साधनाव्यापकत्वं साधनत्वाभिमताव्यापकत्वं वक्तव्यम् । साधनत्वं च व्याप्तिपक्षधर्मतावैशिष्ट्यम् । व्याप्तिश्चानौपाधिकत्वज्ञानाधीनेत्यन्योन्याश्रयः । एवं पर्वतावयववृत्त्यन्यत्व-पर्वतविपक्षसंयोगानधिकरणत्व-पर्वतविपक्षान्यतरान्यत्व-पर्वतेतरवह्निमत्त्वेष्वतिव्यापकमिदं लक्षणमित्यवगन्तव्यम् ।

अन्ये त्वेवमत्र लक्षणदूषणमाहुः—साध्यव्यापकत्वं साध्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वम् । प्रतियोगित्वं च विरोधित्वम् । तच्च

ननु—बाधानुन्नीतपक्षेतरत्वस्योपाधित्वेऽनुमानमात्रं भग्नं स्यात् ; ततश्च तस्यानुपाधित्वमेष्टव्यम् ; अन्यथा चार्वाकमतप्रवेशापत्तेरित्यभिप्रायेण शङ्कते— **नन्विति** । **अत एवेति** । बाधानुन्नीतपक्षेतरत्वस्यानुपाधित्वादेवेत्यर्थः । तत्र हेतुमाह—**अनुपाधाविति** । न केवलमव्याप्त्यतिव्याप्ती ; किंत्वन्योन्याश्रयोऽपि लक्षणस्येत्याह—**किंचेति** । अतिव्याप्त्यन्तराण्याह—**एवमिति** । **पर्वतविपक्षेति** । यत्र पर्वते ह्रदो वर्तते, तत्रेत्यर्थः । सर्वत्र पक्षातिरिक्तस्थले साध्यव्यापकत्वं बोध्यमिति भावः ।

मतान्तराभिप्रायेणान्योन्याश्रयमाह—**अन्ये त्विति** । व्यापकलक्षणस्याव्याप्तिमाह—**संयोगादीनामिति** । संयोगादौ कथं लक्षणाभाव इत्याशङ्क्याह—

सूयेन यजेत' इत्यागमेन जनितो यो बाधः बाधनिश्चयः, राजसूये पक्षे ब्राह्मणकर्तव्यत्वरूपसाध्याभावनिश्चयः, तेनोन्नीतं-साध्यव्यापकतया निश्चितं यत् पक्षेतरत्वं, तस्मिन्नित्यर्थः ।

सहानवस्थाननियमः । नियमश्च व्याप्तिः । सा चानौपाधिकत्वज्ञानाधीनज्ञाना । उपाधिश्च तज्ज्ञानाधीनज्ञान इत्यन्योन्याश्रयः । संयोगादीनामनुपाधित्वप्रसङ्गश्च । अव्याप्यवृत्तित्वेन साध्यवन्निष्ठात्यन्ताभावप्रतियोगित्वादिति । तन्न । विरोधित्वं तदधिकरणावृत्तित्वम् । न तु नियमोऽप्यत्रान्तर्भवति, येनान्योन्याश्रयः स्यादिति । नापि तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं व्यापकत्वम्, येन संयोगादीनामनुपाधित्वप्रसङ्गः स्यादिति । किंतु तद्वन्निष्ठसकलधर्मसामानाधिकरण्यम् । यद्वा न संयोगादिरुपाधिः । किंतु संयोगवत्त्वादि । तच्च व्याप्यवृत्त्येवेति । यद्वा संयोगाद्यपि व्याप्यवृत्त्येवास्तु । न काचित् क्षतिः ।

नापि द्वितीयः, दूषकताबीजसाधारण्येन समव्याप्तिकस्यैव परमुपाधित्वं, न विषमव्याप्तिकस्येति नियामकाभावात् । दूषकताबीजं त्वग्रे दर्शयिष्यते ।

ननु प्रयोजको धर्म उपाधिरित्युच्यते । प्रयोजकत्वं च न न्यूनाधिकवृत्तेः ; किंतु समनियतस्यैव । अधिकवृत्तेः प्रयोजकत्वे प्रयोज्येनापि

अव्याप्यवृत्तित्वेनेति । स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेनेत्यर्थः । दूषयति—तन्नेति । अन्योन्याश्रयपरिहारेऽप्यव्याप्तिनिरासः कथमित्यत आह—नापीति । व्यापकत्वस्य नोक्तं लक्षणम् ; किंत्वन्यदेवेत्याह—किंत्विति । तद्वदिति । साधनवन्निष्ठा ये सकलधर्माः पर्वतत्वादयः, तत्सामानाधिकरण्यं तदधिकरणाधिकरणत्वमित्यर्थः । इदं च संयोगादावप्यस्त्येवेति नाव्याप्तिरिति भावः । पूर्वोक्तव्यापकलक्षणेऽपि नाव्याप्तिरित्याह—यद्वेति । न काचित् क्षतिरिति । संयोगादीनामव्याप्यवृत्तित्वस्य निर्वक्तुमशक्यत्वेन पूर्वमेव दूषितत्वादिति भावः ।

नापि द्वितीय इति । साध्यसमव्यापकत्वे सति साधनाव्यापक उपाधिरिति पक्ष इत्यर्थः । नियामकाभावादिति । उभयोरप्युपाधित्वमुपपद्यत इत्युक्तलक्षणस्य तत्राव्याप्तिरिति भावः । अग्र इति । सिद्धान्त इत्यर्थः ।

समव्याप्तिकस्यैवोपाधित्वमित्यत्रोपष्टम्भकमाशङ्कते—नन्विति । किंतु समनियतस्येति । साध्यसमव्यापकस्येत्यर्थः । ननु त्वत्पक्षेऽप्ययं दोषो दुर्वार इत्यत आह—समवृत्तेरिति । अन्यथेति । समवृत्तेः प्रयोजकत्वानङ्गीकार इत्यर्थः ।

तत्र तत्र भवितव्यम् । तद्विना तिष्ठतः कथं प्रयोजकत्वम्? न्यूनवृत्तेः प्रयोजकत्वे तद्विरहे प्रयोज्यविरहापत्तेः । समवृत्तेः प्रयोजकत्वे नायं दोषः । एतत्त्रयमङ्गीकर्तव्यम् । अन्यथा पक्षेतरस्याप्युपाधित्वप्रसङ्ग इति केचित् । तन्मन्दम् । समनियतस्यैव धर्मस्य प्रयोजकत्वमित्यत्र प्रयोजकत्वं किं व्यापकत्वम्? व्याप्यत्वम्? उभयं वा? आद्ये विषमव्याप्तस्यापि व्यापकत्वादनैकान्तिकत्वम् । द्वितीयेऽपि तथैव । न हि समव्याप्तमेव व्याप्यम् । तृतीये समव्याप्तमेव समव्याप्तमित्युक्तं भवति । नापि पक्षेतरमात्रस्योपाधित्वम्, स्वव्याघातकत्वादित्युक्तत्वात् ।

ननूपाधिर्नामायमुच्यते—यद्धर्मोऽन्यनिष्ठतया प्रतिभासते । अत एव "तद्धर्मभूता हि व्याप्तिर्जपाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीत्युपाधिरसावुच्यते" इति कुसुमाञ्जलिः । "अन्ये परप्रयुक्तानां व्याप्ती-

उपाधित्वप्रसङ्ग इति । सर्वत्रेति शेषः । केचिदिति । उदयनाचार्यपादावलम्बिन इत्यर्थः । दूषयति—तदिति । समवृत्तेः प्रयोजकत्वमित्यर्थः । समनियतस्यैव धर्मस्य प्रयोजकत्वं न संभवति, विकल्पासहत्वादित्याह—समेति । आद्य इति । व्यापकत्वपक्ष इत्यर्थः । विषमेति । आर्द्रेन्धनसंयोगादेरित्यर्थः । प्रयोजकसत्त्वे प्रयोज्येनापि भवितव्यम् । तदानैकान्तिकत्वमिति भावः । तथैवेति । अनैकान्तिकत्वमेवेत्यर्थः । अनैकान्तिकत्वमेवोपपादयति—न हीति । [1]असमव्याप्तस्यार्द्रेन्धनादेरपि व्याप्यत्वादिति भावः । तृतीय इति । व्याप्यत्वव्यापकत्वरूपोभयपक्ष इत्यर्थः । समव्याप्तस्यैवोपाधित्वानङ्गीकारेऽनुमानमात्रे पक्षेतरत्वस्योपाधित्वं स्यादित्यत आह—नापीति । उक्तत्वादिति । असाधकत्वानुमानेऽपि स एव दोष इत्यत्रेत्यर्थः ।

पुनः समव्याप्तस्यैवोपाधित्वमित्यत्रोपोद्बलकमाशङ्कते—नन्विति । यद्धर्म इति । उपाधिनिष्ठधर्म इत्यर्थः । अन्यनिष्ठतया । साधननिष्ठतयेत्यर्थः । तद्धर्मभूता व्याप्तिः साधनाभिमते चकास्तीत्युपाधिरसावुच्यत इत्यन्वयः । तत्र दृष्टान्तमाह—जपाकुसुमेति । अत्रोदयनगृहीतं प्रमाणं प्रमाणयति—[2]अन्य इति । ननु साध्य-

1 असमव्याप्तस्येति । वह्नेरव्यापकस्य धूमस्य वह्निव्याप्यत्वात् व्यभिचारः सुलभो बोध्यः ।

2 अन्य इतीति ।

नामुपजीवकाः ” इति चाचार्यवचनम् । न च व्याप्तत्वमात्रेण दूषकत्वम् । अतो व्यापकत्वमप्यन्तर्भावनीयमिति समव्याप्तस्यैवोपाधित्वं, न विषमव्याप्तस्येति । तन्न । न हि समव्याप्त एव लोके उपाधिपदप्रयोगः । किंत्वन्यत्रापि ; यथा—‘ लाभोपाधिनिबन्धनममीषां ग्रामगमनम् ’ इत्यादि । शास्त्रे दूषकत्वार्थं व्यापकत्वमवश्यमन्तर्भाव्यम् । ततस्तावन्मात्रेणैवोपपत्तावलं स्वेच्छाप्रयुक्तव्याप्यत्वान्तर्भावेणेति । ग्रन्थकाराणामभिप्रायस्त्वन्यथा वर्णनीयः ।

नवीनास्तु—उपाधिर्नामासावुच्यते यदभावो व्यभिचारविरोधी । न च विषमव्याप्तिकस्याभावो व्यभिचारं विरुणद्धि ; किंतु समव्याप्तिकस्य ।

व्याप्यत्वमात्रे सति साधनाव्यापकत्वमस्त्वित्याशङ्क्याह—**न चेति** । व्याप्यस्य न्यूनवृत्तित्वात्तद्विरहे प्रयोज्यत्वविरहापत्तेरिति भावः । दूषयति—**तन्नेति** । ननु समव्याप्तस्यैवोपाधित्वं, न विषमव्याप्तिकस्येत्याशङ्क्योभयत्राप्युपाधिपदप्रयोगादुभयोरप्युपाधित्वमित्याह—**न हीति** । ननु साध्यव्याप्यत्वमत्रान्तर्भाव्यं वा, तद्व्यापकत्वं वेति संदेहे नियामकाभावादुभयोरप्यत्रान्तर्भाव इति पूर्ववादिनोक्तमाशङ्क्य दूषकत्वार्थं निर्णयमाह—**व्यापकत्वमिति** । ननु साध्यव्यापकत्ववत्तद्व्याप्यत्वमपि स्वीक्रियतामित्यत आह—**ततस्तावन्मात्रेणैवेति** । साध्यव्यापकत्वमात्रेणैवेत्यर्थः । लाघवात्तावन्मात्रमेवास्तु ; न त्वतिरिक्तमपि ; गौरवात् मानाभावात् अव्याप्तेश्चेति भावः । [1]तर्ह्याचार्यवचनविरोधः स्यादित्याशङ्क्याह—**ग्रन्थकाराणामिति । अन्यथेति** । समव्याप्तस्यापि कचिदुपाधित्वमस्तीति प्रकारान्तराभ्युपगमेनेत्यर्थः ।

नैयायिकनव्यमतं दूषयितुमुपन्यस्यति—[2]**नवीनास्त्विति** । प्रकृतेऽपि तथैवास्त्वित्याशङ्क्याह—**न चेति** । ‘ यागीयहिंसा, अधर्मसाधिका, हिंसात्वात् ’ इत्यत्र

“ अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा ॥ ”

इति कुमारिलस्य वार्तिकम् । इदं चोदयनाचार्यैः प्रमाणतया कुसुमाञ्जलावुदाहृतम् । अन्ये ये सोपाधिका हेतवः, ते परप्रयुक्तानाम् उपाधिप्रयुक्तानां व्याप्तीनामुपजीवकाः । अतः तैर्हेतुभिः दृष्टैरपि पक्षवृत्तितया दृष्टैरपि व्यापकांशावधारणा साध्यानुमितिर्न भवतीति तदर्थः ।

लाभोपाधिना ग्रामगमनमित्यत्रोपाधिशब्दः प्रयोजनपरः ।

1 आचार्यवचनविरोध इति । कुसुमाञ्जलौ प्रमाणतयोदाहृतवार्तिकप्रणेता कुमारिलोऽत्राचार्यपदेन विवक्षितः ।

2 नवीनास्त्विति । यदभावो व्यभिचारविरोधी, स उपाधिः । अव्याप्यत्वसंबन्धावच्छिन्न-

यत्र व्यभिचारस्तत्र समव्याप्तमन्ततः साध्यमप्युपाधिः संभवत्येव, स्वं प्रति स्वस्य व्यापकत्वे सति व्याप्यत्वात्; साधनाव्यापकत्वाच्च । विषमव्याप्तिके तु साध्यस्य व्यापको यो धर्मस्तद्व्याप्यं चेत्येतावता न तद्व्याप्यत्वविधिः । दृश्यते ह्यनित्यत्वस्य व्यापकं प्रमेयत्वं, तद्व्याप्यं गुणत्वम् । न च गुणत्वानित्यत्वयोः परस्परं व्याप्यव्यापकभावमातिष्ठामहे । समव्यापकत्वे तु तद्व्यापकव्याप्येन व्याप्तं व्यभिचारि चेति व्याघात एवेति ।

तन्न । अत्र ह्यव्यभिचारे साध्यव्याप्यव्याप्यत्वं प्रयोजकम् । न तु साध्यव्यापकव्याप्यत्वम्; भवतैव व्यभिचारस्य दर्शितत्वात् । न च साध्यव्याप्यव्याप्यत्वमेव तर्ह्यनौपाधिकत्वमास्तामिति वाच्यम् । साध्यव्याप्यमित्यत्रापि तदेवानौपाधिकत्वं वक्तव्यमित्यनवस्थितिः । तस्मात् समव्याप्तस्यैवोपाधित्वमिति वचनं मन्दमेव ।

विषमव्याप्तिकस्योपाधित्वानभ्युपगमेऽपि व्यभिचारोपलब्धेरिति भावः । त्वत्पक्षेऽपि तर्हि वह्निमत्त्वहेतुरव्यभिचरितोऽस्त्वित्यत आह—यत्रेति । ननु साध्यस्य कथमुपाधित्वम्? समव्याप्तत्वाभावादित्यत आह—स्वं प्रतीति । अभेदेऽपि व्याप्यव्यापकभावोऽङ्गीकरणीयः, आवश्यकत्वादिति भावः ।

नवीनमतं दूषयति—तन्नेति । अव्यभिचारे किं प्रयोजकम्? साध्यव्याप्यव्याप्यत्वं वा, साध्यव्यापकव्याप्यत्वं वेति विशये परिच्छेदमाह—अत्र हीति । कुत इत्यत आह—भवतैवेति । दर्शितत्वादिति । 'शब्दोऽनित्यः, गुणत्वात्' इत्यादावित्यर्थः । समव्याप्तस्यैवोपाधित्वाभावमुपसंहरति—तस्मादिति ।

प्रतियोगिताकयदभावः साध्यव्यभिचारविरोधी साध्यव्यभिचाराभावव्याप्यः स उपाधिरित्यर्थः । धूमवान्वह्नेरित्यत्रार्द्रेन्धनप्रभववह्निरुपाधिः । स चाव्याप्यत्वसंबन्धेन स्वाभाववद्वृत्तित्वसंबन्धेन वह्नौ वर्तते । आर्द्रेन्धनप्रभववह्न्यभाववत्ययोगोलके वह्नेः सत्त्वात् । तत्र धूमव्यभिचारोऽस्ति । अव्याप्यत्वसंबन्धेनोपाधेरभावो यत्र, तत्र साध्यव्यभिचाराभाव इति लभ्यते । यद्व्याप्यत्वं साध्यव्याप्यत्वव्याप्यं स उपाधिरिति पर्यवसितम् । स च साध्यसमव्याप्त एव भवितुमर्हति । साध्यव्यापकव्याप्यत्वं यत्र, तत्र साध्यव्याप्यत्वं नास्ति । अनित्यत्वव्यापकप्रमेयत्वस्य व्याप्यं गुणत्वम्, । तच्च नानित्यत्वव्याप्यम्, नित्यगुणस्यापि सत्त्वात् । साध्यसमव्याप्तव्याप्यं तु

नापि तृतीयः । यद्यपि 'वायुः प्रत्यक्षः, त्वगिन्द्रियग्राह्यधर्मवत्त्वात् स्पर्शवत्' इत्यत्र पक्षधर्मो द्रव्यत्वं, तदवच्छिन्नसाध्यव्यापकं रूपवत्त्वमुपाधिरनेन परिगृह्यते ; तथापि प्रसिद्धोपाधावव्याप्तिः । को हि पक्षवृत्तिस्तत्रावच्छेदको धर्मः ? यत्किंचित्पक्षवृत्तिधर्मस्यावच्छेदकत्वेऽतिव्याप्तिः । किंच 'शब्दोऽभिधेयः प्रमेयत्वात्' इत्यत्राश्रावणत्वमुपाधिः स्यात् । भवति शब्दवृत्तिगुणत्वावच्छिन्नाभिधेयत्वस्याश्रावणत्वं व्यापकं, साधनाव्यापकं च । शब्दे गुणत्वं नैयायिकप्राभाकरयोः संमतम् । अतस्तत्राश्रावणत्वव्यावृत्त्याभिधेयत्वमेव व्यावर्तेत ।

नापि तृतीय इति । पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वपक्ष इत्यर्थः । रूपवत्त्वादौ लक्षणसद्भावं दर्शयति—यद्यपीत्यादीना । वायुरिति । कार्यरूपो वायुरित्यर्थः । अन्यथा, अंशतो बाधापत्तेरिति भावः । त्वगिति । त्वगिन्द्रियेण ग्राह्यो यो धर्मः, [1]पक्षे स्पर्शः, दृष्टान्ते स्पर्शत्वं, तद्वत्त्वादित्यर्थः । अत्र परमाण्वादौ व्यभिचारवारणाय हेतौ त्वगिन्द्रियेति । द्रव्यत्वमिति । बहिर्द्रव्यत्वमित्यर्थः । [2]तेनात्मनि रूपादौ न साध्याव्यापकत्वापत्तिरिति ध्येयम् । तर्हीदमेव लक्षणमस्त्वित्याशङ्क्याव्याप्त्या दूषयति—तथापीति । पक्षधर्मावच्छिन्नसाध्यव्यापके लक्षणस्य सत्त्वेऽपीत्यर्थः । प्रसिद्धोपाधाविति । आर्द्रेन्धनसंयोगादावित्यर्थः । ननूपाधिविशेषस्यैव लक्षणं, नोपाधिमात्रस्य, येनाव्याप्तिः स्यादित्यरुचेराह—को हीति । किंशब्दो निषेधपरः । न कोऽपीत्यर्थः । साध्यप्रसिद्ध्यवच्छेदकधर्मस्य यावत्त्वं विवक्षितं वा ? यत्किंचित्त्वं वा ? इति विकल्प्य, नाद्यः 'वायुः प्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वात्'

साध्यव्याप्यमेव । प्रमेयत्वं तु नानित्यत्वव्याप्यं, नित्यस्यापि प्रमेयस्य सत्त्वात् । अतश्चोपाधिः साध्यसमव्याप्त एवेति भावः ।

1 पक्षे स्पर्शः, दृष्टान्ते स्पर्शत्वमिति । वायौ पक्षे त्वगिन्द्रियग्राह्यधर्मवत्त्वरूपहेतोरुपपादनावसरे धर्मपदेन स्पर्शो ग्राह्यः । दृष्टान्ते स्पर्शे हेतोरुपपादनावसरे धर्मपदेन स्पर्शत्वं ग्राह्यमित्यर्थः ।

2 तेनात्मनि रूपादौ न साध्याव्यापकत्वापत्तिरिति । द्रव्यत्वे सति प्रत्यक्षत्वं मानसप्रत्यक्षगोचरे आत्मनि वर्तते । तत्र रूपवत्त्वं नास्तीत्यात्मान्तर्भावेण रूपस्य द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकत्वं नास्ति । अतो द्रव्यत्वपदेन बहिर्द्रव्यत्वं विवक्षितम् । तच्चात्मनि नास्तीति नात्मान्तर्भावेण साध्याव्यापकत्वमिति समुदितार्थः ।

नापि चतुर्थः । तथा सति 'क्षित्यादिकं सकर्तृकं कार्यत्वात्' इत्यत्राणुव्यतिरिक्तत्वमुपाधिः स्यात् । स हि पक्षे द्व्यणुके न वर्तते ; साध्यव्यापकश्च भवति । [1]तथा 'श्रूयमाणो वर्णात्मकः शब्दो नित्यः, कृतकत्वात्' इत्यत्र ध्वन्यतिरिक्तश्रावणान्यत्वमुपाधिः स्यात्, सकलपक्षावृत्तित्वात् । 'अन्धकारो द्रव्यं, स्वातन्त्र्येण प्रतीयमानत्वात्' इत्यत्राश्रावणत्वमुपाधिर्न स्यात्, पक्षवृत्तित्वात् ।

इत्यत्रोद्भूतरूपवत्त्वस्यानुपाधित्वापत्तेः, तस्य साध्ये प्रसिद्ध्यवच्छेदकप्रमेयत्वाद्यवच्छिन्नप्रत्यक्षत्वाद्यव्यापकत्वादिति प्रथमपक्षदूषणं मनसि निधाय द्वितीयं दूषयवि—यत्किंचिदिति । इदं च पक्षधर्मविशेषणम् । अतिव्याप्तिरिति । 'पर्वतो वह्निमान् धूमवत्त्वात्' इत्यत्र महानसत्वावच्छेदेन प्रसिद्धवह्निव्यापकव्यजनवत्त्वादाविति शेषः । ननु यत्किंचिद्धम एव विवक्षितः । किंतु साधनव्यापकीभूतः । व्यजनवत्त्वं तु न धूमव्यापकीभूतधर्मावच्छिन्नवह्निव्यापकमिति नोक्तातिव्याप्तिरित्यरुचेराह— किंचेति । अश्रावणत्वे लक्षणसत्त्वं दर्शयति—भवतीति । ननु गुणत्वं कथं शब्दधर्मः? शब्दस्य द्रव्यत्वादित्यत आह—शब्द इति । ध्वन्यात्मकः शब्द इत्यर्थः । ननु तत्राश्रावणत्वं लक्ष्यम् । अतो नोक्तदोष इत्याशङ्क्य दूषकताबीजाभावान्न लक्ष्यत्वमित्याह—अतस्तत्रेति ।

नापि चतुर्थ इति । पक्षावृत्तित्वे सति साध्यव्यापकत्वपक्ष इत्यर्थः । अतिव्याप्त्या दूषयति—तथा सतीति । एतादृशलक्षणाभ्युपगमेऽपीत्यर्थः । अत्र पक्षसाध्यहेतूनां प्रथमपद्यव्याख्यानावसरे निरूपितत्वान्न खण्डनकारोक्तदोषावकाश इति ध्येयम् । अणुव्यतिरिक्तत्वे लक्षणसद्भावं दर्शयति—स हीति । यत्तु तस्य लक्ष्यत्वमेवास्त्विति ; तन्न । अत्राणुव्यतिरिक्तत्वव्यतिरेकः[2] क्षित्यादेरेकदेशवृत्तित्वाद्भागासिद्ध इत्यलक्ष्यत्व-

1 मूले तथेति । यद्वेति टीकासंमतः पाठः ।

2 क्षित्यादेरेकदेशवृत्तित्वाद्भागासिद्ध इति । क्षित्यादिकं सकर्तृकं कार्यत्वादित्यनुमानेऽणुव्यतिरिक्तत्वस्योपाधित्वस्वीकारे, तदभावेन पक्षे सकर्तृकत्वव्यतिरेकः साधनीयः । तच्च न संभवति । पक्षतावच्छेदकाक्रान्ते द्व्यणुकेऽणुव्यतिरिक्तत्वाभावस्य सत्त्वेऽपि तदितरकार्येऽणुव्यतिरिक्ते तस्यासत्त्वेन हेतोः पक्षतावच्छेदकाव्यापकत्वरूपभागासिद्धेः सत्त्वात् । एवंच प्रतिरोधानुमानासंभवेन दूषकताबीजाभावादणुव्यतिरिक्तत्वस्योपाधित्वं न स्वीकर्तुं शक्यत इति समुदितार्थः ।

नापि पञ्चमः । पर्यवसितत्वं पक्षधर्मताबललभ्यत्वम् । यथा 'शब्दो नित्यत्वातिरिक्तैतद्धर्मातिरिक्तधर्मवान्, प्रमेयत्वात्' इत्यत्र कृतकत्वमुपाधिः पर्यवसितस्यानित्यत्वस्य व्यापकः । कृतकत्वं चेत् साध्यते, तदा तत्र पर्यवसितकृतकत्वव्यापकमित्यनित्यत्वमुपाधित्वेनोपपद्यते । अत एव,

"वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः ।
पर्यवसितं नियमयन् दूषकताबीजसाम्राज्यात् ॥"

इति रत्नकोशकारः । तन्न । एवंभूतपर्यवसितसाध्यव्यापको वक्तव्यः ।

मेवेति दिक् । यद्वेति । अत्र शब्दमात्रस्य पक्षत्वे, अंशतः सिद्धसाधनम्, ध्वन्यात्मकशब्देऽनित्यत्वस्योभयवादिसंमतत्वात् । तदर्थमुक्तं वर्णात्मक इति । एवमप्यश्रूयमाणशब्दांशेऽनित्यत्वसाधनायोगाद्बाधः स्यात् । तदर्थं श्रूयमाण इति । शेषमतिरोहितार्थम् । अव्याप्तिमप्याह—अन्धकार इति । तत्र हेतुमाह—पक्षेति ।

नापि पञ्चम इति । पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वपक्ष इत्यर्थः । रत्नकोशकाराभिमतपर्यवसितशब्दार्थमाह—पर्यवसितत्वमिति । लक्ष्ये लक्षणानुगतिं दर्शयति—यथेति । शब्द इति । वर्णात्मक इत्यर्थः । नित्यत्वेति । नित्यत्वातिरिक्तः एतद्धर्मातिरिक्तः शब्दधर्मातिरिक्तः धर्मो यस्येति बहुव्रीहिः । नित्यत्वातिरिक्तेति पदं विहाय तदितरमात्राभिधानेऽनित्यत्वधर्मानाश्रयत्वे बाधः स्यात् । तदर्थं तदुपात्तम् । नन्वनित्यत्वस्यापि तद्धर्मत्वात्कथं नोक्तदोष इति चेत्; न । एतद्धर्मशब्देनैतन्मात्रनिष्ठो धर्मोऽभिधीयते । अनित्यत्वस्य शब्दातिरिक्तवृत्तित्वान्नोक्तदोष इति ध्येयम् । एतद्धर्मातिरिक्तपदमपहाय नित्यत्वातिरिक्तधर्मवानित्युक्ते शब्दत्वधर्माश्रयत्वेन सिद्धसाधनता । तदर्थं तदुपात्तम् । ननु कृतकत्वमेव शब्दस्य साध्यते । अतः कथं तस्योपाधित्वमित्यत आह—कृतकत्वं चेदिति । वाद्युक्तेति । वाद्युक्तसाध्यनियमात् च्युतोऽपि । वाद्यभिहितसाध्यप्रतियोगिकव्याप्तेः स्रस्तोऽपि; शुद्धसाध्याव्यापकोऽपीति यावत् । उपाधिः कथकैः [1]कथात्रयवेदिभिरुद्भाव्य इति योजना । ननु साध्यव्यापकत्वाभावात्कथमुपाध्युद्भावनमित्याशङ्क्याह—पर्यवसितमिति । पर्यवसितं साध्यमित्यर्थः । नियमयन् । व्याप्नुवन्नित्यर्थः । तत्र हेतुमाह—

1 कथात्रयवेदिभिः । वादजल्पवितण्डात्मककथात्रयवेदिभिरित्यर्थः ।

तथाच द्व्यणुकस्य सावयवत्वे सिद्धे, 'द्व्यणुकमनित्यद्रव्यासमवेतं, जन्यमहत्त्वानधिकरणद्रव्यत्वात्' इत्यत्र निःस्पर्शद्रव्यसमवेतत्वमुपाधिः प्रसज्येत। भवति हि नित्यद्रव्यसमवेतत्वं पर्यवसितं साध्यम्। तस्य व्यापकं च निःस्पर्शद्रव्यसमवेतत्वं साधनाव्यापकं च।

नापि षष्ठः, रासभादीनामप्युपाधित्वप्रसङ्गात्, रासभविशिष्टे साधने साध्यसंबन्धात्। यद्विशिष्ट एव साधने साध्यसामानाधिकरण्यं विवक्षितमिति चेत्; न, प्रमेयत्वादीनामुपाधित्वप्रसङ्गात्। यद्विशिष्टसाधने साध्यसामानाधिकरण्यमस्त्येवेति चेत्; न, साध्याव्यापकस्याप्युपाधित्वप्रसङ्गात्; यथा गुरुत्वेन रूपवत्त्वे साध्ये गन्धवत्त्वमिति।

दूषकताबीजेति। शुद्धसाध्यव्यापकत्वाभावेऽपि पर्यवसितसाध्यव्यापकत्वमस्त्येवेत्युपाध्युद्भावनं दूषकताबीजमिति युज्यत इति भावः। अतिव्याप्त्या दूषयति—तथाचेति। वक्ष्यमाणानुमानस्य विशेषणासिद्धिवारणार्थमाह—द्व्यणुकस्येति। सिद्ध इति। कार्यद्रव्यत्वेन हेतुनेति भावः। अनित्यद्रव्यासमवेतमिति। नित्यद्रव्यसमवेतमित्यर्थः। जन्येति[1]। द्रव्यत्वादित्युक्ते घटादौ व्यभिचारः। तदर्थं महत्त्वानधिकरणेति। महत्त्वानधिकरणत्वादित्युक्ते घटगतपरिमाणादौ व्यभिचारः। तदर्थमुक्तं द्रव्यत्वेति। तावत्युक्ते मनसि व्यभिचारः। तदर्थं जन्येति। साधनव्यापकतापरिहारार्थं निःस्पर्शपदम्। उपाधौ निःस्पर्शद्रव्यसमवेतत्वे लक्षणसद्भावं दर्शयति—भवति हीति।

नापि षष्ठ इति। यद्विशिष्टसाधने साध्यसामानाधिकरण्यमिति पक्ष इत्यर्थः। अतिव्याप्त्या दूषयति—रासभादीनामिति। रासभादौ लक्षणसद्भावं दर्शयति—रासभेति। शङ्कते—यद्विशिष्ट इति। परिहरति—नेति। पुनः शङ्कते—यद्विशिष्टेति। निषेधति—नेति। उपाधित्वप्रसङ्गमेव दर्शयति—यथेति।

वल्लभमतं दूषयितुमुपन्यस्यति—यत्त्विति। तन्मन्दमित्यनेन संबध्यते। पूर्वोक्तदूषणकदम्बकवलितमित्याह—लक्षणेति। एवमिति। यथा लक्षणं दुर्निरूपं,

1 जन्येति। जन्यमहत्त्वानधिकरणद्रव्यत्वादित्यत्र जन्यं च तत् महत्त्वानधिकरणद्रव्यं चेति समासः। जन्यत्वं न महत्त्वविशेषणम्, तथा सति मनसि व्यभिचारवारणासंभवादिति बोध्यम्।

यत्तु कैश्चिदुक्तम्—इदमुपाधिस्वरूपमात्रम्। लक्षणं पुनः साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति। तन्मन्दम्। लक्षणदूषणं प्रागुक्तमेव। एवं स्वरूपमपि। स्वरूपार्थस्तु चिन्त्यते— किमुपाधिलक्ष्यतावच्छेदको धर्मः स्वरूपशब्दार्थः? उपाधिवृत्तिधर्ममात्रं वा? उपाधिरेव वा? नाद्यः। लक्ष्यतावच्छेदजधर्मः सर्वत्र समव्याप्त एव; अत्र तु न तथेति दर्शितमेव। द्वितीयेऽतिव्याप्तिः, लक्ष्यवृत्तिधर्मस्याधिकवृत्तित्वात्। तृतीये, किं स्वरूपं कुत्रोपाधिरिति चिन्त्यमानमद्यापि न निर्वहति।

नापि सप्तमः। 'प्रध्वंसः प्रध्वंसप्रतियोगी, जन्यत्वात्' इत्यत्र भावत्वमुपाधिः। स च प्रागभावावृत्तिः। अतस्तस्य साध्याव्यापकत्वादुपाधित्वं न संभवतीति तत्परिहारार्थं साध्यसाधनसंबन्धव्यापकत्वादुपाधित्वमस्याङ्गीक्रियते। अस्ति हि जन्यत्वानित्यत्वसंबन्धस्य भावत्वं व्यापकम्। तन्न। इहोपाधिव्यतिरेकेण साध्यसाधनसंबन्धव्यतिरेकः साध्यः।

तथा स्वरूपमपीत्येवंशब्दार्थः। **दर्शितमेवेति**। प्रयोजकत्वं च न न्यूनाधिकवृत्तेरित्यादावित्यर्थः। **अधिकवृत्तित्वादिति**। रासभादाविति भावः।

**नापि सप्तम इति**। साध्यसाधनसंबन्धव्यापकत्वे सति साधनाव्यापकत्वपक्ष इत्यर्थः। सत्यन्तस्य प्रयोजनमाह—**प्रध्वंस इति**। सत्यन्तविशेषणदानेन नाव्याप्तिरित्याह—**अस्ति हीति**। लक्षणं निषेधति—**तन्नेति**। 'ध्वंसो विनाशी, जन्यत्वात्' इत्यत्र जन्यत्वानित्यत्वसंबन्धस्य व्यापकं भावत्वमुपाधिरिति वदता वक्तव्यम्—किमेतस्य सत्प्रतिपक्षोत्थापकत्वेन दूषणत्वम्? किं वा व्यभिचारोन्नायकत्वेन? इति विकल्प्याद्यं कल्पं निराकरोति—**इहोपाधीति**। **अर्थान्तरत्वमिति**। प्रकृतानुपयुक्तकथनमित्यर्थः। अर्थान्तरमेव दर्शयति—**अनित्यत्वस्येति**। अर्थान्तरं पुरुषदोषः, न वस्तुदोष इत्यरुचेराह—**जलमिति**। पृथिवीत्वे लक्षणसद्भावं दर्शयति—**भवति हीति**। न द्वितीय इत्याह—**नापीति**। व्यभिचारोन्नयनं दूषयितुमुपन्यस्यति—**एवं हि तदिति**। तत् दूषयति—**तदेतदिति**। एतादृशसाधनमित्यर्थः। प्रागभावत्वे व्यभिचारमुपपादयितुं साध्याभावं दर्शयति—**प्रागभावेति**। दोषान्तरमाह—**किंचेति**। असाधकतायां व्यर्थविशेषणत्वं दर्शयितुं हेत्वर्थं परिच्छिनत्ति—**साध्यसाधनेति**। अस्त्वेवं हेत्वर्थः। कथमसाधकतायां वैयर्थ्यमित्यत आह—**तथाचेति**।

तत्रार्थान्तरत्वमेव । अनित्यत्वस्य प्राक्प्रसाध्यतया प्रकृतत्वात्तद्व्यतिरेकः साधयितुमुचितः । न तु जन्यत्वानित्यत्वसंबन्धव्यतिरेकः । 'जलं प्रमेयं रसवत्त्वात्' इत्यत्र पृथिवीत्वस्योपाधित्वप्रसङ्गाच्च । भवति हि प्रमेयत्वरसवत्त्वसंबन्धस्य पृथिवीत्वं व्यापकं रसवत्त्वाव्यापकं च । नापि व्यभिचारोन्नयनम् । एवं हि तत्—'कृतकत्वमनित्यत्वव्यभिचारि, कृतकत्वानित्यत्वसंबन्धव्यापकभावत्वव्यभिचारित्वात् । तदेतदनैकान्तिकम्, प्रागभावमात्रवृत्तिधर्मस्यानित्यत्वव्याप्यत्वात् । किंचेदमसाधकं सोपाधिकत्वादित्यत्र साध्यसाधनसंबन्धव्यापकव्यभिचारित्वादिति हेत्वर्थः । तथा-च साधनसंबन्धपदं व्यर्थम् । साध्यव्यापकव्यभिचारित्वादित्यस्यैवासाधकतासाधकत्वात् ।

नाप्यष्टमः, सप्तमपक्षदोषदूषितत्वादिति पूर्वपक्षसंक्षेपः ।

अत्रोच्यते—उपाधिमात्रस्य लक्षणं केवलान्वयिव्यतिरिक्तधर्मत्वम् ।

नाप्यष्टम इति । साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक इत्यर्थः । तत्र हेतुमाह—सप्तमेति । सप्तमपक्षे ये दोषा अर्थान्तरातिव्याप्तिव्यभिचारप्रभृतयः, तैर्दूषितत्वादित्यर्थः ।

[1]किमेतानि सामान्यलक्षणानि ? किं वा विशेषलक्षणानि ? नाद्यः, शुद्धसाध्यव्यापकत्वस्य पक्षधर्मावच्छिन्नसाध्यव्यापकादावभावात् । तस्य च शुद्धसाध्यव्यापकेऽसत्त्वादव्याप्तिः परस्परम् । न द्वितीयः, अननुगमात् । सामान्यलक्षणकथनमन्तरेण विशेषलक्षणकथनानुपपत्तेः ; एकेन सामान्यलक्षणेनैवोपपत्तावनेकविशेषलक्षणानुसरणे गौरवाच्चेत्येतत्सर्वं मनसि निधायाह—इति पूर्वपक्षसंक्षेप इति ।

निरुक्तविकल्पानवकाशपुरःसरं सिद्धान्तं वक्तुं प्रतिजानीते—अत्रोच्यत इति । अत्र पूर्वपक्षे सिद्धान्त उच्यत इत्यर्थः । उपाधिलक्षणं न संभवतीति वदता वक्तव्यम्—किं सामान्यलक्षणं न संभवति ? किं वा विशेषलक्षणम् ? इति विकल्प्याद्यं कल्पं निराकरोति—उपाधिमात्रस्येति । धर्मत्वमात्रस्य लक्षणत्वे प्रमेयत्वादावतिव्याप्तिः ।

1 पूर्वपक्षसंक्षेप इति संक्षेपपदोपादानान्मनसि निहितं विस्तरं विवृण्वन्नेव तं ग्रन्थमवतारयति—किमेतानीत्यादिना ।

तदर्थमुक्तम्—केवलान्वयिव्यतिरिक्तेति । न च पक्षेतरेऽतिव्याप्तिः, तस्यापि क्वचिदुपाधित्वात् । न द्वितीयः, तत्साध्यव्यापकत्वे सति तत्साधनाव्यापकत्वं तद्विशेषलक्षणम् । [1]न च धूमवह्निसंबन्धे पक्षेतरत्वमुपाधिः स्यादिति वाच्यम्, आपाद्याप्रसिद्धेरिति ।

नन्वनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यम् । तच्च न केवलान्वयिधर्मव्यतिरिक्तधर्मत्वम्, अतिप्रसङ्गात् । [2]विशेषलक्षणस्य वह्निधूमसंबन्धे पक्षेतरत्वस्योपाधित्वप्रसङ्गादिति । तन्न । केवलान्वयिव्यतिरिक्तधर्मत्वस्य पक्षेतरत्वेऽपि सत्त्वेन तस्यापि क्वचिदनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकत्वेनाङ्गीकारात् । न च विशेषलक्षणे पर्वतेतरत्वमुपाधिः स्यादिति वाच्यम्, असाधकतानुमानेऽपि [3]तस्यैव दोषत्वेन स्वव्याघातकत्वादिति दिक् ।

वस्तुतस्तु—पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम् । अत्र पर्यवसितत्वं न पक्षधर्मताबललभ्यत्वं, येनोक्तदोषः स्यात् । किंतु यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नत्वम् । तद्धर्मसमानाधिकरणं पर्यवसितं साध्यम् । स च धर्मः क्वचित्साधनमेव । यथा 'ध्वंसो विनाशी जन्यत्वात्' इत्यत्र भावत्वाद्युपाधौ । क्वचित् द्रव्यत्वादिः । यथा 'वायुर्बहिरिन्द्रियप्रत्यक्षः, प्रमेयत्वात्' इत्यादौ रूपवत्त्वाद्युपाधौ ।

1 न च धूमवह्निसंबन्धे पक्षेतरत्वमुपाधिः स्यादिति । उपाधिपदवाच्यतावच्छेदकत्वं यदि धूमाव्यापकत्वे सति वह्निव्यापकतासामान्यनिष्ठं स्यात्, तदा पक्षेतरत्वनिष्ठधूमाव्यापकताविशिष्टवह्निव्यापकतानिष्ठमपि स्यादिति तात्पर्यार्थः । आपाद्याप्रसिद्धेरिति । धूमाव्यापकत्वविशिष्टवह्निव्यापकत्वाप्रसिद्ध्या तद्घटितापाद्याप्रसिद्धेरित्यर्थः । तद्घटितापादकाप्रसिद्धेश्चेति बोध्यम् ।

2 विशेषलक्षणस्य वह्निधूमसंबन्धे पक्षेतरत्वस्योपाधित्वप्रसङ्गादिति । वह्निधूमसंबन्धे वह्निधूमसंबन्धज्ञाने वह्निधूमव्याप्तिज्ञाने इति यावत् । पक्षेतरत्वस्येति । पक्षेतरत्वनिष्ठतद्रूपज्ञानस्य प्रतिबन्धकत्वप्रसङ्गादित्यर्थः । न चेष्टापत्तिः । पक्षेतरत्वनिष्ठसाध्यव्यापकत्वे सति साधनाव्यापकताज्ञानस्य प्रतिबन्धकतायाः सर्वसिद्धत्वेऽपि तन्निष्ठकिंचिद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकताज्ञानस्य प्रतिबन्धकतायाः केनाप्यनभ्युपगमादिति भावः ।

3 तस्यैव दोषत्वेनेति । पक्षेतरत्वस्यैव दोषत्वेनेत्यर्थः । मणिकारोक्तमुपाधिलक्षणं निरूपयति—वस्तुतस्त्विति ।

येनोक्तदोषः स्यादिति । द्व्यणुकमनित्यद्रव्यासमवेतं जन्यमहत्त्वानधिकरणद्रव्यत्वादित्यत्र पक्षधर्मताबलात्पर्यवसितस्य नित्यद्रव्यसमवेतत्वस्य व्यापके निःस्पर्शद्रव्यसमवेतत्वे उपाधित्वप्रसङ्गरूपो दोषः स्यादित्यर्थः ।

क्वचिन्महानसत्वादिः । यथा—'अयं धूमवान्वह्निमत्त्वात्' इत्यादौ व्यजनवत्त्वाद्युपाधौ । सर्वत्र शुद्धसाध्यव्यापकत्वाभावादित्थमवगन्तव्यम् । लक्षणगतविशेषणद्वयकृत्यं तूक्तमेव । अत्र साध्यप्रसिद्ध्यवच्छेदको धर्मो यत्किंचिद्धर्मः साधनव्यापकीभूतो विवक्षितः । तेन 'पर्वतो वह्निमान् धूमवत्त्वात्' इत्यादौ व्यजनवत्त्वादेर्महानसत्वावच्छेदेन सिद्धवह्निव्यापकत्वस्य सत्त्वेऽपि [1]धूमव्यापकीभूतधर्मावच्छिन्नवह्निव्यापकत्वाभावान्नातिव्याप्तिः । अत्रेदं चिन्त्यम्—'वायुर्बहिरिन्द्रियप्रत्यक्षः प्रमेयत्वात्' इत्यादौ द्रव्यत्वावच्छिन्नबहिरिन्द्रियप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वमुपाधिर्न स्यात्, द्रव्यत्वादेः साधनव्यापकीभूतत्वाभावेन तदवच्छिन्नसाध्यव्यापकत्वाभावादिति । अथैवमपि [2]शुद्धसाध्यव्यभिचारोन्नायकत्वाभावादनुपाधित्वं तस्येष्टम् । न चव्याभिचरितो हेतुः स्यादिति वाच्यम् । उक्तप्रणाड्या तत्र तस्यानुपाधित्वेऽपि, प्रत्यक्षसामग्र्यादेः साधनव्यापकधर्मावच्छिन्नसाध्यव्यापकस्य तत्राप्युपाधित्वसंभवात् । न च वाच्यम्—अस्यापि शुद्धसाध्यव्यभिचारोन्नायकत्वाभावादनुपाधित्वमिति । अविशेषितेन यद्व्यभिचारित्वेन लिङ्गेन हेतोर्विशिष्टसाध्यव्यभिचारे साध्यमाने [3]पक्षधर्मताबलात्केवलसाध्यव्यभिचारः सिध्यति, तस्यैव

1 धूमव्यापकीभूतधर्मावच्छिन्नवह्निव्यापकत्वाभावादिति । पर्वतचत्वरादिसाधारणं धूमं प्रति महानसत्वस्याव्यापकत्वादिति भावः । मणिकारोक्तलक्षणस्योपाधिविशेषेऽव्याप्तिदोषग्रस्तत्वस्य 'यद्व्यावृत्त्या' इत्यादिमूलप्रवृत्तिहेतुत्वं वक्ष्यन्, प्रथमतः साधनव्यापकीभूतसाध्यप्रसिद्ध्यवच्छेदककिंचिद्धर्मावच्छिन्नसाध्यव्यापकत्वनिवेशेऽव्याप्तिमाह—अत्रेदं चिन्त्यमिति ।

2 शुद्धसाध्यव्यभिचारोन्नायकत्वाभावादिति । व्यापकस्य व्यभिचारेण व्याप्यस्य व्यभिचारोऽनुमेयः । यो यद्व्यापकव्यभिचारी स सर्वोऽपि तद्व्यभिचारीति व्याप्तेः । रूपवत्त्वं च द्रव्यत्वविशिष्टस्यैव साध्यस्य व्यापकम् । अतश्च रूपवत्त्वव्यभिचारेण विशिष्टसाध्यस्यैव व्याप्यस्य व्यभिचारोऽनुमातुं शक्यते । न केवलसाध्यस्य व्यभिचार इति भावः ।

उक्तप्रणाड्येति । साधनव्यापकीभूतसाध्यप्रसिद्ध्यवच्छेदकधर्मावच्छिन्नसाध्यव्यापकत्वाभावेन । तत्र । प्रमेयत्वहेतौ । तस्य रूपवत्त्वस्य ।

3 पक्षधर्मताबलात्केवलसाध्यव्यभिचारः सिध्यतीति । विशिष्टसाध्यव्यभिचारे साध्यमाने हेतौ विशेषणाव्यभिचारस्य सत्त्वात्, विशिष्टसाध्यव्यभिचारो विशेष्यीभूतसाध्यव्यभिचारे पर्यवस्यति । विशेषणस्य साधनव्यापकत्व एव हेतौ विशेषणव्याप्ये विशेषणव्यभिचाराभावेन केवलसाध्यव्यभिचारः पर्यवस्येदिति साधनव्यापकधर्मावच्छिन्नसाध्यव्यापक एवोपाधिरिति समुदितार्थः ।

तदर्थमुक्तम्—केवलान्वयिव्यतिरिक्तेति । न च पक्षेतरेऽतिव्याप्तिः, तस्यापि क्वचिदुपाधित्वात् । न द्वितीयः, तत्साध्यव्यापकत्वे सति तत्साधनाव्यापकत्वं तद्विशेषलक्षणम् । [1]न च धूमवह्निसंबन्धे पक्षेतरत्वमुपाधिः स्यादिति वाच्यम्, आपाद्याप्रसिद्धेरिति ।

नन्वनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यम् । तच्च न केवलान्वयिधर्मव्यतिरिक्तधर्मत्वम्, अतिप्रसङ्गात् । [2]विशेषलक्षणस्य वह्निधूमसंबन्धे पक्षेतरत्वस्योपाधित्वप्रसङ्गादिति । तन्न । केवलान्वयिव्यतिरिक्तधर्मत्वस्य पक्षेतरत्वेऽपि सत्त्वेन तस्यापि क्वचिदनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकत्वेनाङ्गीकारात् । न च विशेषलक्षणे पर्वतेतरत्वमुपाधिः स्यादिति वाच्यम्, असाधकतानुमानेऽपि [3]तस्यैव दोषत्वेन स्वव्याघातकत्वादिति दिक् ।

वस्तुतस्तु—पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम् । अत्र पर्यवसितत्वं न पक्षधर्मताबललभ्यत्वं, येनोक्तदोषः स्यात् । किंतु यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नत्वम् । तद्धर्मसमानाधिकरणं पर्यवसितं साध्यम् । स च धर्मः क्वचित्साधनमेव । यथा 'ध्वंसो विनाशी जन्यत्वात्' इत्यत्र भावत्वाद्युपाधौ । क्वचित् द्रव्यत्वादिः । यथा 'वायुर्बहिरिन्द्रियप्रत्यक्षः, प्रमेयत्वात्' इत्यादौ रूपवत्त्वाद्युपाधौ ।

1 न च धूमवह्निसंबन्धे पक्षेतरत्वमुपाधिः स्यादिति । उपाधिपदवाच्यतावच्छेदकत्वं यदि धूमाव्यापकत्वे सति वह्निव्यापकतासामान्यनिष्ठं स्यात्, तदा पक्षेतरत्वनिष्ठधूमाव्यापकताविशिष्टवह्निव्यापकतानिष्ठमपि स्यादिति तात्पर्यार्थः । आपाद्याप्रसिद्धेरिति । धूमाव्यापकत्वविशिष्टवह्निव्यापकत्वाप्रसिद्ध्या तद्घटितापाद्याप्रसिद्धेरित्यर्थः । तद्घटितापादकाप्रसिद्धेश्चेति बोध्यम् ।

2 विशेषलक्षणस्य वह्निधूमसंबन्धे पक्षेतरत्वस्योपाधित्वप्रसङ्गादिति । वह्निधूमसंबन्धे वह्निधूमसंबन्धज्ञाने वह्निधूमव्याप्तिज्ञाने इति यावत् । पक्षेतरत्वस्येति । पक्षेतरत्वनिष्ठतद्रूपज्ञानस्य प्रतिबन्धकत्वप्रसङ्गादित्यर्थः । न चेष्टापत्तिः । पक्षेतरत्वनिष्ठसाध्यव्यापकत्वे सति साधनाव्यापकताज्ञानस्य प्रतिबन्धकतायाः सर्वसिद्धत्वेऽपि तन्निष्ठकिंचिद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकताज्ञानस्य प्रतिबन्धकतायाः केनाप्यनभ्युपगमादिति भावः ।

3 तस्यैव दोषत्वेनेति । पक्षेतरत्वस्यैव दोषत्वेनेत्यर्थः । मणिकारोक्तमुपाधिलक्षणं निरूपयति—वस्तुतस्त्विति ।

येनोक्तदोषः स्यादिति । द्व्यणुकमनित्यद्रव्यासमवेतं जन्यमहत्त्वानधिकरणद्रव्यत्वादित्यत्र पक्षधर्मताबलात्पर्यवसितस्य नित्यद्रव्यसमवेतत्वस्य व्यापके निःस्पर्शद्रव्यसमवेतत्वे उपाधित्वप्रसङ्गरूपो दोषः स्यादित्यर्थः ।

क्वचिन्महानसत्वादिः । यथा—'अयं धूमवान्वह्निमत्त्वात्' इत्यादौ व्यजनवत्त्वाद्युपाधौ । सर्वत्र शुद्धसाध्यव्यापकत्वाभावादित्थमवगन्तव्यम् । लक्षणगतविशेषणद्वयकृत्यं तूक्तमेव । अत्र साध्यप्रसिद्ध्यवच्छेदको धर्मो यत्किंचिद्धर्मः साधनव्यापकीभूतो विवक्षितः । तेन 'पर्वतो वह्निमान् धूमवत्त्वात्' इत्यादौ व्यजनवत्त्वादेर्महानसत्वावच्छेदेन सिद्धवह्निव्यापकत्वस्य सत्त्वेऽपि [1]धूमव्यापकीभूतधर्मावच्छिन्नवह्निव्यापकत्वाभावान्नातिव्याप्तिः । अत्रेदं चिन्त्यम्—'वायुर्बहिरिन्द्रियप्रत्यक्षः प्रमेयत्वात्' इत्यादौ द्रव्यत्वावच्छिन्नबहिरिन्द्रियप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वमुपाधिर्न स्यात्, द्रव्यत्वादेः साधनव्यापकीभूतत्वाभावेन तदवच्छिन्नसाध्यव्यापकत्वाभावादिति । अथैवमपि [2]शुद्धसाध्यव्यभिचारोन्नायकत्वाभावादनुपाधित्वं तस्येष्टम् । न चव्यभिचरितो हेतुः स्यादिति वाच्यम् । उक्तप्रणाड्या तत्र तस्यानुपाधित्वेऽपि, प्रत्यक्षसामग्र्यादेः साधनव्यापकधर्मावच्छिन्नसाध्यव्यापकस्य तत्राप्युपाधित्वसंभवात् । न च वाच्यम्—अस्यापि शुद्धसाध्यव्यभिचारोन्नायकत्वाभावादनुपाधित्वमिति । अविशेषितेन यद्व्यभिचारित्वेन लिङ्गेन हेतोर्विशिष्टसाध्यव्यभिचारे साध्यमाने [3]पक्षधर्मताबलात्केवलसाध्यव्यभिचारः सिध्यति, तस्यैव

1 धूमव्यापकीभूतधर्मावच्छिन्नवह्निव्यापकत्वाभावादिति । पर्वतचत्वरादिसाधारणं धूमं प्रति महानसत्वस्याव्यापकत्वादिति भावः । मणिकारोक्तलक्षणस्योपाधिविशेषेऽव्याप्तिदोषग्रस्तत्वस्य 'यद्व्यावृत्त्या' इत्यादिमूलप्रवृत्तिहेतुत्वं वक्ष्यन्, प्रथमतः साधनव्यापकीभूतसाध्यप्रसिद्ध्यवच्छेदककिंचिद्धर्मावच्छिन्नसाध्यव्यापकत्वनिवेशेऽव्याप्तिमाह—अत्रेदं चिन्त्यमिति ।

2 शुद्धसाध्यव्यभिचारोन्नायकत्वाभावादिति । व्यापकस्य व्यभिचारेण व्याप्यस्य व्यभिचारोऽनुमेयः । यो यद्व्यापकव्यभिचारी स सर्वोऽपि तद्व्यभिचारीति व्याप्तेः । रूपवत्त्वं च द्रव्यत्वविशिष्टस्यैव साध्यस्य व्यापकम् । अतश्च रूपवत्त्वव्यभिचारेण विशिष्टसाध्यस्यैव व्याप्यस्य व्यभिचारोऽनुमातुं शक्यते । न केवलसाध्यस्य व्यभिचार इति भावः ।

उक्तप्रणाड्येति । साधनव्यापकीभूतसाध्यप्रसिद्ध्यवच्छेदकधर्मावच्छिन्नसाध्यव्यापकत्वाभावेन । तत्र । प्रमेयत्वहेतौ । तस्य रूपवत्त्वस्य ।

3 पक्षधर्मताबलात्केवलसाध्यव्यभिचारः सिध्यतीति । विशिष्टसाध्यव्यभिचारे साध्यमाने हेतौ विशेषणाव्यभिचारस्य सत्त्वात्, विशिष्टसाध्यव्यभिचारो विशेष्यीभूतसाध्यव्यभिचारे पर्यवस्यति । विशेषणस्य साधनव्यापकत्व एव हेतौ विशेषणव्याप्ये विशेषणव्यभिचाराभावेन केवलसाध्यव्यभिचारः पर्यवस्येदिति साधनव्यापकधर्मावच्छिन्नसाध्यव्यापक एवोपाधिरिति समुदितार्थः ।

विशेषचिन्तायां तु यद्व्यावृत्त्या पक्षे यस्य साधनस्य साध्यं व्यावर्तते ; स धर्मस्तत्र हेतावुपाधिरिति । स च धर्मः कतमो भवति ? यस्य व्यावृत्तिः साध्यसाधनसंबन्धविरोधिनी ; यथार्द्रेन्धनत्वं वह्निमत्त्वे । व्यावर्तते हि तद्व्यावृत्त्या धूमवत्त्वमयोगोलके । एवं व्यावर्तते भावत्वव्यावृत्त्या प्रध्वंसेऽनित्यत्वमिति ।

ननु प्रागभावे व्यभिचारात्कथं भावत्वव्यावृत्त्या अनित्यत्वव्यावृत्तिः ? अथ साध्यसाधनसंबन्धो व्यावर्तत इत्युच्यते, तदार्थान्तरमिति ।

शुद्धसाध्यव्यभिचारोन्नायकस्योपाधित्वव्यवहारात् । स च साधनव्यापकधर्मावच्छिन्नसाध्यव्यापक एव भवति, नान्य इत्याशङ्क्य, 'वायुर्बहिरिन्द्रियप्रत्यक्षः, प्रमेयत्वात्' इत्यत्रोद्भूतरूपवत्त्वादेरनुपाधित्वं ब्रुवता वक्तव्यम्—किं दूषकताबीजाभावात् ? किं वा लक्ष्यतावच्छेदकेन संगृहीतत्वाभावात् ? नाद्यः, शुद्धसाध्यव्यभिचारोन्नायकत्वस्य दूषकताबीजस्य सत्त्वात् । तथाहि—प्रमेयत्वं बहिरिन्द्रियप्रत्यक्षत्वव्यभिचारि द्रव्ये उद्भूतरूपवत्त्वव्यभिचारित्वात् द्रव्यत्ववत् । यत्त्वविशेषितेन यद्व्यभिचारित्वेन लिङ्गेन हेतोरित्यादि ; तदसत् । लाघवात् यद्व्यभिचारित्वेन लिङ्गेन साध्यव्यभिचारित्वं, न त्वविशेषितेन तद्व्यभिचारित्वेन लिङ्गेन, गौरवात् । अत एव न द्वितीयः, उक्तरीत्या लक्ष्यतावच्छेदकेन तस्य संग्रहादिति । ततश्च गङ्गेशेनोक्तं लक्षणमव्याप्तिकवलितमित्येतत्सर्वं मनसि निधाय, स्वाभिमतोपाधिलक्षणस्य संग्राह्यमाह—यद्व्यावृत्त्येति । [1]यद्धर्मव्यावृत्त्येत्यर्थः । 'धूमवानयं वह्निमत्त्वात्' इत्यादावार्द्रेन्धनवत्त्वाद्युपाधावुदाहरति—यथेति । उक्तप्रकारं साधनावच्छिन्नसाध्यव्यापकोपाधौ दर्शयति—एवमिति ।

'ध्वंसो न विनाशी भावान्यत्वात्' इति सत्प्रतिपक्षोन्नयनम् । तच्च न संभवति । प्रागभावे त्वदुक्तहेतोः सत्त्वेन साध्याभावाद्व्यभिचार इति शङ्कते—नन्विति । ननु भावत्वव्यतिरेकेण जन्यत्वानित्यत्वसंबन्धव्यतिरेकः साध्य इति नोक्तदोष इति शङ्कते—अथेति । पूर्ववाद्युत्तरयति—तदेति । अनित्यत्वव्यतिरेकस्यैव प्रकृतोपयोगित्वेन साध्यसाधनसंबन्धव्यावृत्तेः प्रकृतानुपयुक्तत्वादर्थान्तरतेति भावः । सिद्धान्ती परिहरति—मैवमिति । विशिष्टव्यभिचारस्य विशेष्यव्यभिचारसंपादकत्वेन पर्यवसन्न-

1 यद्धर्मव्यावृत्त्येति । यद्धर्माभावेनेत्यर्थः ।

मैवम् । कृतके प्रध्वंसे भावत्वस्याव्याप्त्या कृतकत्वनित्यत्वसंबन्धो व्यावर्तमानो नानित्यत्वव्यावृत्तिमन्तरेण पर्यवस्यतीति नार्थान्तरम्, प्रतीतेरपर्यवसानात् । न हि पक्षधर्मताबललभ्यार्थेऽर्थान्तरत्वं युज्यते, अतिप्रसङ्गात् । भवतु वार्थान्तरत्वम्; तथापि हेत्वाभास एव, अर्थान्तरत्वस्य पुरुषदोषत्वात् । अत्र चाभासान्तरस्याभावादुपाधिरेव दोषो वक्तव्यः । स च निरूप्यमाणो भावत्वमेव ।

न च जलेऽपि पृथिवीत्वव्यावृत्त्या प्रमेयत्वव्यावृत्तिरेवमस्त्विति । यद्यपि रसवत्त्वप्रमेयत्वसंबन्धस्य पृथिवीत्वं जलातिरिक्ते व्यापकं गृहीतम्, तथापि केवलान्वयित्वग्राहकप्रमाणेन बाधितत्वान्न प्रमेयत्वनिवृत्तिर्जले सिध्यति । एवमेवंविधविषये साध्यं यत्र प्रमाणपरिच्छिन्नं भवति, तत्रोपाधिर्नास्ति । अन्यत्र तु भवत्येव । एवं पक्षधर्मावच्छिन्नसाध्यव्याप-

त्वान्नार्थान्तरत्वमिति भावः । शेषमतिरोहितार्थम् । एतेन साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वं संग्राहकत्वेन स्वीकृतं भवति ।

ननु 'जलं प्रमेयं रसवत्त्वात्' इत्यत्र पृथिवीत्वस्योपाधित्वप्रसङ्गः, तत्राप्युक्तलक्षणसत्त्वादित्यत आह—**न चेति । तथापीति ।** पक्षातिरिक्तस्थले साध्यव्यापकत्वस्य विद्यमानत्वेऽपीत्यर्थः । प्रमेयत्वनिवृत्तिर्जले न सिध्यतीति योजना । तत्र हेतुमाह—**केवलान्वयित्वेति ।** तर्हि तद्वदत्राप्युपाधेर्दोषत्वं न स्यादित्यत आह—**एवमेवंविधेति । अन्यत्रेति ।** केवलान्वयिव्यतिरिक्तस्थले इत्यर्थः । साध्यस्य प्रमाणान्तरसिद्धत्वाभावादिति भावः । पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वमिति लक्षणेऽपि न कोऽपि दोष इत्याह—**एवमिति ।** न च—प्रसिद्धोपाधावार्द्रेन्धनादावव्याप्तिः, साधनव्यापकीभूतसाध्यप्रसिद्ध्यवच्छेदकधर्मस्य तत्राभावात् । यत्किंचिद्धर्मस्यावच्छेदकत्वे 'पर्वतो वह्निमान् धूमवत्त्वात्' इत्यत्र व्यञ्जनवत्त्वस्याप्युपाधित्वप्रसङ्गादिति वाच्यम् । न ह्युपाधिमात्रस्यैतल्लक्षणं, येन प्रसिद्धोपाधावव्याप्तिः स्यात् । किंतु तद्विशेषस्यैव तल्लक्षणमुक्तमिति । न च 'शब्दोऽभिधेयः, प्रमेयत्वात्' इत्यत्राश्रावणत्वस्योपाधित्वप्रसङ्ग इति वाच्यम् । शब्दे अश्रावणत्वव्यावृत्त्या अभिधेयत्वव्यावृत्तिर्न सिध्यति, केवलान्वयित्वसाधकप्रमाणेन बाधितत्वादिति दत्तोत्तरत्वादिति भावः । अत

कादावपि बोद्धव्यम् । अत एव साध्याव्यापकोऽप्युपाधिः साधनावच्छिन्नादौ साधनव्यापकोऽपि । यत्र पक्षावृत्तिर्हेतुः—यथा 'करका पृथिवी, कठिनसंयोगवत्त्वात्' इत्यत्रानुष्णाशीतस्पर्शवत्त्वमुपाधिः । न च स्वरूपासिद्धत्वादत्र हेतोर्दुष्टत्वादनुपाधित्वमिति वाच्यम्, सर्वत्र दूषणान्तराकीर्णत्वादुपाधेः ।

ननु बाधोन्नीतेतरपक्षेतरत्वस्य कथमनुपाधित्वम् ? स्वव्याघातकत्वादित्युक्तमेव । अपिच पर्वतेतरत्वस्य यथा वह्निमत्त्वव्यापकत्वं भवताभिधीयते, तथा निर्वह्नित्वव्यापकत्वमपि वक्तुं शक्यते । विरुद्धोभयव्यापकनिवृत्त्या साध्यसाध्याभावाभ्यामपि पक्षे निवर्तितव्यमिति महति संकटेपतनम् । एवं पर्वतावयववृत्त्यन्यत्वादेरपि स्वव्याघातसत्त्वादनुपाधित्वमूह्यम् ।

किंच पक्षेतरः पक्षमात्रव्यावृत्तिफलको वा ? पक्षव्यावृत्तिफलको वा ? आद्ये यत्किंचिद्वृक्षादिमत्पर्वते पर्वतेतरत्वस्याप्युपाधित्वप्रसङ्गः । पक्षव्यावृत्तेस्तत्रापि सत्त्वात् ।

एवेति । साध्यस्य क्वचित्प्रमाणान्तरासिद्धत्वादेवेत्यर्थः । साध्याव्यापकोऽपीति । क्वचिच्छुद्धसाध्याव्यापकोऽपीत्यर्थः । अत एवाह—साधनेति । यद्वा 'तेजो रूपवत्, गुरुत्वाश्रयत्वात् पृथिवीवत्' इत्यत्र गन्धवत्त्वोपाधावित्यर्थः । केषांचिन्मतं दर्शयति—यत्रेति । ननु स्वरूपासिद्धत्वादेव हेतोर्दुष्टत्वं, न सोपाधिकत्वादित्यत आह—न चेति । सर्वत्रेति । हेत्वाभासादिवदिति भावः ।

पूर्ववादिनोक्तं दूषणमुद्धर्तुं शङ्कापूर्वकमनुवदति—नन्विति । परिहरति—स्वेति । बाधानुन्नीतपक्षेतरत्वस्योपाधित्वे दोषान्तरमाह—अपिचेति । इष्टापत्तिरित्याशङ्क्याह—विरुद्धोभयेति । संकटे पतनमिति । व्यापकनिवृत्त्या व्याप्यनिवृत्तेरावश्यकत्वादिति भावः । बाधानुन्नीतपक्षेतरत्वे उक्तदूषणं पर्वतावयववृत्त्यन्यत्वादावपि दर्शयति—एवमिति ।

सिंहावलोकनन्यायेन पक्षेतरत्वस्योपाधित्वे दोषान्तरमाह—किंचेति । पक्षव्यावृत्तेरिति । पक्षमात्रव्यावृत्तेरित्यर्थः । तत्रापीति । वृक्षादिमत्पर्वतेतरत्वेऽपीत्यर्थः ।

ननु साधनाव्यापकत्वं साधनत्वाभिमताव्यापकत्वम् । साधनत्वं च व्याप्तिपक्षधर्मतावैशिष्ट्यम् । एवं साध्यत्वाभिमतव्यापकत्वं साध्यव्यापकत्वं वाच्यम् । साध्यत्वं

साध्यत्वं च सिषाधयिषाविषयत्वम् । साधनत्वं व्याप्तिपक्षधर्मतावैशिष्ट्येनाभिमतत्वम् । न चान्योन्याश्रयः । न ह्युपाध्यभावज्ञानं व्याप्तिज्ञानस्य कारणम्; येनोपाधिज्ञानाधीनं व्याप्तिज्ञानं स्यात् । किंतूपाधिज्ञानाभावः । अतो नान्योन्याश्रयः ।

च व्याप्तिप्रतियोगित्वम् । व्याप्तिश्चानौपाधिकत्वज्ञानाधीनज्ञाना । एवंच ज्ञानेऽन्योन्याश्रय इति पूर्ववादिनोक्तं दूषणं कथं परिहृतमित्यत आह—[1]साध्यत्वं चेति । मूलोक्तलक्षणानि सर्वाणि निर्दुष्टानि वेदितव्यानीति भावः ।

अन्येतु—पर्यवसितसाध्यव्यापकत्वे सति साध्यसमानाधिकरणत्वे सति वा साध्यव्यभिचारिसाधनाव्यापकत्वमुपाधिलक्षणम् । गगनादावतिव्याप्तिवारणाय सत्यन्तम् । 'पर्वतो वह्निमान् धूमवत्त्वात्' इति हेतौ व्यजनवत्त्वादेरुपाधित्वपरिहाराय साध्यव्यभिचारीति । न चोपाधिज्ञानकाले साधने साध्यव्यभिचारित्वावगमाद्व्यभिचारोन्नयनद्वारा उपाधेर्दूषकत्वं न स्यादिति वाच्यम् । एतल्लक्षणानुरोधेनैवोपाधेर्व्यभिचारोन्नायकत्वं न ब्रूमः । अपितु शुद्धसाध्यव्यापकत्वादिना । इदं तु सकलसंग्राहकमात्रम् । यथा साधारणादीनां विपक्षवृत्तित्वादिनैव दूषकत्वम् । संग्राहकमात्रमुभयकोट्युपस्थापकत्वादि । इदं तु सर्वैरेवावगन्तव्यम् । अन्यथा पर्यवसितत्वाद्यस्फुरणे शुद्धसाध्यव्यापकत्वज्ञानेऽपि व्यभिचारोन्नायकत्वं न स्यात् । न चानुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वं निरूप्यमिति **चिन्तामणि**ग्रन्थविरोध इति वाच्यम्, तस्य यथाश्रुताभिप्रायेण वा, साध्यव्यापकत्वसाधनाव्यापकत्वाभिप्रायेण वा सर्वसमाधेयत्वात् । अथैवमपि प्रसिद्धानुमाने धूमवत्त्वहेतौ पाषाणवत्त्वादेः [2]उक्तलक्षणलक्षितस्य शुद्धसाध्यव्यभिचारानुमापकत्वं

1 साध्यत्वं चेति । साध्यपदं प्रकृतानुमितिविधेयतावच्छेदकत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तम् । साधनपदं च प्रकृतपरामर्शीयमुख्यविशेष्यतानिरूपितप्रकारतावच्छेदकत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तमित्यप्यन्योन्याश्रयपरिहारः संभवतीति बोध्यम् । रुचिदत्तोपाध्यायपरिष्कृतं मण्युक्तलक्षणमुपन्यस्यति-अन्ये त्वित्यादिना । उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं सव्यभिचारित्वमुक्तम् । तद्रूपज्ञानस्यानुमितिप्रतिबन्धकता नास्ति । विपक्षवृत्तित्वादिना ज्ञानस्यैव प्रतिबन्धकतेति बोध्यम् ।

2 उक्तलक्षणलक्षितस्येति । यद्यपि पाषाणशून्यप्रदेशेऽपि वह्नेः सत्त्वात् वह्निव्यापकत्वं पाषाणवत्त्वे न संभवति; तथापि पर्वतत्वादिरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वं संभवतीत्यभिप्रायेणोक्तलक्षणलक्षितस्येत्युक्तम् । पर्यवसितसाध्यव्यापकत्वघटितलक्षणाक्रान्तस्येत्यर्थः ।

तदयमिह संक्षेपः—अनैकान्तिके साध्यश्चान्यश्च, विरुद्धे साध्यश्च हेत्वभावश्च, बाधे साध्यश्च पक्षेतरश्चान्यश्च धर्म उपाधिः। अभेदेऽपि व्याप्यव्यापकभावोऽङ्गीकर्तव्यः। अन्यथा समव्याप्ते सर्वत्र हेतुरेवोपाधिः स्यात्, साध्यव्यापकत्वे सति साधनाव्यापकत्वात्।

द्विविधश्चायम्—निश्चितः, संदिग्धश्चेति। तत्राद्यः प्रसिद्ध एव। संदिग्धस्तु निरूप्यते। स तावन्नैवमाकारो यदुपाधिः कोऽप्यत्रास्ति, न वेति; तस्य शङ्कापिशाचत्वेनोपपत्तिसमप्रपञ्चत्वात्। अतः साध्यव्यापकतासंदेहाद्वा,

स्यात्। यदि तस्य शुद्धसाध्यव्यभिचारोन्नायकत्वाभावः शुद्धसाध्यव्यापकत्वाभावो वोच्यते, तर्हि 'वायुः प्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वात्' इति हेतावप्युद्भूतरूपवत्त्वादेः शुद्धसाध्यव्यभिचारानुमापकत्वं न स्यादित्यत्रापि शुद्धसाध्यव्यापकत्वाभावादिति चेत्; न, पाषाणवत्त्वादेरुपाधित्वं ब्रुवता वक्तव्यम्—किं सत्प्रतिपक्षोत्थापकत्वेन दूषकत्वमेतस्य? किं वा व्यभिचारोन्नायकत्वेन? नाद्यः, पाषाणवत्त्वव्यावृत्तेः पर्वतेऽभावादेव साध्यव्यतिरेकासंभवात्। न द्वितीयः, धूमे वह्निव्यभिचारस्य बाधितत्वेन बाधादेव वह्निव्यभिचारानुमित्यसंभवात्। तदनवतारदशायां लिङ्गादिप्रतिसंधानकाले वह्निव्यभिचारानुमितिरिष्टैवेत्यप्याहुः; वस्तुतस्तु साधनाव्यापकत्वे सति साध्यसमव्यापकत्वं वा, साध्यव्यापकत्वं वा, यत्किंचिदवच्छिन्नसाध्यव्यापकत्वं वोपाधित्वमिति दिक्।

उपाधिलक्षणेषु निर्दिष्टेषु सत्सु प्रसङ्गात्सिद्धान्तरहस्यमाह—**तदयमिति**। अतिरोहितार्थमिदम्। अभेदे व्याप्यव्यापकभावानङ्गीकारे बाधकमाह—**अन्यथेति**। **सर्वत्रेति**। 'अनित्यः शब्दः कृतकत्वात्' इत्यादावित्यर्थः। कृतकत्वादिहेतावुपाधिलक्षणसद्भावं दर्शयति—**साध्येति**।

प्रसङ्गादुपाधिभेदमाह—**द्विविधश्चेति**। **अयमिति**। उपाधिसामान्यलक्षणेन लक्षितोपाधिरित्यर्थः। द्वे विधे दर्शयति—**निश्चित इति**। **तत्रेति**। द्वयोर्मध्य इत्यर्थः। साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्चयाधायकत्वेनोपाधिर्निश्चितः। यथा—वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वमित्यभिप्रायेण प्रसिद्ध इत्युक्तम्। [1]**समप्रपञ्चत्वादिति**। निश्चितोपाधिना तुल्यविस्तरत्वादित्यर्थः।

1 एवं टीकाकृतः प्रतीकग्रहणे टीकाकरणे च किं निमित्तमिति न ज्ञायते। वस्तुतस्तु

साधनाव्यापकतासंदेहाद्वेति परिशिष्यते । तत्राद्य उपाधिसाध्ययोः संदेहे वा स्यात् । यथा — दूरात् तेजःपृथिव्यादिरूपत्वेनानिश्चिते धर्मिणि 'अयमनुष्णः, कृतकत्वात्' इत्यत्रातेजस्त्वम् । साध्यनिश्चयोपाधिसंदेहयोर्वा । यथा —'मनस्त्वं भूतेतरवृत्ति, मनोवृत्तित्वात्' इत्यत्र मूर्तेतरवृत्तित्वम् ।

संदिग्धोपाधिर्द्विविध इत्याह—अत इति । इदं त्वेकदेशिमतम् । तदुक्तं चिन्तामणौ गङ्गेशेन—"यत्र साधनाव्यापकत्वसंदेहो वा, साध्यव्यापकत्वसंदेहो वा, उभयसंदेहो वा' इति । तत्रेति । द्वयोर्मध्य इत्यर्थः । साध्यव्यापकतासंदेहश्चतुर्विध इत्याह—उपाधीत्यादिना । तत्र प्रथममुदाहरति—यथेति ।

द्वितीयमुदाहरति—यथा मनस्त्वमिति । साध्यनिश्चयं प्रतिपाद्योपाधिसंदेहं दर्शयति—उपाधाविति ।[1] 'सुखादिकं मूर्तसंयोगासमवायिकारणकगुणवृत्तिगुणत्वावान्तरजातियोगि, नित्यवृत्त्यनित्यविशेषगुणत्वात्, शब्दवत्, पाकजरूपवच्च' इति । मूर्तसंयोगोऽसमवायिकारणं यस्येति बहुव्रीहौ कप्रत्ययः । स चासौ गुणश्च । तद्वृत्तिर्या गुणत्वावान्तरजातिः सुखत्वं पक्षे, दृष्टान्ते शब्दत्वादिः । तद्योगीति साध्यार्थः । आत्मविभुमनःसंयोगेन सिद्धसाधनवारणाय - मूर्तेति । चन्दनसंयोगेन सिद्धसाधनवारणाय—असमवायीति । अत एव शरीरप्राणसंयोगेन नार्थान्तरम् । तदन्यत्वमपि न मूर्तविशेषणम् । मूर्तसंयोगासमवायिकारणमिति कृते [2]शब्दजशब्दे व्यभिचारः । तस्य वारणाय जातिगर्भम् । [3]गुणपदं स्पष्टार्थम् । गुणत्वावान्तरपदं तादृशशब्दवृत्तिसत्ताजातियोगेनार्थोपपत्तिसमाख्यो जातिभेदोऽत्रविवक्षितः ।

1 मनसो मूर्तत्वे नैयायिकसंमतमनुमानं प्रमाणं सपरिकरं निरूपयति—सुखादिकमित्यादिना ।

2 शब्दजशब्दे व्यभिचार इति । प्रथमशब्द एव मूर्तसंयोगोऽसमवायिकारणम् । द्वितीयादिशब्दे तु पूर्वशब्दोऽसमवायिकारणम् । मूर्तसंयोगासमवायिकारणकत्वाभाववति द्वितीयादिशब्दे नित्यवृत्त्यनित्यविशेषगुणत्वस्य सत्त्वाद्व्यभिचारः । अतो मूर्तसंयोगासमवायिकारणकगुणवृत्तिगुणत्वावान्तरजातियोगित्वं साध्यमुक्तम् । तादृशप्रथमशब्दरूपगुणवृत्तिगुणत्वावान्तरशब्दत्वजातिमत्त्वात् शब्दजशब्दस्य न साध्याभाववत्त्वमिति न व्यभिचार इति भावः ।

3 गुणपदं स्पष्टार्थमिति । गुणत्वावान्तरजातेर्गुणभिन्नावृत्तित्वेन मूर्तसंयोगासमवायिकारणकवृत्तिगुणत्वावान्तरजातियोगीत्युक्तौ गुणभिन्नमादाय दोषाप्रसक्तेरिति भावः । गुणत्वावान्तरपदेन गुणत्वन्यूनवृत्तित्वं विवक्षितम् । तच्च गुणत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति गुणत्वसामानाधिकरण्यम् । तच्च न गुणत्व इति न गुणत्वजातिमादायार्थान्तरमिति बोध्यम् ।

मनस्त्वस्य भूतेतरवृत्तित्वं नैयायिकमीमांसकयोर्द्वयोरपि सिद्धम् । उपाधौ संदेहाद्वा । यथा मनो मूर्तमित्येकस्य मतम् । इतरस्य विभ्विति । साध्य-

न्तरवारणाय । शब्दसुखान्यतरत्वमादायार्थान्तरनिवृत्तये जातिपदमिति साध्यगतविशेषणानि सार्थकानि । जलावयविस्नेहे व्यभिचारवारणाय - नित्यवृत्तीति । परमाणुस्नेहे व्यभिचारवारणायानित्येति । आत्मवृत्तिद्वित्वे व्यभिचारवारणाय - विशेषेति । भाट्टमते [1]शब्दस्य द्रव्यत्वादुभयसिद्धं निदर्शनान्तरमुक्तम्—पाकजरूपवच्चेति । एतादृशानुमानात् सुखादेर्मूर्तसंयोगासमवायिकारणत्वं सिध्यत् मनसो मूर्तत्वमादाय पर्यवस्यतीत्याह—**मनो मूर्तमिति । एकस्येति** । नैयायिकस्येत्यर्थः । [2]अयमाशयः—सुखादिप्रादेशिकासमवायिकारणमङ्गीकर्तव्यं सुखादिप्रादेशिकत्वनियमार्थम्, विभुकार्ये तथैवावधारणात् । न च शरीरसंयोगस्य तथात्वम्, सकलशरीरावच्छेदेन सुखोत्पत्तिप्रसङ्गात् । ननु तदवयवानामवच्छेदकत्वमस्त्विति चेत्; न, अवयवाव्यापिसुखदर्शनात् । न च तत्रान्यस्यावच्छेदकत्वमिति वाच्यम्, अननुगमात् । न च वाच्यं विभुमनःसंयोग एवासवायिकारणमिति, प्रादेशिकत्वानुपपत्तिप्रसङ्गादिति दिक् ।

[3]'मनो विभु, ज्ञानासमवायिकारणसंयोगाधारत्वात्, नित्येन्द्रियत्वात्, नियत्वे सति द्रव्यानारम्भकद्रव्यत्वात्, आत्मवत्, श्रोत्रवत्, कालादिवदित्यनुमानान्मनसो विभुत्वं सिद्धमित्याह—**इतरस्येति** । भाट्टवादिन इत्यर्थः । अयमाशयः—विभुत्वपक्षे व्यासङ्गानुपपत्तिरिति न वाच्यम्, व्यासङ्गस्य ज्ञानान्तरोत्पत्तौ प्रतिबन्धकत्वात् । न च

1 शब्दस्य द्रव्यत्वादिति । एवंच गुणत्वावान्तरजातियोगित्वरूपसाध्यविकलः शब्ददृष्टान्त इति भावः ।

2 निरुक्तानुमानप्रमाणानुग्राहकं तर्कमाह—अयमाशय इत्यादिना । सुखादिप्रादेशिकेति । सुखादेः प्रादेशिकमसमवायिकारणमित्यर्थः, विभुकार्ये तथैवावधारणात् । प्रादेशिकत्वम् अव्याप्यवृत्तित्वम् ।

3 मनसो विभुत्वे प्रमाणमनुमानत्रयमाह—मनो विभु इत्यादिना । आत्मा, श्रोत्रं, कालादिकं च हेतुत्रये क्रमेण दृष्टान्तः । द्रव्यानारम्भकत्वं द्रव्यसमवायिकारणत्वाभावः । कर्णशष्कुल्यवच्छिन्नाकाशस्य श्रोत्रत्वस्वरूपतो विभुत्वं बोध्यम् । भाट्टवादिनः भट्टमतवादिनः । अथवा भट्टानुयायिवादिन इत्यर्थः ।

संदेहोपाधिनिश्चययोर्वा । यथा—'अङ्कुरः सकर्तृकः कार्यत्वात्' इत्यत्रा-नणुत्वम् । साध्यसंदेहोपाध्यभावनिश्चययोर्वा । यथा—'शब्दः प्रध्वंसप्रति-योगी, [1]अस्मदादिबाह्येन्द्रियग्राह्यगुणत्वात्' इत्यत्राश्रावणत्वम् । एते चत्वा-रोऽपि पक्षातिरिक्ते निश्चितसाध्यतया साध्यव्यापकत्वान्निश्चितोपाधय एव । पक्षे साध्याव्यापकत्वसंदेहादनिश्चितोपाधित्वे आर्द्रेन्धनवत्त्वादीना-मप्यनिश्चितोपाधित्वप्रसङ्गः । पक्षातिरिक्ते यत्र साध्याव्यापकतासंदेहो यथा तृतीयप्रकारोपाधौ, तत्र संदिग्धोपाधिर्भविष्यतीति चेत्; न, पक्षातिरि-क्तपदेन साध्यव्याप्तिप्रदर्शनस्थलस्य विवक्षितत्वात् । नापि साध्यव्यापकत्वे निश्चिते संदिग्धसाधनाव्यापकत्वं संदिग्धोपाधिः । स ह्युपाधिसाधनयोः संदेहे वा ; यथा—दूरात् पदार्थे दृष्टे 'इयं पृथिवी, गन्धवत्त्वात्' इत्यत्र पाकजरूपवत्त्वम् । साधननिश्चयोपाधिसंदेहयोर्वा ; यथा—मैत्रीपुत्रत्वात् श्यामत्वे साध्ये शाकपाकजत्वम् । साधनसंदेहोपाधिनिश्चययोर्वा ; यथा—

युगपदेव सर्वज्ञानोत्पत्तिप्रसङ्गः सुरूपादिमतीं शष्कुलीं भक्षयत इति वाच्यम्, [2] एक-दानेकक्रियाजनकत्वानुपपत्तेः । न च सुखादिप्रादेशिकत्वानुपपत्तिः, विषयसंबन्धप्रादे-शिकत्वेनैवोपपत्तेः ; मनोऽणुत्वपक्षेऽपि तस्यैवोपजीव्यत्वात् । सर्वाङ्गीणे तु विषयसंबन्धे सर्वाङ्गीणमेव सुखमुत्पद्यते, बुभुत्साया एव व्यासङ्गनियामकत्वादिति दिक् ।

तृतीयमुदाहरति—**यथाङ्कुर इति** । चतुर्थमुदाहरति—**यथा शब्द इति** । ननु चतुर्णां किं पक्षे संदिग्धोपाधित्वम्? किं वा पक्षातिरिक्तस्थले? इति संदेहे निर्णय-माह—**एते चत्वारोऽपीति** ।

ननु पक्षे साध्यव्यापकतासंदेहात् चतुर्णां कथं पक्षातिरिक्तस्थले निश्चितोपाधित्व-मित्याशङ्क्य बाधकमाह—**पक्षे साध्येति** । अपसिद्धान्तादनुभवविरोधाच्चेति भावः । साध्यव्यापकत्वसंदेहवत्साधनाव्यापकत्वसंदेहोऽपि चतुर्विध इति तत्र प्रथममुदाहरति—**यथा दूरादिति** । द्वितीयमुदाहरति—**यथा मैत्रीति** । तृतीयमुदाहरति—**यथा**

1 अस्मदादिबाह्यप्रत्यक्षत्वात् M

2 एकदानेकक्रियाजनकत्वानुपपत्तेः । एकं करणम् एकदा दात्रादिकमेकामेव छेदनादि-क्रियां जनयत् दृष्टम् । तथा मनः करणमेकदा एकामेव ज्ञानक्रियां जनयेदिति भावः । धात्वर्थः क्रिया । ज्ञानमपि क्रिया । तत्र मनः करणमेकदा करणं बोध्यम् ।

दूरात् 'अयं गुरुत्ववान्, रसवत्त्वात्' इत्यत्र द्रव्यत्वम् । साधनसंदेहो-पाध्यभावनिश्चययोर्वा ; यथा—कृतकत्वात् शब्दानित्यत्वे साध्ये अश्रावणत्वम् । एते च सर्वे निश्चितसाधनव्यापकत्वेऽनुपाधय एव । तस्मात् बाधोन्नेय एवोपाधिर्निश्चितः । तदितरस्तु शङ्कितोपाधिरिति केचित् ।

वस्तुतस्तु पक्षातिरिक्ते साध्यव्यापकतासंदेहेन तद्व्यापकव्याप्यत्वसंदेहाद्व्यभिचारसंदेहो व्याप्यत्वसंदेहो वेति शङ्कितोपाधित्वम् । न तु पक्षे साध्यव्यापकत्वसंदेहात् । तदा हि साध्यव्यापकतासंदेहः पक्षे साध्यसंदेहः स्यात् । स चादोष एव । एवं पक्षे साधनव्यापकत्वनिश्चयोऽपि तावन्नानुमानदोषः । किंतु साधनव्यापकतासंदेहः । न हि शाकपाकजत्वं मैत्रीतनये निश्चितमित्येतावता श्यामिकाविशेषस्य साध्यस्य कापि क्षतिः । प्रत्युत गुण एव । अतस्तत्संदेहोऽपि पक्षे न दोषाय ; किंतु तदतिरिक्ते ।

दूरादयमिति । चतुर्थमुदाहरति—यथा कृतकत्वादिति । एतेषां साधनाव्यापकत्वाभावनिश्चयेऽनुपाधित्वमाह—एते चेति । [1]तृतीयः साध्यव्यापकत्वसाधनाव्यापकत्वसंदेहो यथा । शाकपाकजत्वस्य साध्यव्यापकतासंदेहे मैत्रीतनयत्वे ।

ननूपाधिसंदेहो नोपाधिः, न वा हेत्वाभासान्तरमिति तदुद्भावने निरनुयोज्यानुयोग इति चेत्, न, संदिग्धानैकान्तिकत्ववद्व्यभिचारसंशयाधायकत्वेन दूषणत्वादुपाधेरिव व्यभिचारनिश्चयाधायकतयेति दिक् । संदिग्धोपाध्युपसंहारव्याजेन मतान्तरमुपसंहरति-—तस्मादिति ।

ननु पक्षातिरिक्ते साध्यव्यापकतानिश्चयान्निश्चितोपाधित्वमेतेषां यदि, तर्हि तेषां पक्षातिरिक्ते साध्यव्यापकतासंदेहात्संदिग्धोपाधित्वम् ; न तु पक्षे साध्यव्यापकत्वसंदेहात् साध्यसंदेहो वाच्यः, तस्यानुमानादोषत्वात् । एवं पक्षे साधनव्यापकत्वनिश्चयोऽपि नानुमानदोषः । किंतु लाघवात्साधनाव्यापकत्वसंदेह एवानुमानदूषणमित्यरुचेराह—वस्तुतस्त्विति । निगदव्याख्यातमन्यत् ।

1 शङ्कितोपाधिः द्विविध इति मूलमेकदेशिमताभिप्रायेणेत्युक्त्वा मणिकारोक्तत्रैविध्यस्य स्वयमादृतत्वात्, साध्यव्यापकत्वसाधनाव्यापकत्वसंशयाहितसंदिग्धोपाधिं स्वयं दर्शयति—तृतीय इति ।

इदानीं दूषकताबीजं चिन्त्यते—किमुपाधिरतिरिक्त एव हेत्वाभासः ? स्वव्यतिरेकद्वारा प्रतिपक्षो वा ? व्यापकानुपलब्धिबाधो वा ? व्यभिचारोन्नायको वा ? व्याप्तिज्ञानप्रतिबन्धकतया व्याप्यत्वासिद्धो वा ? नाद्यः, व्याप्यत्वासिद्धेऽन्तर्भावात् । स चाग्रे दर्शयिष्यते । न द्वितीयः । तदा प्रतिपक्षे प्रतिपक्षान्तरवदुपाधिरपि न स्यात् । 'शतमप्यन्धानां न पश्यति' इति न्यायात्; एकेनैव सर्वस्य प्रतिबन्धात् । अपिच 'अन्धकारो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वात्' इत्यत्राश्रावणत्वमुपाधिर्न स्यात्, तद्व्यतिरेकस्य पक्षेऽसिद्धत्वात् । अस्माकं तु श्रावणत्वव्यतिरेकस्य साध्यसाधनसंबन्धविरोधित्वेन व्याप्यत्वासिद्धिसंभवादुपाधित्वम् । न हि श्रावणत्वं द्रव्यत्वस्वातन्त्र्येण गृह्यमाणत्वसंबन्धसहचरितं दृष्टम् । अत एवान्धकारे यदि श्रावणत्वं वर्तेत, साधये-

व्याप्यत्वासिद्धतयोपाधिदूषकत्वं विचारयिष्यन् प्रथमं तदङ्गतया पूर्वपक्षयति—**किमुपाधिरिति । अतिरिक्त एवेति ।** सव्यभिचारादिभ्यो भिन्न इत्यर्थः । अत्र सर्वेषां पक्षाणामनुपपन्नत्वात् चरमपक्ष एव न्याय्य इति ध्येयम् । **नाद्य इति ।** अतिरिक्त एव हेत्वाभास इति पक्ष इत्यर्थः । **स चेति ।** अन्तर्भाव इत्यर्थः । **अग्र इति ।** चरमश्चिन्त्यत इत्यादावित्यर्थः । **न द्वितीय इति ।** स्वव्यतिरेकद्वारा प्रतिपक्ष इति पक्ष इत्यर्थः । दोषमाह—**तदेति ।** ननु प्रतिपक्षबाहुल्येनाधिकबलार्थमुपाध्युद्भावनं सत्प्रतिपक्षेऽपि भवत्वित्याशङ्क्य न्यायविरोधान्नैवमित्याह—**शतमिति ।** एकस्य बहुभिर्विवादोऽनुचित इत्यत आह—**एकेनेति ।** 'एकेन दण्डेन शतं काकाः पलाय्यन्ते' इतिवदेकेनापि बहूनां प्रतिबन्धो युज्यत इति भावः । सत्प्रतिपक्षो नोपाधेर्दूषकताबीजम्, पक्षवृत्तिधर्मस्योपाधेः पक्षे व्यतिरेकासंभवादित्याह—**अपिचेति ।** ननु—प्रकृतानुमानेऽश्रावणत्वस्यैवोपाधित्वं त्यज्यताम्; न तु सत्प्रतिपक्षस्य दूषकताबीजत्वभङ्गः, प्रसिद्धसिद्धान्तविरोधादित्यत आह—**अस्माकं त्विति । उपाधित्वमिति ।** सत्प्रतिपक्षस्य दूषकताबीजत्वाभावेऽपि व्याप्यत्वासिद्धिसंपादकत्वेनोपाधेर्दूषकत्वे बाधकाभावात् । न च प्रसिद्धसिद्धान्तविरोधः, सत्प्रतिपक्षस्य दूषकताबीजत्वनिराकरणवादिनामस्माकं सिद्धान्तविरोधोपन्यासस्यानुचितत्वादिति भावः । नन्वश्रावणत्वव्यतिरेकस्य साध्यसाधनसंबन्धविरोधित्वमनुपपन्नमित्याशङ्क्याह—**न हीति । अत एवेति ।** अश्रावणत्वव्यतिरेकस्य श्रावणत्वस्य पक्षेऽसत्त्वादेवेत्यर्थः ।

त्तदा तस्मात् द्रव्यत्वम् । किंचान्वयव्यतिरेकिणि बाधोन्नीतपक्षेतरत्वस्योपाधित्वं न स्यात्, असाधारण्यात् । यथा 'स्पृश्यमानो वह्निरनुष्णः, एतद्देशवर्तिवस्तुत्वात्' इत्यत्र पक्षेतरः । न तृतीयः, 'अन्धकारो द्रव्यम्' इत्यत्र यत् दूषणमुक्तं तेनैव दुष्टत्वात् । अपिच उपजीव्यप्रमाणेन पक्षे साध्याभावग्रहात् बाधोऽभिधीयते । न च पक्षे साध्याभावग्रहे सर्वत्रोपाध्यभावग्राहकप्रमाणस्योपजीव्यता । प्रतिपक्षतः कथंचित्संभाव्यते । तत्र चोक्तमेव दूषणम् । न चतुर्थः । एवं हि तत्—'वह्निमत्त्वं धूमवत्त्वव्यभिचारि, धूमवत्त्वव्यापकार्द्रेन्धनवत्त्वव्यभिचारित्वात् प्रमेयत्वादिवत्' इति । अत्रार्द्रेन्धनवत्त्वस्य धूमवत्त्वव्यापकत्वासिद्धेरसिद्धो हेतुः । प्रत्युत 'आर्द्रेन्धनवत्त्वं धूमवत्त्वाव्यापकं, तद्व्याप्यवह्निमत्त्वाव्यापकत्वात्' इत्यनुमानस्य संभवः । न च वह्निमत्त्वाव्यापकत्वमार्द्रेन्धनवत्त्वस्यासिद्धमिति वाच्यम्, एतदीयपक्षावृत्तित्वस्योभयवादिसंप्रतिपन्नत्वात् । तथापि धूमवत्त्वव्याप्यत्वं वह्निमत्त्वस्य ममासिद्धमिति चेत्; न । असिद्धत्वं, किं व्यभिचार-

सत्प्रतिपक्षस्य दूषकताबीजत्वे दोषान्तरमाह—**किंचेति** । तदुदाहरति—**यथेति** । अस्पृश्यमाने वह्नावनुष्णत्वप्रत्यक्षज्ञानाभावादाह—**स्पृश्यमान इति** । **न तृतीय इति** । व्यापकानुपलब्धिबाध इत्यर्थः । शेषमतिरोहितार्थम् । **न चतुर्थ इति** । व्यभिचारोन्नायक इत्यर्थः । उपाधेर्व्यभिचारोन्नायकत्वं दूषयितुं दर्शयति—**एवं हीति** । आर्द्रेन्धनवत्त्वस्य धूमव्यापकत्वमसिद्धमित्यनुपपन्नम्, व्याप्तेः सत्त्वादित्यत आह—**प्रत्युतेति** । बाधितो हेतुरित्याशङ्क्याह—**न चेति** । 'आर्द्रेन्धनवत्त्वं धूमवत्त्वाव्यापकं, तद्व्याप्यवह्निमत्त्वाव्यापकत्वात्' इत्यत्र धूमव्याप्यत्वं वह्निमत्त्वस्य नास्ति, अयोगोलके वह्नेः सत्त्वेऽपि धूमस्यासत्त्वात् । ततश्चोक्तानुमानस्य बाधासिद्धी स्यातामित्याशङ्कते—**तथापीति** । धूमवत्त्वव्याप्यत्वं वह्निमत्त्वस्यासिद्धमित्यनुपपन्नम्, विकल्पासहत्वादिति परिहरति—**असिद्धत्वमिति** । **पक्षातिरिक्त इति** । पक्षतुल्य इत्यर्थः । दोषान्तरमाह—**व्यभिचार इति** । **न द्वितीय इति** । उपाधिदर्शनादसिद्धमिति पक्ष इत्यर्थः । किमार्द्रेन्धनवत्त्वं तत्रोपाधिः? किं वान्य इति विकल्प्याद्यं कल्पं निराकरोति—**आर्द्रेन्धनेति** । न द्वितीय इत्याह—**अन्यस्येति** । साध्यस्येत्यर्थः । स्वव्यापकत्वाभावादिति भावः । **न तृतीय इति** । व्याप्तिग्राहकप्रमाणाभावादसिद्धमिति

दर्शनात् ? उपाधिदर्शनाद्वा ? व्याप्तिग्राहकप्रमाणाभावाद्वा ? नाद्यः, पक्षातिरिक्ते व्यभिचारस्याभावात् । व्यभिचारे स्फुरत्युपाध्युपन्यासस्यानर्हत्वाच्च । न द्वितीयः, आर्द्रेन्धनवत्त्वस्य विवादविषयत्वात्; अन्यस्योपाधेरसिद्धेः । न तृतीयः । तर्हि प्रथममनुमान एवेदं वक्तुमुचितम्; व्यर्थ उपाध्युपन्यासः । चरमस्तु चिन्त्यते । धूमवत्त्वव्यापकाव्याप्यत्वज्ञाने विद्यमाने 'धूमवत्त्वव्याप्यं वह्निमत्त्वम्' इति ज्ञानं नोत्पद्यते[1] । न च आर्द्रेन्धनवत्त्वं धूमवत्त्वाव्यापकं, धूमवत्त्वव्याप्यवह्निमत्त्वाव्यापकत्वात्' इत्यनुमानं संभवति, तद्व्याप्यत्वस्यासिद्धेः । आर्द्रेन्धनस्य धूमं प्रति साध्यसाधनभावव्यवस्थितेर्विपक्षे बाधकतर्कसंभवात्, व्याप्तेर्गृह्यमाणत्वेन धूमवत्त्वाव्यापकत्वे साध्ये हेतोर्बाधितत्वाच्च । एवं यत्र यत्र विपक्षबाधकतर्कादिभिरुपाधिसाध्ययोर्व्याप्यव्यापकभावो निश्चीयते, तत्र निश्चितोपाधिर्भवतीति मन्तव्यम् ।

तृतीयपक्ष इत्यर्थः । **तर्हीति** । व्यर्थोऽयं बकबन्धनविधिप्रयास इति भावः । **चरमस्त्विति** । व्याप्तिज्ञानप्रतिबन्धकतया व्याप्यत्वासिद्ध इति पक्ष इत्यर्थः । 'वह्निर्धूमव्याप्यो न भवति, धूमव्यापकार्द्रेन्धनवत्त्वाव्याप्यत्वात्' इत्यनुमानस्य बाधं परिहरति—**धूमवत्त्वेति** । अयमुपाधिः साध्यव्यापको न भवति, साध्यव्याप्यहेत्वव्यापकत्वादित्यत आह—**न चेति** । धूमव्याप्यत्वं वह्नेरसिद्धमित्यसिद्धो हेतुरित्याह—**तद्व्याप्यत्वस्येति** । आर्द्रेन्धनवत्त्वादेस्तर्कादिना साध्यव्यापकत्वसाधनाव्यापकत्वयोर्निश्चितत्वेन धूमाव्यापकत्वानुमानं बाधितमित्याह—**आर्द्रेन्धनस्येति** । उक्तन्यायमन्यत्राप्यतिदिशति—**एवमिति** । **तत्रेति** । 'वायुः प्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यादावित्यर्थ इति दिक् ।

[2]वस्तुतस्तु—सत्प्रतिपक्षतया व्याप्यत्वासिद्धतया स्वातन्त्र्येण वा यदि दूषणं, तदा सर्वथा साध्यव्यापकतानिश्चयो वक्तव्यः, तेन विना तेषामभावात् । तस्मादुपाधेर्नि-

1 नोत्पत्तुमर्हति M

2 मणिकारसरण्योपाधेर्दूषकत्वं निरूपयति—वस्तुतस्त्विति । सत्प्रतिपक्षतया । स्वाभावलिङ्गकसाध्याभावानुमितिप्रयोजकतया । स्वम् उपाधिः । व्याप्यत्वासिद्धतया । हेतुविशेष्यकव्याप्त्य-

श्चयाद्व्यभिचारनिश्चयः, तत्संशयात्तत्संशय इति व्यभिचारज्ञानद्वारा साध्यव्यापक-व्याप्यत्वेन व्याप्तिविरहग्रहोन्नायकतया चोपाधेर्दूषकत्वम् ।

वस्तुतस्तु—साध्यव्यभिचारित्वमनुमेयं साध्यव्यापकः भाववद्वृत्तित्वेन । [1] न च साधनाभाववद्वृत्तित्वमुपाधिः, उपाधिमात्रोच्छेदापत्तिप्रसङ्गात्, सत्प्रतिपक्षे पूर्वसाधन-व्यतिरेकवत्, [2]अवृत्तिगगनादौ साध्याव्यापकत्वात् । ननु वृत्तिमत्त्वधर्मावच्छिन्न-साध्यव्यापकत्वान्नोक्तदोष इति चेत्, तर्हि संयोगविशेषादौ हेतौ साधनव्यापकत्वम् । तथाहि—'वायुः प्रत्यक्षः, संयोगविशेषात्' इत्यत्र 'संयोगविशेषः प्रत्यक्षत्वव्यभि-चारी, तद्व्यापकव्यभिचारित्वात्' इत्यनुमाने संयोगविशेषाभाववद्वृत्तित्वं तद्व्यापकव्यभि-चारित्वादिरूपसाधनाव्यभिचारित्वान्नोपाधिः । अत्र व्यभिचारादीनां नियमेन दूषक-ताबीजत्वाभावेऽप्यनियमेन प्रत्येकं दूषकताबीजत्वाभ्युपगमे बाधकाभाव इति संक्षेपः ।

भावप्रकारकज्ञाने प्रयोजकतया । स्वातन्त्र्येण । तदितररूपेण व्यभिचारज्ञानप्रयोजकत्वरूपेण । वक्तव्यः । अपेक्षणीयः । तेन विना तेषामभावादिति । व्यापकतया गृहीताभावादेव व्याप्यतया गृहीताभावः, व्यापकतया गृहीतं प्रति अव्याप्यत्वेनैव व्याप्यत्वेन गृहीताव्याप्यत्वं, व्यापकतया गृहीतस्य व्यभिचारित्वेनैव च व्याप्यतयावगतस्य व्यभिचारित्वं च सिध्यतीति भावः । व्यभि-चारज्ञानद्वारेति । मानसप्रत्यक्षात्मके व्यभिचारनिश्चये विशेषदर्शनविधया हेतुभूतस्योपाधिज्ञानस्य विषयतया मानसव्यभिचारप्रत्यक्षप्रयोजकतयेत्यर्थः । वस्तुतस्त्वित्यादिना व्यभिचारानुमिति-प्रयोजकत्वं वक्ष्यत इति विवेकः ।

1 न च साधनाभाववद्वृत्तित्वमुपाधिरिति । वह्निः धूमव्यभिचारी, धूमव्यापकाभाव-वद्वृत्तित्वात्, इत्यनुमाने पक्षीभूतवह्निरूपसाधनाभाववद्वृत्तित्वमुपाधिः । धूमव्यभिचारिणि जलादौ सर्वत्र वह्न्यभाववद्वृत्तित्वसत्त्वात्, धूमव्यापकाभाववद्वृत्तित्वाधिकरणे प्रकृतपक्षे वह्नौ वह्न्यभाववद्वृत्तित्वासत्त्वात् साध्यव्यापकत्वसाधनाव्यापकत्वयोरक्षतत्वादिति भावः । उपाधि-मात्रोच्छेदप्रसङ्गादिति । धूमव्यापकाभाववद्वृत्तित्वं धूमव्यभिचारित्वव्यभिचारि, धूमव्यभिचारि-त्वव्यापकवह्न्यभाववद्वृत्तित्वव्यभिचारीत्यनुमानेऽपि पक्षीभूतधूमव्यापकाभाववद्वृत्तित्वाभाववद्वृत्ति-त्वस्योपाधित्वसंभवादिति भावः । सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकवदिति । सत्प्रतिपक्षानुमाने प्रथ-मोक्तहेत्वभावस्योपाधित्वे सर्वत्र प्रतिपक्षानुमाने तादृशोपाधेः संभवेन निरुपाधिकप्रतिपक्षोच्छेदा-पत्त्या पूर्वसाधनव्यतिरेकस्यानुपाधित्वं यथा तथेत्यर्थः ।

2 अवृत्तिगगनादौ साध्याव्यापकत्वादिति । वह्निर्धूमव्यभिचारी इत्यनुमानोक्तस्य वह्न्यभाववद्वृत्तित्वस्य गगनान्तर्भावेण साध्याव्यापकत्वमित्यर्थो न घटते । अवृत्तिगगने धूमाभाववद्वृत्तित्वात्मकधूमव्यभिचारित्वरूप साध्यस्याभावात् । परंतु वह्निः धूमाव्याप्यः धूमव्यापकाव्याप्यत्वादित्यनुमाने वह्न्यभाववद्वृत्तित्वस्योपाधित्वं न सिध्यति, धूमाव्याप्यत्वाधिकरणे गगने अवृत्तौ वह्न्यभाववद्वृत्तित्वरूपोपाध्यभावेन साध्याव्यापकत्वादिति तात्पर्यं बोध्यम् ।

**अथोपाध्याभासाः—असाधारणविपर्ययः, अप्रसिद्धसाध्यविपर्ययः, बाधितसाध्यविपर्ययः, पक्षाव्यापकविपर्ययः, पूर्वसाधनव्यतिरेकः, पूर्वसाधनव्याप्यव्यतिरेकः, पक्षविपक्षान्यतरान्यः, पक्षेतरसाध्याधारः, तत्तुल्यजात्यादयः।**

**तत्राद्यो यथा—अन्वयव्यतिरेकिणि साध्ये बाधोन्नीतान्यपक्षेतरः। तत्र हि सकलसपक्षविपक्षव्यावृत्तत्वादुपाधिव्यतिरेकोऽसाधारणो भवति।**

## उपाध्याभासाः

उपाधिवदवभासमानानामुपाधित्वज्ञानाधीनज्ञानत्वादुपाधिनिरूपणानन्तरं तान्निरूपयितुमुपक्रमते—**अथेति**। निरूप्यन्त इति शेषः। [1]व्यभिचारानुन्नयनदशायां सत्प्रतिपक्षोत्थापकत्वेऽनुमितिप्रतिबन्धकत्वात्तदुत्थापनद्वारास्य दूषणत्वमेव। दूषितस्तु नियमपक्ष इत्यभिप्रायेणोपाधेः सत्प्रतिपक्षोत्थापकत्वपक्षमवलम्ब्यैवोपाध्याभासानाह—**असाधारण इति**। असाधारणश्चासौ विपर्ययः व्यतिरेकश्चेति कर्मधारयः। [2]**अप्रसिद्धेति**। साध्यस्य विपर्ययः, अप्रसिद्धश्चासौ साध्यविपर्ययश्चेति समासः। एवमुत्तरत्रापि यथायोग्यं सुगममिति ध्येयम्।

**तत्रेति**। तेषां मध्य इत्यर्थः। **आद्य इति**। असाधारणविपर्यय इत्यर्थः। केवलान्वयिनि सपक्षस्य केवलव्यतिरेकिणि विपक्षस्य व्यतिरेकेऽसंभवादसाधारण्याभाव इत्यतोऽन्वयव्यतिरेकिणीत्युक्तम्। असाधारण इत्यत्र हेतुमाह—**तत्र हीति**। अत साधनाव्यभिचारित्वात्। साधनम्, अव्यभिचारि व्याप्यं यस्य तत्त्वात्। साधननिष्ठव्याप्यतानिरूपकत्वात्; साधनव्यापकत्वादिति यावत्। साधनाधिकरणे पक्षे संयोगविशेषे अव्याप्यवृत्तौ संयोगविशेषाभाववद्वृत्तित्वस्य सत्त्वादिति भावः।

1 पूर्वमुपाधेः सत्प्रतिपक्षतया दूषकत्वस्य निराकृतत्वात्, अत्र सत्प्रतिपक्षतया दूषकत्वमवलम्ब्योपाध्याभासनिरूपणं संगच्छते इत्याशयवानाह–व्यभिचारानुन्नयनदशायामिति। असाधारणविपर्यय इति। यस्य विपर्ययोऽभावः पक्षे साध्याभावे साध्येऽसाधारणो भवति, स उपाध्याभासोऽसाधरणविपर्यय इत्युच्यते। 'पर्वतो वह्निमान् धूमात्' इत्यत्र पर्वतेतरत्वमुपाध्याभासः। पर्वते वह्न्यभावसाधने पर्वतेरत्वाभावः पर्वतरूपपक्षमात्रवृत्तितया सर्वसपक्षविपक्षव्यावृत्तत्वेनासाधारणो भवति। ततश्चोपाधिकार्यस्यानिर्वाहादयमुपाध्याभासः। तथाचासाध्यरणश्चासौ विपर्ययश्चेति कर्मधारय इति ग्रन्थः, असाध्यरणस्य विपर्यय इति समासाभावबोधनाभिप्रायको बोध्यः। एवमुत्तरत्रापि।

2 अप्रसिद्धसाध्यविपर्ययः। यत्र साध्यस्याभावोऽप्रसिद्धः तत्रोद्भाव्यमानः 'इदं वाच्यं ज्ञेयत्वात्' इत्यादौ पक्षेतरत्वादिः अप्रसिद्धसाध्यविपर्ययनामोपाध्याभासः।

अत एव तद्व्यावृत्तिः पक्षे विद्यमानापि न साध्याभावसाधिकेत्युपाधिलक्षणानाक्रान्तत्वादुपाध्याभासोऽयम् । एवमुत्तरत्राप्यूहनीयम् ।

द्वितीयो यथा—केवलान्वयिनि साध्ये पक्षेतरादिः । तत्र हि व्यतिरेके यत्साध्यं साध्यात्यन्ताभावः सोऽप्रसिद्धः ।

तृतीयो यथा—'वह्निरुष्णस्तैजसत्वात्' इत्यत्र कृतकत्वम् । अत्र हि व्यतिरेके यत्साध्यमनुष्णत्वं तद्बाधितम् ।

चतुर्थो यथा—'क्षित्यादिकं सकर्तृकं कार्यत्वात्' इत्यत्राणुव्यतिरिक्तत्वम् । अत्र हि व्यतिरेकः क्षित्याद्येकदेशवृत्तित्वाद्भागासिद्धः । ननु संदिग्धसाध्ये धर्मिणि साध्याभावसाधनमेव प्रतिरोधोऽभिधीयते । स च पक्षभेदेऽपि किं न स्यात् ? मैवम् । निश्चयानुत्पादकत्वरूपस्य पक्षभेदेऽनुपपत्तेः । तादृशे साधनवति साध्याभावसाधनाव्यभिचारोऽस्त्विति चेत्; न, स्थापनयैव गतत्वात् ।

पञ्चमो यथा—'क्षित्याधिकं सकर्तृकं कार्यत्वात्' इत्यत्राशरीरिकर्तृकत्वेन प्रतिरोधेऽकार्यत्वम् ।

अत्र केचित्—पूर्वसाधनव्यतिरेकव्यतिरेकात् प्रतिरोधे कुत्रापि न प्रतिरोधः स्यात्, पूर्वसाधनव्यतिरेकव्यतिरेकस्य पूर्वसाधनात्मकत्वेनाकिंचित्करत्वात् । तस्मादनुपाधित्वमेवास्य जायत इत्युपाध्याभासत्वे युक्तिं वदन्ति । तन्न, 'शब्दोऽनित्यः, बहिरिन्द्रियवेद्यत्वात्' 'शब्दो नित्यः,

एवेति । उपाधिव्यतिरेकस्यासाधारणत्वादेवेत्यर्थः । उक्तन्यायमन्यत्राप्यतिदिशति—एवमिति । उत्तरत्रापीति । अप्रसिद्धसाध्यविपर्ययादावित्यर्थः ।

अप्रसिद्धसाध्यविपर्ययमुपाध्याभासमुदाहरति—द्वितीय इति । [1]बाधितसाध्यविपर्ययमुदाहरति—तृतीय इति । पक्षाव्यापकविपर्ययमुदाहरति—चतुर्थ इति । पूर्वसाधनव्यतिरेकमुदाहरति—पञ्चम इति ।

1 बाधितसाध्यविपर्ययः । यस्योपाधेरभावेन साध्यः प्रकृतसाध्याभावः पक्षे प्रमाणबाधितः, स बधितसाध्यविपर्ययनामोपाध्याभासः । पक्षाव्यापकविपर्ययः । यस्योपाधेर्विपर्ययोऽभावः पक्षाव्यापको भागासिद्धः, स उपाधिकार्यानिर्वहणादुपाध्याभासः ।

श्रावणत्वात्' इत्यत्र पूर्वसाधनव्यतिरेकस्योपाधित्वं न संभवति, साध्याव्यापकत्वात्। न हि नित्यगोत्वादौ बहिरिन्द्रियावेद्यत्वमस्ति। न च पूर्वहेतोरनैकान्तिकत्वेन दुष्टत्वादलं प्रतिपक्षेणेति वाच्यम्, अगृह्यमाणविशेषदशायां प्रतिपक्षत्वसंभवात्।

क्षित्याद्यकर्तृकत्वाद्यनुमाने तु पूर्वहेतुव्यतिरेक एवास्तूपाधिः, तल्लक्षणाक्रान्तत्वात्। अतः कथमुपाध्याभासोऽमिति ? मैवम्। 'शब्दो नित्यः, श्रावणत्वात्'; 'शब्दोऽनित्यः, महद्द्रव्यविशेषगुणत्वात्'; एवं 'शर्करारसोऽनित्यः, अनित्यवृत्तिगुणत्वात्'; 'रसो नित्यः, रसनेन्द्रियजन्यनिर्विकल्पकविषयत्वात्' इत्यादौ पूर्वसाधनतायाः प्रयोगानुरोधेनाव्यवस्थितत्वमिति वस्तुव्यवस्था न स्यात्, उपाधेर्नित्यदोषत्वात्। न हि यद्येन सोपाधि संबद्धं तत्तेन निरुपाधि संबद्धं भवतीत्यलमतिपल्लवितेन।

पूर्वसाधनव्यतिरेकस्योपाध्याभासत्वे परोदीरितां युक्तिं दूषयितुमुपन्यस्यति—अत्र केचिदिति। मानमनोहरकारा इत्यर्थः। निषेधति—तन्नेति। साध्याव्यापकत्वादिति। बहिरिन्द्रियवेद्यत्वव्यतिरेकस्यासिद्धत्वात्साध्याव्यापकत्वादित्यर्थः। साध्याव्यापकत्वमुपपादयति—न हीति। नन्वत्र प्रतिपक्षोपन्यासो निरर्थकः, बहिरिन्द्रियवेद्यत्वहेतोर्व्यभिचरितत्वेनानित्यत्वसाधकत्वाभावादित्यत आह—न चेति। अगृह्येति। व्यभिचारास्फुरणदशायामित्यर्थः।

ननु 'क्षित्यादिकं सकर्तृकं कार्यत्वात्' इत्यत्र 'क्षित्यादिकमकर्तृकम्, अशरीरिकर्तृकत्वात्' इति प्रतिरोधे पूर्वसाधनव्यतिरेकस्याकार्यत्वस्योपाधित्वं न स्यादित्यत आह—अकर्तृकत्वाद्यनुमान इति। उपाधिरस्त्वित्यत्र हेतुमाह—तल्लक्षणेति। उपाधिलक्षणघटितत्वादित्यर्थः। साध्याव्यापकत्वस्य बाधितत्वेनोपाधित्वं युज्यत इति भावः। परोक्तरीत्या तस्योपाध्याभासत्वाभावमुपसंहरति—अत इति। पूर्वसाधनव्यतिरेकस्य प्रकारान्तरेणोपाध्याभासत्वं साधयति—शब्दो नित्य इति। इष्टापत्तिमाशङ्क्याह—उपाधेरिति। ननु सत्प्रतिपक्षोच्छेदः पूर्वसाधनव्यतिरेकस्योपाध्या-

षष्ठो यथा—तत्रैवाकर्तृकत्वानुमाने नित्यत्वादिः । सप्तमो यथा—प्रसिद्धानुमाने पर्वतह्रदान्यतरान्यत्वम् । अष्टमो यथा—तत्रैव पर्वतेतराग्निमत्त्वम् । न च व्यर्थविशेष्यत्वं दूषणमिति वाच्यम् । व्यर्थविशेष्यत्वेऽप्युपाधेराभासत्वात् । नवमो यथा--तत्रैव पर्वतेतरेन्धनवत्त्वम् । एवं वह्निसामग्रीमत्त्वादिकमूह्यम् । तत्सामग्री तत्सकलकारणसमवधानं वा, तच्चरमकारणं वा, क्षणविशेषो वा । सर्वेषाममीषां व्यावृत्तिर्न वह्निधूमसंबन्धविरोधिनी । दृश्यते ह्यमीषां व्यतिरेककाले वह्निधूमसंबन्धः । ननु यत्रोत्पत्तिः साध्यते, तत्रास्तु सामग्र्या उपाधित्वम् । मैवम् । यत्रेति किं देशः, ? कालो वा ? उभयथापि हेतुर्वा साध्यं वा सामग्र्यन्तर्भावेण विवेक्तव्यमिति न तस्योपाधित्वम् । अधिकं च नयचिन्तामणौ चिन्तितमिति ।

इत्युपाधिवादः ।

भासत्वे बीजमिति चेत्; न; [1]स्थापनाया यत्राभासत्वं तत्र पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वात् । यत्तु पूर्वहेतोस्तत एवासाधकत्वात्प्रतिपक्षवैयर्थ्यं तत्रेति; तन्न । अगृह्यमाणविशेषदशायां सत्प्रतियक्षत्वसंभवात् इत्येतत्सर्वं मनसि निधायाह—**अलमतिप्रलापेनेति** ।

पूर्वसाधनस्याप्यव्यतिरेकं दर्शयति—**षष्ठो यथेति** । पक्षविपक्षान्यतरान्यं दर्शयति—**सप्तमो यथेति** । पर्वतेतरसाध्याधारं दर्शयति—**अष्टमो यथेति** । **तत्रैवेति** । प्रसिद्धानुमान एवेत्यर्थः । तत्तुल्यजात्यादिकमुदाहरति—**नवमो यथेति** । साध्यव्यापकत्वग्राहकतर्काभावादुपाध्याभासत्वमुक्त्वा साधनाव्यापकत्वग्राहकाभावमाह—**एवमिति** । वह्निसामग्रीव्यतिरेकेण वह्निधूमसंबन्धव्यतिरेकाभावं दर्शयितुं तत्सामग्रीं निर्वक्ति—**तत्सामग्रीति** । वह्निसामग्रीत्यर्थः । नन्वित्यादिग्रन्थः स्पष्टार्थः । ननु वह्निसामग्र्यादेरुपाधित्वेन कथनमनुपपन्नम्, पुरातनग्रन्थेष्वनुक्तत्वादित्यत आह—**अधिकमिति** । अयमुपाध्याभासः चिन्तामणावपि सूचित इति नात्राधिकं मया चिन्तितमिति भावः ।

इत्युपाधिवादः

1 स्थापनाया यत्राभासत्वमिति । 'ह्रदो वह्निमान् द्रव्यत्वात्,' 'ह्रदो वह्निमान् जलात्' इत्यत्र प्रतिरोधानुमाने पूर्वसाधनव्यतिरेको द्रव्यत्वाभावो नोपाधिः संभवति, द्रव्यत्वाभावस्य वह्न्यभावाव्यापकत्वादिति भावः ।

## पक्षतावादः

उपाधेरनन्तरं पक्षधर्मता निरूप्यते, अनौपाधिकत्वेन ज्ञातस्य पक्षधर्मतोपसंहारात्। तत्र किं पक्षत्वम्? यद्यपि पक्षत्वस्य केवलान्वयित्वादितरभेदसाधकत्वं नास्ति, तथापि पक्षपदस्य प्रवृत्तिनिमित्तमात्रं निरूप्यते। तत्र साध्यवत्तया संदेहविषयत्वं पक्षत्वमिति न, यदा कदाचित् 'पर्वतो वह्निमान्,

### पक्षतावादः

पाशाङ्कुशधनुर्बाणान् धारयन्तीं करैरुमाम्।
चिन्तितार्थप्रदां देवीं वन्दे त्रिपुरसुन्दरीम्॥

अवसरसंगत्या पक्षधर्मतां निरूपयितुमुपक्रमते—**उपाधेरिति**। **अनन्तरमिति**। उपाधिनिरूपणानन्तरमित्यर्थः। उपाधिनिरूपणानन्तरं पक्षधर्मतानिरूपणे हेतुमाह—**अनौपाधिकत्वेनेति**। पक्षत्वे निरूपिते तद्धर्मत्वं सुनिरूपमित्यनाकाङ्क्षाभिधाननिरासायाकाङ्क्षामुद्भावयति—**तत्र किमिति**। पक्षत्वस्येतरभेदसाधनत्वं यद्यपि न संभवति, [1]केवलान्वयित्वात्; तथापि पक्षपदप्रवृत्तिनिमित्तमात्रं चिन्त्यत इति शङ्कोत्तराभ्यामाह—**यद्यपीत्यादिना**। पूर्वपक्षमवतारयति—**तत्रेति**। **साध्यवत्तयेति**। संदिग्धसाध्यधर्मवत्त्वमिति पर्यवसन्नोऽर्थः। सपक्षेऽतिव्याप्तिपरिहाराय संदिग्धेति। ननु—'[2]विशेषोऽभिधेयः, प्रमेयत्वात्' इत्यत्र विशेषे पक्षेऽव्याप्तिः, संदिग्धसाध्यवत्त्वाभावात्। ततश्च तत्र कथमनुमितिरिति चेत्—'अभिधेयत्वं विशेषे वर्तते, न वा' इति संदेहस्य सिद्धत्वात्कथमव्याप्तिः? कथं वानुमितिर्न? न चास्याभिधेयत्वपक्षकत्वेन भिन्नविषयकत्वात् 'विशेषोऽभिधेयो न वा' इति संदेहो मृग्यते। स च नास्त्येवेति वाच्यम्। य एव हि संदेहः पक्षे [2]साध्यसिद्धिविरोधी, स एवानुमानाङ्गम्, भिन्नविषयकत्वस्या-

1 केवलान्वयित्वादिति। सर्वस्यापि कुत्रचिदनुमाने पक्षत्वसंभवेन सामान्यतः पक्षभिन्नस्याप्रसिद्ध्या अपक्षव्यावर्थकत्वं न संभवतीति भावः। संदिग्धसाध्यधर्मवत्त्वमिति पर्यवसन्नोऽर्थ इति। एवं सति ह्रदो वह्निमानित्यत्र ह्रदे पक्षव्यवहारो न स्यात्, संदिग्धस्य वह्निरूपसाध्यस्य ह्रदेऽभावात्। अतः साध्यवत्तया संदेहविषयत्वमेव समीचीनं भाति। ह्रदो वह्निमान्न वेति वह्निमत्त्वप्रकारकसंदेहविषयत्वस्य सत्त्वात्।

2 विशेषोऽभिधेय इति। अभिधेयत्वस्य केवलान्वयितया तदभावरूपकोट्यप्रसिद्ध्या अभिधेयत्वप्रकारकसंशयासंभवेन संशयविशेष्यत्वस्य विशेषेऽभावादव्याप्तिरित्यर्थः। परं तु 'घटोऽभिधेयः' इत्यत्राप्यव्याप्तिसंभवे विशेषपक्षकानुमानपर्यन्तानुसरणस्य बीजं समालोचनीयम्।

न वा ' इति संदेहे पक्षव्यवहारप्रसङ्गात् । सिषाधयिषाजनकः संशयोऽभिधीयत इति चेत्; न, सिषाधयिषा यदि ज्ञातुमिच्छा तदा प्रत्यक्षादिज्ञानजनकेच्छाजनकसंदेहविषयेऽतिप्रसक्तिः । अथानुमितिज्ञानजनिकेच्छा, तदा लिङ्गज्ञानजन्यज्ञानमनुमितिः ; लिङ्गं च व्याप्तिपक्षधर्मतया ज्ञायमानमित्यन्योन्याश्रयः ।

किंचित्करत्वात् । ततश्च ' विशेषोऽभिधेयः ' इत्यनुमितेः ' अभिधेयत्वं विशेषनिष्ठात्यन्ताभावप्रतियोगि, न वा ' इति संशयस्य विरोधित्वेनैतादृशसंशयस्य सर्वत्र सुलभत्वेनानुमितेरविकलत्वमिति दिक् । एतल्लक्षणं मननस्थलेऽव्यापकम्, श्रवणेनात्मनो निश्चितत्वेन संदेहाभावादिति दूषणे सत्येव दूषणान्तरमाह — **यदा कदाचिदिति** । अतिप्रसङ्गपरिहारमाशङ्कते — **सिषाधयिषेति** । यादृशसिषाधयिषाजनकः संदेहः, तादृशी सिषाधयिषा ज्ञातुमिच्छा वा ? अनुमितिजनिकेच्छा वा ? इति विकल्पाद्यं कल्पमतिव्याप्त्या निराकरोति — **सिषाधयिषेति** । द्वितीयमुत्थापयति — **अथेति** । यादृशानुमितिजनिकेच्छा सिषाधयिषा, तादृशानुमितिलक्षणं दर्शयन्नेव पक्षलक्षणं दूषयति — **तदा लिङ्गज्ञानेत्यादिना** । लिङ्गज्ञानजन्यं च तत् ज्ञानं चेति कर्मधारयः । एवंच [1]व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिरिति पर्यवसन्नोऽर्थः ।

ननु व्याप्तिविशिष्टा या पक्षधर्मतेति वा ? व्याप्तिविशिष्टस्य पक्षधर्मतेति वा ? व्याप्तिविशिष्टश्च पक्षधर्मश्चेति द्वन्द्वो वा ? व्याप्तिविशिष्टं च तत् पक्षधर्मताज्ञानं चेति [2]ज्ञानान्तकर्मधारयो वा ? न तावत्प्रथमद्वितीयौ, भ्रमानुमित्यव्याप्तेः ; व्याप्तिविशिष्टपक्षधर्मतयोर्भेदात् । न तृतीयः, प्रमानुमित्यव्याप्तेः ; व्याप्तिविशिष्टपक्षधर्मयोरभेदात् । नापि चतुर्थः, व्याप्त्यनाश्रयज्ञानस्य व्याप्तिवैशिष्ट्यस्यासंभवात् । यत्तु व्याप्तिवैशिष्ट्यं व्याप्तिविषय-

1 व्याप्तिविशिष्टपक्षधर्मतेति । अत्र वैशिष्ट्यं सामानाधिकरण्यरूपम् ।

2 ज्ञानान्तकर्मधारयः । ज्ञानान्तेन पक्षधर्मताज्ञानपदेन व्याप्तिविशिष्टपदस्य कर्मधारय इत्यर्थः ; व्याप्तिविशिष्टपक्षधर्मतयोर्भेदादिति । अयोगोलकं धूमवत् वह्नेरित्यत्र वह्नौ धूमव्याप्तेरसत्त्वात् पक्षधर्मता न सामानाधिकरण्येन व्याप्तिविशिष्टा । तथाच व्याप्तिविशिष्टाभिन्नपक्षधर्मताज्ञानजन्यत्वं तादृशानुमितौ नास्तीत्यव्याप्तिः । व्याप्तिविशिष्टस्य पक्षधर्मतेति समासेऽपि निरुक्तस्थले वह्निनिष्ठपक्षधर्मताया व्याप्तिविशिष्टनिष्ठत्वाभावात् व्याप्तिविशिष्टनिष्ठपक्षधर्मताज्ञानजन्यत्वं नास्तीत्यव्याप्तिरिति भावः ।

कत्वमिति नोक्तदोष इति ; तत्तुच्छम् । व्याप्तिविषयकपक्षधर्मताज्ञानत्वमनुमितिहेतुताव-च्छेदकमिति वक्तव्यम् । तच्च न संभवति, प्रमेयत्वप्रकारकपक्षधर्मताज्ञानादनुमित्यापत्तेः । यदपि व्याप्तिविषयत्वं व्याप्तिप्रकारकत्वम् । एवंच व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यत्वं पर्यवस्यतीति । तदपि तुच्छतमम् । यत्र धूमसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं वह्नौ पृथगवगतम्, वह्न्यधिकरणाधिकरणत्वं धूमे पृथगवगतम्, तत्रापि 'विशेष्ये विशेषणं, तत्र च विशेषणान्तरम्' इति न्यायेन पक्षवृत्तिहेतौ साध्यसामानाधिकरण्यं, साध्ये च हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं विषयीकृत्य विशिष्टपरामर्शसंभवेन तज्जन्यानुमितावव्याप्तिः, [1]व्याप्तेः पूर्वमनुपस्थितत्वेन तत्राप्रकारत्वात् । यत्तु तत्रानु-मितिर्न भवत्येवेति ; तत्तुच्छम्, अनुभवविरोधात् । लाघवेनाव्यभिचारप्रकारकत्वमेव तद-वच्छेदकमिति दिक् ।

अत्र वदन्ति—व्यभिचारज्ञानविरोधिप्रकारेण व्याप्तिविषयकत्वमेव व्याप्तिप्रका-रकपदेन विवक्षितम् । व्यभिचारज्ञानविरोधित्वं नाम, व्यभिचारज्ञानप्रतिबन्धकज्ञान-विषयत्वम् । नन्वव्यभिचारप्रकारकत्वमेव लाघवेन विवक्ष्यतामिति चेत्; न, [2]अन्योन्याभावादिगर्भव्यभिचारस्य नानात्वेनोक्तरूपेण तदनुगतस्यावश्यकत्वात् । व्यभिचारज्ञानविरोधिप्रकारो व्याप्तिघटकयत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वादिरूपः । अत एव प्रमेयत्वप्रकारकव्याप्तिज्ञानान्नानुमितिरिति । व्याप्तिविशिष्टपक्षधर्मताज्ञानस्य [3]व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वेन जनकत्वं विवक्षितम् । तेन तदनुव्यवसाये, तज्ज्ञानजन्य-स्मरणे, न्यायजन्यवाक्यार्थज्ञानादौ नातिव्याप्तिः । तथाहि—अनुव्यवसाये विषयत्वेन तादृशज्ञानस्य हेतुत्वात् ; स्मृतौ समानविषयानुभवत्वेन कारणत्वात् ; महावाक्यार्थज्ञाने

1 व्याप्तेः पूर्वमनुपस्थितत्वेनेति । धूमसमानाधिकरणाभावाप्रतियोगित्वविशिष्टवह्नि-सामानाधिकरण्यस्याज्ञानादित्यर्थः । अप्रकारत्वादिति । विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वात् ।

2 अन्योन्याभावादिगर्भव्यभिचारस्य नानात्वेनेति । हेतोः साध्यवद्भिन्नवृत्तित्वं, साध्याभाववद्वृत्तित्वं, साध्याभावे हेतुसामानाधिकरण्यं, साध्ये हेतुसमानाधिकरणाभावप्रतियो-गित्वं, साध्यवद्भेदे हेतुसमानाधिकरणत्वं, साध्ये हेतुसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं च व्यभिचार इति भावः ।

3 व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वेन जनकत्वमिति । तादृशज्ञानत्वावच्छिन्नजनकतानिरूपि-तजन्यतावत्त्वं लक्षणमिति भावः ।

पदार्थज्ञानत्वेन बीजत्वात् । परामर्शजनितपरामर्शान्तरे च नातिव्याप्तिः, परामर्शस्य विशेषणज्ञानत्वेन हेतुत्वात् । अनुमितिव्यतिरिक्तस्थले व्याप्तिविशिष्टपक्षधर्मताज्ञानस्य तत्त्वेनाहेतुत्वमिति दिक् ।

जयदेवमिश्रास्तु—समस्यमानपदार्थयोर्व्याप्तिविशिष्टपक्षधर्मयोरभेदेऽपि पदार्थतावच्छेदकयोर्व्याप्तिविशिष्टत्वपक्षधर्मत्वयोर्भेदमादाय [1]द्वन्द्वो युज्यते, अन्यथा "प्रमाणप्रमेय" इत्यादिसूत्रे प्रमाणप्रमेयसंशयादिनापि द्वन्द्वानुपपत्तिप्रसङ्गात् ; सव्यभिचारादीनामपि लक्षणपर्यालोचनया भेदानुपपत्तौ द्वन्द्वानुपपत्तिप्रसङ्गात् । किंचात्मशरीरेन्द्रियादौ द्वन्द्वानुपपत्तिप्रसङ्ग इत्याहुः । [2]विशेषदर्शनजन्यसंशयोत्तरप्रत्यक्षादौ नातिव्याप्तिः, विशेषदर्शनस्य तत्त्वेन जनकत्वाभावात् ; किंतु भ्रमविरोधित्वेन जनकत्वात् भ्रमानुमितावतिव्याप्तिवारणाय द्वितीयज्ञानपदं प्रमापरम् । अन्यथोक्तदोषो दुर्वारः स्यात् । प्रमाणलक्षणाय [3]प्रमाया एव लक्ष्यत्वात् । भ्रमानुमितावतिव्याप्तिवारणाय प्रथमज्ञानपदस्यैव प्रमापरत्वं स्वीक्रियतामिति चेत् ; मैवम् । [4]धर्म्यंशप्रमामादायातिव्याप्त्यापत्तेः । बाधानवतारकाले 'गन्धप्रागभावावच्छिन्नो घटो गन्धवान्' इत्यादौ जायमानानुमितावतिव्याप्त्यापत्तेश्च ।

ननु—किमिदमनुमितिसामान्यलक्षणम् ? किं वा तद्विशेषलक्षणं ? नाद्यः, द्वितीयज्ञानपदवैयर्थ्यापत्तेः । न द्वितीयः, सामान्यलक्षणकथनमन्तरेण कथं विशेषलक्षणाभिधानमिति चेत् ; मैवम् । द्वितीयज्ञानबहिर्भूतं तत्सामान्यलक्षणं ; तदन्तं विशेषलक्षणमिति न परोक्तदूषणावकाश इति ध्येयम् ।

1 द्वन्द्वो युज्यत इति । पदार्थतावच्छेदकभेदस्यैव द्वन्द्वसमासप्रयोजकत्वं, न पदार्थभेदस्य । नीलघट इत्यत्र नीलघटयोरभेद इति प्रामाणिकव्यवहारादिति भावः ।

2 विशेषदर्शनजन्येति । स्थाणुर्वा पुरुषो वेति संशयानन्तरं पुरुषत्वव्याप्यकरादिमानयमिति विशेषदर्शनजन्ये 'अयं पुरुषः' इति प्रत्यक्ष इत्यर्थः ।

3 प्रमाया एव लक्ष्यत्वादिति । लक्षणीयत्वादित्यर्थः । शङ्कते—भ्रमानुमिताविति । प्रथमज्ञानपदस्यैवेति । विशिष्टपक्षधर्मताज्ञानजन्यज्ञानमित्यत्र पक्षधर्मताप्रमाजन्यज्ञानमिति निवेश्यताम् । भ्रमानुमितिजनकपरामर्शस्य भ्रमत्वेन तादृशप्रमाजन्यत्वाभावेन भ्रमानुमितावतिव्याप्तिवारणसंभव इत्याशयः ।

4 धर्म्यंशप्रमामादायेति । भ्रमानुमितिजनकपरामर्शस्य भ्रमस्यापि 'धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्ययः' इति न्यायेन धर्म्यंशे प्रमात्वादिति भावः ।

अनुमितित्वं जातिरिति तु मन्दमेव । अपिच संदेहविषयत्वं धर्मिणः किं स्वरूपमेव ? धर्मो वा ? आद्ये, कालान्तरेऽपि स्वरूपस्य तदवस्थत्वात्पक्ष-

नन्वेवं 'पृथिवी इतरेभ्यो भिद्यते, पृथिवीत्वात्' इत्यादिव्यतिरेकिलिङ्गकानुमितावव्याप्त्यापत्तिः, [1]तत्रोक्तलक्षणाभावादिति चेत्; न, तत्रापि व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यत इति मतानुरोधेनैतल्लक्षणप्रणयनान्नोक्तदोषः । अथानुमितावनुमितित्वं गृह्यते ? न वा ? आद्ये, अनुमितित्वमेव तल्लक्षणमस्तु; किमजागलस्तनायमानेन तज्ज्ञानाधीनग्रहणेन प्रकृतलक्षणेन ? द्वितीये, अनुगतधर्मग्रहं विना तत्रोक्तज्ञानजन्यत्वग्रहाभाव इति चेत्; न । अनुमितावनुमितित्वं गृहीतमेव । न च तदेव लक्षणमस्त्विति वाच्यम् । तस्य लक्ष्यतावच्छेदकतयोपयोगान्न लक्षणत्वम् । अनुमितित्वं लक्षणं लक्ष्यतावच्छेदकं च भवतु; को दोषः? इति चेत्; न 'अनुमितिरितरेभ्यो भिद्यते, अनुमितित्वात्' इत्यादावितरभेदानुमाने लक्षणलक्ष्यतावच्छेदकयोरभेदेनान्वयव्याप्तिग्रहेणैव लक्ष्यतावच्छेदकावच्छिन्ने [2]साध्यसिद्धिसंभवेन सिद्धसाधनात् । व्यतिरेकिण्यन्वयव्याप्तिरेव गृह्यत इति मतानुरोधेनैतल्लक्षणकथनात् । तन्मतं व्यतिरेकिप्रक्रियायामुपपादयिष्यामः । अनुमितावनुमितित्वाग्रहेऽपि न कोऽपि दोषः; तृणारणिमणिन्यायेनावच्छेदकधर्मग्रहं विना हेतुत्वसंभवाच्चेति भावः । स्यातामनुमितिलिङ्गलक्षणे; पक्षलक्षणे किं दूषणत् ? अत आह—**इतीति** । अनेन प्रकारेणेत्यर्थः ।

नन्वनुमितित्वं नोपाधिः, किंतु जातिः; अतो योक्तदोष इत्यत आह—**अनुमितित्वमिति** । [3]प्रमात्वादिना सांकर्यप्रसङ्गादिति भावः । संदेहविषयत्वं दुर्निरूपं, विकल्पासहत्वादित्याह—**अपिचेति** । अतिप्रसङ्गेन दूषयति—**आद्य इति** ।

1 तत्रोक्तलक्षणाभावादिति । साध्याभावे हेत्वभावव्याप्तिः पक्षधर्मता च हेतोः पृथिवीत्वस्येति व्याप्तिविशिष्टपक्षधर्मताज्ञानाभावेन तज्जन्यज्ञानत्वं तत्रानुमितावव्याप्तमिति भावः । मतानुरोधेनेति । तथाच साध्यव्याप्तिविशिष्टहेतोः पक्षधर्मताज्ञानमस्त्येवेति भावः ।

2 साध्यसिद्धिसंभवेनेति । अन्वयव्याप्तिज्ञाने हेतौ साध्यसामानाधिकरण्यभाने हेतुस्वरूपपक्षतावच्छेदके साध्यसामानाधिकरण्यं भासते । तुल्यवित्तिवेद्यतया साध्ये पक्षतावच्छेदकसामानाधिकरण्यभानात् व्याप्तिज्ञानमेव सामानाधिकरण्येन साध्यसिद्धिस्वरूपं जातमिति भावः ।

3 प्रमात्वादिना सांकर्यादिति । अनुमितित्वं विहाय प्रत्यक्षप्रमायां वर्तमानस्य

व्यवहारप्रसङ्गः । द्वितीये, स धर्मो नित्यो वा ? अनित्यो वा ? आद्ये, सर्वदा पक्षव्यवहारप्रसङ्गः । द्वितीये, गुणादीनां पक्षतानुपपत्तिः । एतेन सिषाधयिषाविषयत्वमित्यपास्तम्, साध्यस्यापि सिषाधयिषाविषयत्वेन पक्षत्वप्रसङ्गाच्च । साध्यवत्तया सिषाधयिषाविषयत्वमभिमतमिति चेत् ; न । साध्यत्वमपि किं सिषाधयिषाविषयत्वम् ? उतानुमितिविषयत्वम् ? उभयथाप्यन्योन्याश्रयत्वादि । सत्प्रतिपक्षादौ यत्रानुमितिर्नोत्पद्यते, तत्रानुमितिविषयत्वाभावादव्यापकं च । पक्षधर्मत्वं पक्षनिष्ठात्यन्ताभावाप्रतियोगित्वमेव यदि, तदा संयोगादीनामव्याप्यवृत्तित्वाङ्गीकारेऽपक्षधर्मत्वप्रसङ्गः । तदनङ्गीकारेऽपि सर्वेषामत्यन्ताभावानां पक्षधर्मतापत्तिः । अत्यन्ताभावस्यापि पक्षधर्मत्वं पक्षनिष्ठात्यन्ताभावाप्रतियोगित्वमेव । तस्याप्यत्यन्ताभावस्य पक्षनिष्ठत्वं पक्षनिष्ठात्यन्ताभावाप्रतियोगित्वम् । तथाच तत्परंपराङ्गीकारेऽनवस्था । तत्कथं पक्षधर्मताज्ञानादनुमितिरिति ?

द्वितीयोऽपि न प्रतिष्ठां लभते, विकल्पासहत्वादित्याह—द्वितीय इति । आद्य इति । धर्मो नित्य इति पक्ष इत्यर्थः । तस्य सर्वदा विद्यमानत्वादिति भावः । अनित्यो धर्म इति पक्षे दोषमाह—द्वितीये गुणादीनामिति । द्रव्यस्यैव जन्यधर्माश्रयत्वं, नान्येषामिति भावः । द्वितीयलक्षणे दोषान्तरमाह—सत्प्रतिपक्षादाविति ।

ननु सिषाधयिषाविरहसहकृतसिद्ध्युपहितमानाभावो यत्र स पक्षः । तथाच यद्यपि मननस्थले सिद्ध्युपहितमानं वर्तते, तथापि सिषाधयिषायाः सत्त्वेन विशेषणाभावघटितपक्षतास्त्येव । घनगर्जितस्थले सिषाधयिषाविरहरूपविशेषणसत्त्वेऽपि सिद्ध्युपहितमानरूपविशेष्याभावात् पक्षता । पर्वतादिस्थले सिषाधयिषायाः सत्त्वेऽनुमितिरुत्पद्यते । [1]तत्रोभयाभावात्पक्षता । यद्यप्ययं चोभयाभाव आत्मनिष्ठो न पर्वतादिनिष्ठः,

प्रमात्वस्य, प्रमात्वं विहाय भ्रमानुमितौ विद्यमानस्यानुमितित्वस्य च प्रमात्मकानुमितौ समावेशादिति भावः ।

1 उभयाभावात् । सिषाधमिषाविरहाभावः साधकमानाभावश्च वर्तते । अतो विशेष्यविशेषणोभयाभावप्रयुक्तो विशिष्टाभावो वर्तत इति बोध्यम् । भेदकत्वम् अपक्षव्यावर्तकत्वम् ।

उच्यते—'धूमवानयं पर्वतः' इति ज्ञानादनुमितिरुत्पद्यते; न तु 'धूमवानयं पक्षः' इति ज्ञानात्। तर्हि बाधसिद्धसाधनयोरप्यनुमितिः स्यात्। तत्रापि पर्वतवृत्तित्वप्रतिसंधानमस्त्येवेति चेत्; न। यत्र हि संशयविरोधिसाधकबाधकप्रमाणाभावस्तत्रानुमित्युत्पत्तिः। न च बाधसिद्धसाधनयोस्तथा, तयोरेव विद्यमानत्वात्। एवंच संशये सति वा, जिज्ञासायां सत्यां वा, साधकबाधकप्रमाणाभावलक्षणायां योग्यतायां सत्यां वा, व्याप्तिज्ञानादि-

तथापि स्वरूपसंबन्धविशेषेण पर्वतादिनिष्ठ एवेति बोध्यमिति। इह यद्यपि पक्षत्वस्य केवलान्वयित्वान्नास्य भेदकत्वम्, तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तम्। संदेहस्य जिज्ञासाजनकत्वेन परंपरया पक्षत्वघटकत्वेनोपयोगात्साध्यवत्तया संदेहविषयत्वलक्षण एवात्र तात्पर्यम्। अनेन रूपेण पक्षज्ञानं नानुमितौ कारणम्; किंतु तन्निष्ठपक्षता स्वरूपसती कारणमनुमितिमात्रे मन्तव्येति दिगित्यस्वरसादाह—**पक्षधर्मत्वमिति**। तादृशाभावाप्रतियोगित्वं पक्षधर्मत्वं ब्रुवता संयोगादीनामव्याप्यवृत्तित्वमङ्गीकृतम्? न वा? इति विकल्प्याद्यं कल्पं निराकरोति—**तदेति**। अपक्षधर्मत्वेति छेदः। द्वितीयं प्रत्याह—**तदनङ्गीकारेऽपीति**। इष्टापत्तिमाशङ्क्याह—**अत्यन्ताभावस्यापीति**। पूर्वपक्षरहस्यमाह—**तत्कथमिति**।

सिद्धान्तं वक्तुं प्रतिजानीते—**उच्यत इति**। किं 'धूमवानयं पर्वतः' इति ज्ञानादनुमितिः? किं वा 'धूमवानयं पक्षः' इति ज्ञानादनुमितिरुत्पद्यते? इति संदेहे निर्णयमाह—**धूमवानयमिति**। वैपरीत्यमाशङ्क्याह—**तर्हीति**। 'धूमवानयं पक्षः' इति ज्ञानस्यानुमित्यजनकत्व इत्यर्थः। हेतोः पक्षवृत्तित्वप्रतिसंधानमुपपद्यत इति शङ्कते—**तत्रापीति**। बाधसिद्धसाधनयोरपीत्यर्थः। प्रकृतेऽपि तथास्त्वित्याशङ्क्याह—**न चेति**। **तयोरेवेति**। संशयविरोधिसाधकबाधकप्रमाणयोरित्यर्थः। फलितमर्थमुपसंहरति—**एवंचेति**। एवंचानुमित्युत्पत्तिरस्त्विति संबन्धः। संदेहोऽप्यनुमितिकारणमित्याह—**संशय इति**। संदेहवत्परामर्शात्पूर्वं सिषाधयिषाया अप्यभाव इत्यरुचेराह—**साधकेति**। उभयाभावस्य प्रत्येकसत्त्वेऽपि सत्त्वात्। नाप्यभावद्वयं तथा, बाधकप्रमाणाभावस्य व्यर्थत्वात्। ननु 'ह्रदो वह्निमान् धूमवत्त्वात्' इत्यत्राप्यनुमित्युत्पत्तिनिवृत्तये बाधकेत्यादिविशेषणमिति चेत्; न। तत्र

सहकृतसामग्रीत एव वा, पक्षत्वाभिमतज्ञानसहकृतसामग्रीतो वानुमित्युत्पत्तिरस्तु । उभयथापि न पक्षत्वज्ञानमुपयुज्यते । एतादृशीमेव दशामाश्रित्य पक्षव्यवहारोऽपि । एवं साध्यमपि स्वरूपेण ज्ञातमुपयुज्यते, न तु साध्यत्वेन । अतो नान्योन्याश्रयादि । तद्धर्मता तु तदाधेयत्वलक्षणः संबन्धविशेष एव; न संबन्धान्तरमिति नानवस्था, समवायादिवदिति ॥

इति पक्षतावादः

## परामर्शवादः

अथ किं व्याप्तिपक्षधर्मताविषयकं ज्ञानद्वयमनुमितिजनकम् ? उतैकमेव ज्ञानम् ? तदपि किं समूहालम्बनरूपम् ? उत विशिष्टवैशिष्ट्यविषयमिति निरूप्यते ।

बाधे हेत्वसिद्ध्यादेरावश्यकत्वेनानुमित्यनुत्पादात्तदर्थं तद्विशेषणं व्यर्थम् । नापि साधकप्रमाणाभावः । 'श्रोतव्यो मन्तव्यः' इति श्रुत्या समानविषयश्रवणानन्तरं मननबोधनात्प्रत्यक्षदृष्टेऽप्यनुमानदर्शनादेकलिङ्गावगतेऽपि लिङ्गान्तरेण तदनुमानाच्च ; "मन्तव्यश्चोपपत्तिभिः" इति स्मरणादित्यत उक्तम्—योग्यतायामिति । शेषमतिरोहितार्थम् । उक्तं न्यायमन्यत्राप्यतिदिशति—एवमिति । यच्चोक्तं पक्षधर्मत्वं दुर्निरूपमिति, तत्रोत्तरमाह—तद्धर्मतेति । तत्रापि संबन्धान्तरापेक्षायामनवस्था स्यादित्यत आह—संबन्धेति । अत्र दृष्टान्तं स्पष्टमाचष्टे—समवायादिवदिति ।

इति पक्षतावादः

## परामर्शवादः

अनुमितौ लिङ्गस्य पक्षधर्मताज्ञानं करणमित्युभयवादिसिद्धम् । तस्य ज्ञानस्य व्याप्तिप्रकारकत्वेनानुमितिकरणत्वं वा, व्याप्तिपक्षधर्मताविशिष्टज्ञानमनुमितिकरणं वेति [1]विप्रतिपत्तिद्वयं संशयबीजभूतं मनसि निधाय विचाराङ्गं संशयं दर्शयति—अथेति ।

1 विप्रतिपत्तिद्वयं संशयबीजमिति । विरुद्धार्थप्रतिपादकं वाक्यद्वयं विप्रतिपत्तिः, तया विप्रतिपत्त्या संशयो जायते । स च शाब्दबोधरूपो वाक्यघटकपदजन्यपदार्थोपस्थितिमूलको मानसबोधरूपो वेत्यन्यदेतत् ।

[1] तत्र व्याप्तिज्ञानपक्षधर्मताज्ञानाभ्यामेवानुमितिसंभवे] किमिति विशिष्टवैशिष्ट्यविषयकज्ञानान्तरमङ्गीकर्तव्यम् ? भवतोऽपि तयोरङ्गीकर्तव्यत्वात् । कथमन्यथा तृतीयलिङ्गपरामर्शज्ञानस्योत्पत्तिः ? विशेषणज्ञानजन्यत्वात्तस्य ।

ननु ज्ञानद्वयकारणतापक्षे 'पक्षवृत्तिर्धूमो वह्निव्याप्यो न वा' इति संदेहेऽप्यनुमितिरुत्पद्येत । मम तु विशिष्टवैशिष्ट्यज्ञानाभावादेव तन्निवृत्तिरिति चेत्; न । विनश्यदविनश्यदवस्थव्याप्तिज्ञानपक्षधर्मताज्ञानाभ्यामनुमिति-

पक्षधर्मतानिरूपणानन्तरमित्यर्थः । यद्वा पक्षधर्मताज्ञानमनुमितिहेतुरिति सिद्धान्तयिष्यन् तदुपयोगिसंदेहं दर्शयति—अथेति । तदपीति । एकज्ञानमपीत्यर्थः । किं 'धूमो वह्निव्याप्यः, धूमवांश्चायम्' इति ज्ञानद्वयमनुमितिहेतुः ? किं वा विशिष्टज्ञानमेकमिति संदेहे ज्ञानद्वयमेव तत्कारणमस्तु । विशिष्टज्ञानहेतुत्वेनावश्यकत्वादिति पूर्वपक्षमवतारयति—तत्रेति । किमितीति । स्वीकर्तव्यमित्यनेन संबध्यत इति योजना । [2]"तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायादिति भावः । ननु गौरवात् ज्ञानद्वयं न हेतुरित्यत आह—भवतोऽपीति । "कृत्यानां कर्तरि वा" इति सूत्राद्भवतोऽपीति प्रयोगो युज्यते । तदुक्तं मेघसंदेशे कालिदासकविना—"गन्तव्या ते वसतिरलका" इति । ततश्च विशिष्टज्ञानहेतुत्वेन ज्ञानद्वयं भवताप्यङ्गीकर्तव्यमिति त्वत्पक्षेऽपि गौरवं तुल्यमिति भावः । ज्ञानद्वयहेतुकत्वं तृतीयलिङ्गपरामर्शस्य नाभ्युपगम्यत इत्याशङ्क्याह—कथमिति । तत्र हेतुमाह—विशेषणेति । तस्येति । तृतीयलिङ्गपरामर्शस्येत्यर्थः ।

ज्ञानद्वयकारणतापक्षेऽतिप्रसङ्गमाशङ्कते—नन्विति । त्वत्पक्षेऽप्यतिप्रसङ्गो दुर्वार इत्यत आह—मम त्विति । तन्निवृत्तिरिति । अनुमितिनिवृत्तिरित्यर्थः । परिहरति—नेति । मध्ये संदेहे सत्यनुमितिः स्यादित्यत आह—अन्तरा संदेह

1 'तत्र व्याप्तिज्ञानपक्षधर्मताज्ञानाभ्यामेवेत्यादिः, कथमुच्यते तृतीयलिङ्गपरामर्शोऽनुमितौ कारणमिति' इत्यन्तो मूलग्रन्थः पूर्वपक्षप्रतिपादकोऽवसेयः ।

2 तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेनेति न्यायादिति । परामर्शहेतोः ज्ञानद्वयादेव अनुमितिलक्षणं कार्यमस्तु । किं तेन अन्तर्गडुना परामर्शेनेति न्यायसमन्वयः ।

रित्यस्माभिरङ्गीक्रियते। अन्तरा संदेहे सति तयोरेव निवृत्त्या कुतोऽनुमितिः ? यद्वा यदि सर्वोपसंहारेण व्याप्तिग्रहः, तदा 'सर्वैव धूमव्यक्तिर्वह्निव्याप्या' इति ज्ञाने विद्यमाने 'इयं धूमव्यक्तिर्वह्निव्याप्या, न वा' इति कथं संदेहः ? भवतु वा ; तथाप्येतादृशभेदज्ञानाभावसहकृतज्ञानद्वयादेवानुमितिः। अपिच योग्येन्द्रियसंबद्धे हेतौ संस्कारजज्ञानेन्द्रियसमाहारात् व्याप्येन सह पक्षधर्मस्याभेदग्रहो वाच्यः। तथाच पक्षस्यापि साध्यवदभेदग्रहस्तत एवास्तु। किमनुमानेन ? अयोग्यासंनिकृष्टे तस्यासंभव इति चेत् ; न, तवापि तुल्यत्वात्। किंच प्राचीनेन्द्रियसंनिकर्षादिकारणानुवृत्तौ परामर्शान्तरं

इति। **तयोरिति**। तादृशव्याप्तिज्ञानपक्षधर्मताज्ञानयोरित्यर्थः। युक्तिसौकर्यादाह— **यद्वेति**। [1]तर्हि कथमनुमितिरुत्पद्यत इत्यत आह—**तथापीति**। संशये विद्यमानेऽपीत्यर्थः। **एतादृशेति**। [2]भेदज्ञानाभावसहकृतज्ञानद्वयादेवेत्यर्थः। ननु भेदज्ञानाभावसहकृतज्ञानद्वयेनैव यद्यनुमितिरुत्पद्यते, तदा किमिति प्रत्यभिज्ञानमङ्गीकर्तव्यम् ? तत्रापि देवदत्तविषयस्मृत्यनुभवाभ्यामेव प्रत्यभिज्ञानजन्यकार्योत्पत्तिसंभवादित्यरुचेराह—**अपिचेति**। शङ्कते—**अयोग्यासंनिकृष्ट इति**। प्रतिबन्द्या परिहरति—**तवापीति**। परामर्शोत्पत्त्यनन्तरं परामर्शान्तरं जायताम् ; नानुमितिः, परामर्शसामग्र्याः परामर्शान्तरजनकत्वेनानुमितिप्रतिबन्धकत्वादित्याह—**किंचेति**।

ननु समाने विषये प्रत्यक्षसामग्र्या अनुमितिसामग्र्यपेक्षया बलीयस्त्वेऽपि भिन्नविषयेऽनुमितिसामग्र्याः प्रत्यक्षसामग्र्यपेक्षया बलीयस्त्वेन प्रत्यक्षसामग्रीं परिभूयानुमितिजनकत्वसंभव इति शङ्कते—**पक्षधर्मतेति**। संकोचे कारणाभावात्सर्वत्रानुमितिसामग्री-

1 तर्हि कथमनुमितिरुत्पद्यत इति। भवतु वा इति ग्रन्थेन मूले संदेहस्य स्वीकृतत्वात्तदुपरि तर्हीति शङ्काया अवसरः। तर्हि संशये सतीत्यर्थः।

2 भेदज्ञानाभावसहकृतज्ञानद्वयादेवेति। पक्षधर्मे साध्यव्याप्यभेदज्ञानाभावसहकृतं यत् व्याप्तिज्ञानं पक्षधर्मताज्ञानं चेति ज्ञानद्वयं तस्मादेवेत्यर्थः। अनुमितिसामग्रीप्रतिबन्धकत्वं प्रत्यक्षसामग्र्या उपपद्यत इति। अत्रानुमितिसामग्रीप्रतिबन्धकत्वपदेन अनुमितिसामग्र्यपेक्षया बलीयस्त्वं विवक्षितम्। यद्वा अनुमितिसामग्रीजन्ये अनुमितिलक्षणकार्ये प्रतिबन्धकत्वमभिमतम्। यथाश्रुते सामग्र्योः प्रतिबन्धकभावाभावेनासंगतेः।

किं नोत्पद्यते ? सामग्र्याः पूर्ववत्सद्भावाविशेषात् । पक्षधर्मतापरिच्छेदात्मकसहकारिसंपत्त्यानुमितिसामग्र्याः स्फीतत्वात्तया प्रतिबन्धादिति चेत्, न, वैपरीत्यस्यापि संभवात् । कार्यदर्शनबलात् दृष्टकार्यसामग्रीप्रतीबन्धकत्वमेव कल्प्यत इति चेत्, परामर्शकाल एव तर्ह्यनुमितिरस्तु । एतत्सामग्रीबलवत्त्वस्य त्वयैव क्लृप्तत्वात् । अतः कथमुच्यते तृतीयलिङ्गपरामर्शोऽनुमितौ कारणमिति ?

उच्यते—यदि भेदज्ञानाभावसहकृतज्ञानद्वयादेवानुमितिलक्षणं कार्यं

प्रतिबन्धकत्वं प्रत्यक्षसामग्र्या उपपद्यत इति परिहरति—वैपरीत्यस्यापीति । कार्यानुरोधेन [1]दृष्टकार्यसामग्रीप्रतिबन्धकत्वमेव कल्प्यतामिति शङ्कते—कार्यदर्शनेति । परामर्शकाल एवेति । परामर्शोत्पत्तिकाल एवेत्यर्थः । तत्र हेतुमाह—एतत्सामग्रीति । परामर्शमात्रमनुमितौ न कारणम् । किंतु लिङ्गपरामर्शः कारणमिति वाच्यम् । एवंच लिङ्गमपि हेतुः । विशिष्टकारणताग्राहकप्रमाणेन बाधकाभावे विशेषणस्यापि कारणत्वं गृह्यते । ननु लिङ्गस्य [2]परामर्शपरिचायकत्वेनान्यथासिद्धत्वान्नानुमितिहेतुत्वमिति चेत्, परिचीयमानपरामर्शे लिङ्गमेव विशेषणम्, विशेषणान्तराभावात् । एवंचानन्यथासिद्धत्वाल्लिङ्गमपि कारणम् । अन्यथा, इन्द्रियादीनामप्यहेतुत्वप्रसङ्गः, परिचायकतया संयोगेनान्यथासिद्धत्वात् । अपिच लिङ्गकरणत्वपक्षे परामर्श एव तद्व्यापारः । परामर्शस्य न व्यापारान्तरमस्ति, [3]अनुमितिचरमकारणत्वात्; इत्येतत्सर्वं मनसि निधायोपसंहरति—अत इति ।

सिद्धान्तमारब्धुं प्रतिजानीते—अत्रोच्यत इति । पूर्ववाद्युक्तरहस्यं दूषयितुमनुवदति—यदि भेदज्ञानेति । प्रतिबन्द्या दूषयति—तदेति । तत्रापीति ।

1 दृष्टकार्यसाग्रीप्रतिबन्धकत्वमेवेति । दृष्टं कार्यं यस्याः सा सामग्री; तस्याः प्रतिबन्धकत्वमित्यर्थः ।

2 परामर्शपरिचायकत्वेनेति । परिचयो ज्ञानम् । 'ईदृशः परामर्शः' इति ज्ञाने लिङ्गमुपयुज्यते । लिङ्गोपलक्षितः परामर्शो हेतुरिति यावत् ।

3 अनुमितिचरमकारणत्वादिति । परामर्शेन स्वकार्येऽनुमितौ जननीयायां स्वोत्तरभाविपदार्थानपेक्षणात् परामर्शोऽनुमितिचरमकारणमित्युच्यते ।

जनयितव्यं, तदा प्रत्यभिज्ञायामप्येवमस्तु । तत्रापि तत्तेदंताविषयस्मृत्यनुभवाभ्यामेव प्रत्यभिज्ञाजन्यकार्यस्योत्पत्तिसंभवात् किमिति प्रत्यभिज्ञानमङ्गीकर्तव्यम् । तदिदं भेदज्ञाने सति विशिष्टव्यवहारो न भवतीति चेत्, भेदज्ञानाभावे सतीति किं न विशेष्यते ? अथ तत्तायाः संस्कारोपनीतायाः स्मृत्युपनीताया वा साकाङ्क्षत्वादिदंताधिकरणस्येन्द्रियसंनिकृष्टत्वात् प्रत्यभिज्ञानरूपं विशिष्टज्ञानं जायत इत्युच्यते, तर्हि प्रकृतेऽपि धूमस्योन्द्रियसंनिकृष्टत्वाद्व्याप्तेश्च स्मृत्युपनीतत्वाद्विशिष्टप्रत्ययोत्पत्तिरस्तु ।

ननु पर्वतस्येन्द्रियसंनिकृष्टत्वाद्वह्निमत्त्वस्य धूमस्मृत्युपनीतत्वात्साध्यवत्प्रत्ययोऽप्यैन्द्रियिक एवास्त्विति चेत्, एवमपि संभाव्येत, यदि धूतग्वह्निमत्त्वस्य स्मरणं स्यात् । किं तु व्याप्त्यवच्छेदकतया तत् । अत एव पदार्थस्य पृथक् स्मरणमङ्गीक्रियते ।

ननु यत्रेन्द्रियासंनिकृष्टं लिङ्गं, यत्रातीन्द्रियं वा, तत्र लिङ्गज्ञानस्येन्द्रियाजन्यत्वात् कथं लिङ्गपरामर्शः ? तमन्तरेण च कथमनुमितिरिति चेत्,

प्रत्यभिज्ञायामपीत्यर्थः । शङ्कते—**इदमिति** । भेदज्ञानाभावसहकृतसामग्र्या विशिष्टव्यवहारोऽस्त्विति परिहरति—**नेति** । अथेत्यादि चोद्यं तर्हीत्युत्तरं चातिरोहितार्थम् ।

अपिच योग्येन्द्रियेत्यादिनोक्तं दूषणमुद्धर्तुमुत्थापयति—**नन्विति** । **एवमपी**त्यादिकमारभ्य **किमिति पृथक् स्मरणमङ्गीकर्तव्य**मित्यन्तं वाक्यवृन्दमतिरोहितार्थम् ।

लिङ्गमिन्द्रियासंबद्धमतीन्द्रियं वा यत्र तत्र कथं परामर्शोत्पत्तिरिति शङ्कते—**नन्विति** । मा भूत्तत्र लिङ्गपरामर्श इत्यत आह—**तमिति** । शब्दादीत्यादिशब्देनानुमानादि गृह्यते । न चानवस्था, व्यासङ्गादिना विषयान्तरसंचारेण वा क्वचिद्विश्रान्त्युपपत्तेरिति दिक् । **विमर्शोत्पत्तिरिति** । [1]परामर्शोत्पत्तिरित्यर्थः । अत्रानुकूलं दृष्टान्तमाह—**यथेति** । प्रकृते संगमयति—**तथेति** ।

1 परामर्शोत्पत्तिरित्यर्थ इति । न्यायदर्शने विमर्शपदस्य संशयार्थकत्वेन प्रसिद्धतया, तस्यार्थस्य प्रकृतासंबद्धतयैवं व्याख्यातम् ।

शब्दादिना यत्र विमर्शोत्पत्तिः, तत्र तथाविधलिङ्गादनुमितिरस्तु; नान्यत्र। यद्वा यथा 'देवदत्तः कृष्णो गौरो वा' 'एतदारम्भकः परमाणुर्गुरुत्वाधिकरणं न वा' इति संदेहस्य बहिरिन्द्रियाजन्यत्वान्मनसो बहिरस्वातन्त्र्याच्च स्वप्नादिवत्सहकारिविशेषसहकृतं मनः कारणमङ्गीक्रियते, तथात्राप्यस्तु।

परामर्शसामग्र्या अप्यनुमितेः प्रतिबन्धकत्वादिति यदुक्तं तदपि न, अनुमित्यनुकूलतयैव तस्याः क्लृप्तत्वात्। एवं समूहालम्बनपक्षो निरस्तः, प्रत्यभिज्ञायामप्येवं वक्तुं सुकरत्वात्।

पूर्ववादिनोक्तदूषणमुद्धर्तुमनुवदति—**परामर्शेति**। **तस्या इति**। परामर्शसामग्र्या इत्यर्थः। ज्ञानद्वयपक्षेऽभिहितं दूषणं समूहालम्बनपक्षेऽप्यतिदिशति—**एवमिति**। तद्दूषणं स्मारयति—**प्रत्यभिज्ञायामिति**। [1]अयमाशयः—भेदज्ञानाभावसहकृतज्ञानद्वयस्योक्तरीत्यानुमितिजनकत्वाभावाल्लिङ्गपरामर्शस्यानुमितिजनकत्वमेष्टव्यम्। न च लिङ्गपरामर्शस्यानुमितिकारणत्वे तत्परिचायकतया लिङ्गमपि कारणं स्यादिति वाच्यम्। अतीतादिधूमादिज्ञानेऽप्यनुमितिदर्शनाल्लिङ्गं नानुमितिहेतुः, [2]व्यापारस्य पूर्ववर्तित्वस्य वा तत्राभावात्। यत्तु विद्यमानलिङ्गान्तरमेव तद्धेतुरिति; तन्न, तदा तस्यापरामर्शात्। परामर्शविषयलिङ्गस्य कारणताग्राहकप्रमाणाभावात। किंच भाविनि पक्षे यत्रैकं लिङ्गं तत्र लिङ्गान्तराभावः। न च तत्र वर्तमानमेव लिङ्गमिति वाच्यम्, [3]वर्तमानवह्न्यनुमानापत्तेः। न च भावि भूत वा धूमादि न लिङ्गम्; अपितु भावि-

1 लिङ्गस्यानुमितिकरणत्वमिति पक्षस्यापि पूर्वपक्ष्यभिप्रेततया प्राक् स्वयं व्याख्याततत्वेनेदानीं सिद्धान्तनिरूपणावसरे स्वयं लिङ्गस्यानुमितिहेतुत्वं दूषयति—अयमाशय इत्यादिना।

2 व्यापारस्य पूर्ववर्तित्वस्य वा तत्राभावादिति। कार्याव्यवहितपूर्ववर्तिस्वस्वव्यापारान्यतरकत्वं कारणत्वमित्याशयः। परामर्शोऽपि नातीतलिङ्गस्य व्यापारः, तज्जातीयकत्वाभावात्। विद्यमानलिङ्गविषयकप्रत्यक्षात्मकपरामर्श एव विषयविधया लिङ्गस्य हेतुत्वम्। तदा। अतीतलिङ्गपरामर्शकाले। तस्य। लिङ्गान्तरस्य।

3 वर्तमानवह्न्यनुमानापत्तेरिति। हेतुना स्वसमानकालीनमेव साध्यं सिध्यतीति भावः।

धूमप्रागभावः भूतलिङ्गध्वंसश्च वर्तमान एव; तत्प्रागभावतद्ध्वंसयोर्वह्निसमानदेशत्व-नियमादिति वाच्यम् । अतीतभाविदिनवृत्तितया निश्चिताद्वर्तमानतया संदिग्धाद्धूमादनुमितौ प्रागभावध्वंसौ न लिङ्गे, तयोः संदिग्धत्वात् । नापि धूमः, तस्या वर्तमानत्वात् । अपिच भूतभाविवर्तमानत्वाविषयात् 'पर्वते धूमः' इति ज्ञानात् यत्रानुमितिस्तत्र का गतिः? न च सर्वत्र प्रागभावाद्यन्यतमवत्त्वं धूमात्यन्ताभावाभाववत्त्वं वा लिङ्गमिति वाच्यम्, व्यर्थविशेषणत्वेन तयोरलिङ्गत्वात्; अन्यतमत्वाद्यज्ञानेऽपि धूमज्ञानादनुमित्युत्पत्तेश्च । किंच धूमप्रागभावादि तद्धीर्वा नानुमितिकारणम्, प्रागभावादीनां व्यर्थत्वादावश्यकधूमज्ञानादेवानुमित्युत्पत्तिसंभवात् । किंच लिङ्गमनुमितिहेतुरिति वदता वक्तव्यम्—किमनुमितिमात्रे लिङ्गं हेतुः? किं वा प्रमानुमितौ? नाद्यः, लिङ्गं विनापि धूलीपटलालिङ्गभ्रमेणानुमित्युत्पत्तेः । नापि द्वितीयः, तद्विशेषप्रमात्वाप्रमात्वाभ्यामेवानुमितेस्तथात्वात्; यत्सामान्ये यत्सामान्यं प्रयोजकं, तद्विशेषे तद्विशेषस्य प्रयोजकत्वात् । न च परामर्शस्य प्रमात्वं विद्यमानलिङ्गविषयत्वम्; तथाचायातं लिङ्गस्य प्रमानुमितिहेतुत्वमिति वाच्यम् । भाविना भूतेन वा यदा कदाचिद्विद्यमानेनापि लिङ्गेन परामर्शप्रमात्वसंभवान्नानुमितिपूर्वसमये तत्प्रमात्वानुरोधेन लिङ्गस्य सत्त्वं कारणत्वं वा । न च व्यापाराभावात्परामर्शः करणं न भवतीति वाच्यम् । यन्मते निर्व्यापारस्यापि करणत्वं, [1]तन्मते लिङ्गपरामर्शः करणमिति केचिदाहुः ।

अन्येतु—व्यापाराभावात्परामर्शो न करणम् । किंतु व्याप्तिज्ञानमेव करणम् । परामर्शो व्यापारः । ननु परामर्शस्यापि व्यापारवत्त्वेन करणत्वमिति चेत्; तत्र वक्तव्यम्—परामर्शस्य संस्कारो व्यापारः? तर्को वा? नाद्यः, परामर्शस्य चरमकारणत्वेन व्यापारोत्पादसमयेऽनुमित्युत्पादात् । नापि द्वितीयः । [2]व्याप्तिग्राहकस्य विषयपरिशोधकस्य वा तर्कस्य परामर्शजन्यत्वादिति संक्षेपः ।

1 तन्मते । व्यापारवत्त्वे सति कारणत्वं न करणत्वम्; अपितु फलायोगव्यवच्छिन्नं कारणं करणमिति वादिनां मत इत्यर्थः ।

2 व्याप्तिग्राहकस्य विषयपरिशोधकस्य वेति । तर्को द्विविधः—विषयपरिशोधको व्याप्तिग्राहकश्चेति । 'यद्ययं निर्वह्निः स्यात्तदा निर्धूमः स्यात्' इति विषयपरिशोधकस्तर्कः । 'धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यात्' इति व्याप्तिग्राहकस्तर्क इति बोध्यम् ।

लिङ्गोपहितलैङ्गिकज्ञानं यदिष्यते, तत् किं लिङ्गलिङ्गिनोः समानसंवित्संवेद्यत्वात्? उत, तन्निरूपणाधीननिरूपणत्वात्? नाद्यः। समानसंवित्संवेद्यत्वं किं लिङ्गाविषयकज्ञानाविषयत्वम्? उत लिङ्गविषयकज्ञानविषयत्वम्? आद्येऽयं प्रमाणार्थः स्यात्—'वह्निर्धूमविषयकज्ञानविषयः, धूमाविषयकज्ञानाविषयत्वात्' इति। अत्र यत्किंचिद्धूमविषयकज्ञानविषयत्वं वह्नेरङ्गीक्रियत इत्यर्थान्तरम्। अथैतद्धूमविषयकज्ञानविषयत्वम्, तथापि व्याप्तिज्ञानविषयत्वादर्थान्तरम्। अथैतद्धूमविषयैतदनुमितिविषयत्वं साध्यते,

एवमनुमितिं प्रति लिङ्गपरामर्शस्य कारणत्वे व्यवस्थापिते प्रसङ्गाद्वह्न्यनुमितेर्धूमविषयत्वं व्यवस्थापयिष्यन् प्रथमं तदङ्गतया पूर्वपक्षयति—**लिङ्गोपहितेति**। **तदिति**। लिङ्गोपहितलैङ्गिकज्ञानमित्यर्थः। **समानेति**। [1]समाना संवित् ज्ञानं तज्ज्ञायमानत्वादित्यर्थः। **उतेति**। लिङ्गज्ञानाधीनज्ञानत्वादित्यर्थः। लिङ्गलिङ्गिनोः समानसंवित्संवेद्यत्वं दुर्निरूपं विकल्पासहत्वादित्याह—**नाद्य इति**। [2]तत् प्रमाणं दर्शयति—**वह्निरिति**। ज्ञानविषय इति साध्ये सिद्धसाधनम्, वह्नेर्वह्निज्ञानविषयत्वात्। तदर्थमुक्तम्—**धूमविषयकेति**। धूमविषयज्ञानविषयत्वादित्युच्यमाने साध्यसमत्वेन संदिग्धानैकान्तिकता। तदर्थम्—**धूमाविषयकेति**। अत्र यत्किंचिद्धूमविषयकज्ञानविषयत्वं साध्यम्? किं वा एतद्धूमविषयकज्ञानविषयत्वम्? अथवा, एतद्धूमविषयैतदनुमितिविषयत्वम्? इति विकल्प्याद्यं कल्पं निराकरोति—**अत्रेति**। द्वितीयमुत्थापयति—**अथेति**। द्वितीयं दूषयति—**तथापीति**। तृतीयमुत्थापयति—**अथेति**। तृतीयं दूषयति—**तदेति**। **साध्याप्रसिद्धिरिति**। एतद्धूमविषयैतदनुमितिविषयत्वस्यैतदतिरिक्तस्थलेऽसिद्धत्वेन साध्याप्रसिद्धिः। तत्रैव प्रसिद्धौ सिद्धसाधनं स्यादिति भावः। हेत्वसिद्धिरित्युपलक्षणम्। [3]घटादौ व्यभिचारो दुर्वारो ज्ञेयः। असिद्धिमेव प्रतिपाद-

1 समाना या संवित् ज्ञानं तज्ज्ञायमानत्वादिति। समाना एका। तज्ज्ञायमानत्वात्। तद्विषयत्वादित्यर्थः। लिङ्गज्ञानाधीनज्ञानत्वादिति। लिङ्गज्ञानाधीनं ज्ञानं यस्य, तत्त्वादित्यर्थः

2 तत् प्रमाणं दर्शयतीति। अयं प्रमाणार्थः स्यादित्युक्तं प्रमाणं दर्शयतीत्यर्थः।

3 घटादौ व्यभिचारो दुर्वार इति। वह्निः धूमविषयकज्ञानविषयः, धूमाविषयकज्ञानाविषयत्वादित्यत्र घटे व्यभिचारः कथं संभवति? धूमाविषयकघटज्ञानविषये तस्मिन् धूमा-

तदा साध्याप्रसिद्धिः। हेत्वसिद्धिस्तु स्फुटैव, धूमाविषयकज्ञानस्य वह्निविषयत्वात्। नेतरः, साध्यसमत्वात्। न द्वितीयः। [1]तद्यदि तज्ज्ञानजन्यज्ञानविषयत्वं तदा व्यभिचारः। शब्दज्ञानजन्यज्ञानविषयत्वं भवति वाक्यर्थस्य; न तु शब्दविषयकज्ञानविषयत्वम्। तत्कथं लिङ्गोपहितलैङ्गिक ज्ञानमिति।

उच्यते—यद्विशेषणज्ञानजन्यं यद्विशिष्टज्ञानं भवति तत् तद्विषयकं भवतीति व्याप्तिः। ततो वह्न्यनुमितिरियं धूमविषया, वह्निविशेषणीभूत

यति—धूमेति। नेतर इति। लिङ्गविषयकज्ञानविषयत्वमित्यर्थः। उक्तनिरूपणाधीननिरूपणत्वाल्लिङ्गोपहितलैङ्गिकज्ञानमिति द्वितीयं दूषयति—न द्वितीय इति। तद्वतीति। धूमवतीत्यर्थः। तज्ज्ञानं धूमज्ञानं, तज्जन्यं यज्ज्ञानं वह्निज्ञानं, तद्विषयत्वं वह्नेरस्तीत्यर्थः। तज्ज्ञानजन्यं यज्ज्ञानं तत्तद्विषयकमिति व्याप्तेर्वाक्यार्थज्ञाने व्यभिचार इत्याह—तदेति। तत्र हेतुं दर्शयति—शब्दज्ञानेति। साध्याभावमुपपादयति—न त्विति। फलितमर्थं दर्शयति—तत्कथतिति।

सिद्धान्तमारभते—उच्यत इति। वक्ष्यमाणानुमानस्य व्याप्यत्वासिद्धिं परिहरन् सामान्यव्याप्तिं दर्शयति—यद्विशेषणेति। अनुमितेर्लिङ्गविषयत्वेऽनुमानं प्रमाणमित्याह—तत इति। सामान्यव्याप्तिप्रदर्शनानन्तरमित्यर्थः। वह्नीति। वह्निविशेषणीभूतो यो धूमस्तज्ज्ञानं तद्विषयकं, तज्जन्यत्वादित्यर्थः। सामान्यव्याप्त्यनुकूलदृष्टान्तमाह—प्रत्यक्षवदिति। 'दण्डी देवदत्तः' इति प्रत्यक्षवदित्यर्थः। सोपाधित्वान्नायं हेतुः साधुरित्यत आह—न चेति। शब्दादौ प्रत्यक्षत्वाभावात्साध्यव्यापकत्वभङ्ग इत्याह—शब्दादाविति। यदवादि पूर्ववादिना वाक्यार्थप्रतीतौ व्यभिचार

विषयकज्ञानविषयत्वसामान्याभावस्य हेतोरभावात् धूमाविषयकज्ञानाविषयत्वप्रतियोगिकाभाव एव हेतुर्विवक्षितः। धूमाविषयकपटज्ञानविषयत्वाभावस्य पटे सत्त्वात् व्यभिचार इति यद्युच्यते, तदा धूमाविषयकघटज्ञानविषयत्वप्रतियोगिकाभावस्य पक्षे वह्नौ सत्त्वात् कथं हेत्वसिद्धिरिति विभावनीयम्।

1 तद्वतीति टीकासंमतः पाठः

धूमज्ञानजन्यज्ञानत्वात्, प्रत्यक्षवत्। न च प्रत्यक्षत्वमेवोपाधिः, शब्दादौ साध्याव्यापकत्वात्। वाक्यर्थस्य न शब्दो विशेषणमिति न वाक्यार्थप्रतीतौ शब्दस्य भानम्। न च वाच्यम्—धूमस्वरूपस्यैव भानमस्तु; न तु व्याप्तिपक्षधर्मताविशिष्टस्येति; यतस्तादृशस्यापीह वह्निविशेषणत्वम्। अत एवानुमितौ द्विविधा कारणता लिङ्गज्ञानस्य—साधारणी विशेषणज्ञानत्वेन, असाधारणी लिङ्गज्ञानत्वेनेति। अत एव 'तस्माद्वह्निमान्' इति निगमनमपि घटत इत्यास्तामतिविस्तरः।

तदयं त्रिविधः—केवलान्वयी, केवलव्यतिरेकी, अन्वयव्यतिरेकी

इति, तत्रोत्तरमाह—वाक्यर्थस्येति। अत एवेति। अनुमितौ लिङ्गभानादेवेत्यर्थः। द्वैविध्यमेव दर्शयति—साधारणीति। विशेषणज्ञानत्वेन लिङ्गज्ञानस्य यदा कारणत्वं तदा साधारणी कारणतेत्याह—साधारणीति। यदा लिङ्गज्ञानत्वेनानुमितिं प्रति तस्य कारणत्वं तदा असाधारणी कारणतेत्याह—असाधारणीति। अत एवेति। अनुमितौ लिङ्गभानादेवेत्यर्थः।

तदयमिति। तत्; यस्मात्परामर्शोऽनुमितिहेतुस्तस्मादित्यर्थः। अयम्; परामर्शविषयीभूतो हेतुरित्यर्थः। त्रैविध्यं दर्शयति—केवलान्वयीति। केवलान्वयिधर्मसाध्यक इत्यर्थः। तत्रासद्विपक्षः केवलान्वयी। तथाहि—केवलान्वयिनोऽभिधेयत्वस्य विपक्षो न संभवति, विकल्पासहत्वात्। स किमभिधेयो वा? अनभिधेयो वा? आद्ये स्पष्टमेवाभिधेयत्वादेः केवलान्वयित्वम्। द्वितीयेऽनभिधेयपदेनैवाभिधेयत्वम्। उभयथापि व्याघातान्न विपक्षसंभवः।

ननु [1] पदाशक्यत्वेऽपि पदजन्यज्ञानविषयत्वेनाव्याघातादनभिधेय एव विपक्षः। 'अभिधेयत्वं कुतोऽपि व्यावृत्तं, धर्मत्वात् गोत्ववत्' इति चेत्; न। तदनुमानसाध्यस्य व्यावृत्तत्वस्याव्यावृत्तत्वं वा? व्यावृत्तत्वं वा? नाद्यः, व्यावृत्तत्वस्याव्यावृत्तत्वे व्यावृत्तत्वमेव

1 पदाशक्यत्वेऽपीति। अभिधा पदशक्तिः। अभिधेयत्वं पदशक्तिविषयत्वं, तस्याभावोऽप्यनभिधेयमिति पदेन ज्ञायते। न हि समासे एकार्थीभावः स्वीक्रियते, येनानभिधेयपदस्य तादृशार्थेऽभिधा स्यात्। अपितु, अभिधेयपदेन नञा च जनिताभ्यां पदार्थोपस्थितिभ्याममभिधेयभिन्नमिति बोधो भवतीति भावः। केवलान्वयिसाध्यकानुमानस्य विपक्षमनुमानेन साधयति—अभिधेयत्वमिति।

चेति । तत्रात्यन्ताभावाप्रतियोगी धर्मः केवलान्वयी । अयं केवलान्वयिन एव परं व्याप्यः । पक्षत्वावच्छेदकधर्मव्यापकः पक्षत्वावच्छेदकधर्मात्यन्ता-

केवलान्वयि, व्यावृत्तत्वस्य सर्वत्र सत्त्वात् । धर्मत्वहेतोर्व्यावृत्तत्वे[1] व्यभिचारात् । न द्वितीयः, व्यावृत्तत्वस्य व्यावृत्तत्वे यत एव व्यावृत्तं [2]तदेव केवलान्वयीति धर्मत्वस्यानैकान्तिकत्वात् । न च 'अभिधेयत्वमत्यन्ताभावप्रतियोगि, धर्मत्वात् शौक्ल्यवत्' इत्यतोऽपि विपक्षसंभव इति वाच्यम् । एतदनुमानसाध्यमत्यन्ताभावप्रतियोगित्वमत्यन्ताभावप्रतियोगि ? न वा ? नाद्यः, यन्निष्ठात्यन्ताभावप्रतियोग्यत्यन्ताभावप्रतियोगित्वं तदेव केवलान्वयि । तत्र तत्र धर्मत्वहेतोः सत्त्वादुक्तसाध्याभावाच्च व्यभिचारः । न द्वितीयः, अत्यन्ताभावाप्रतियोगित्वस्यैव केवलान्वयित्वादत्यन्ताभावप्रतियोगित्वे व्यभिचारात् । न च वाच्यम्—अत्यन्ताभावप्रतियोगित्वं [3]व्यावृत्तत्वं च नानेति । अनुगतप्रतीतिबलेन तयोः सिद्धेर्गोत्ववदित्यभिप्रेत्य यद्धर्मसाधको हेतुः केवलान्वयी तद्धर्मं निरूपयति—**तत्रेति** । हेतुत्रयमध्य इत्यर्थः । **अत्यन्ताभावेति** । अत्यन्ताभावाप्रतियोगित्वमित्यर्थः ।

ननु—आकाशात्यन्ताभावादौ लक्षणस्याव्याप्तिः; आकाशात्यन्ताभावस्याकाशरूपो योऽत्यन्ताभावस्तत्प्रतियोगित्वमाकाशात्यन्ताभावे वर्तत इति चेत्; न । [4]वृत्तिमत्त्वेनात्यन्ताभावो विशेषणीयः । एवं चाकाशस्यावृत्तिमत्त्वात्तदत्यन्ताभावो भवति केवलान्वयी ।

1 व्यावृत्तत्वे व्यभिचारादिति । प्रथमकल्पे साध्याभाववति साध्य एव धर्मत्वहेतोः सत्त्वात् व्यभिचार इत्यर्थः ।

2 तदेव केवलान्वयीति । व्यावृत्तत्वं यतो व्यावर्तते यत्र धर्मे नास्ति, स धर्मः केवलान्वयी, सर्वत्र वर्तमानस्यैव व्यावृत्तत्त्वाभाववत्त्वात् । तत्र च धर्मे धर्मत्वं हेतुर्वर्तत इति तत्र धर्मे व्यभिचार इति भावः ।

3 व्यावृत्तत्वं च नानेति । व्यावृत्तत्वं भेदप्रतियोगितावच्छेदकत्वम् । तच्च तदाश्रयव्यक्तिभेदेन भिन्नम् । पटनिष्ठं व्यावृत्तत्वं घटे नास्ति । पटनिष्ठे भेदप्रतियोगितावच्छेदकत्वे घटनिष्ठभेदप्रतियोगितावच्छेदकत्वं वर्तते । अतः पटनिष्ठव्यावृत्तत्वं घटात् व्यावृत्तं भवति । तावतापि घटस्य न केवलान्वयित्वम् । निर्घटे घटवद्भेदसत्त्वेन निर्घटनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य घटे सत्त्वात् । तथा च व्यावृत्तत्वस्य नानात्वे धर्मत्वहेतोर्व्यभिचारो न संभवतीति भावः ।

4 वृत्तिमत्त्वेनेति । वृत्तिः आधेयता । तद्वत्त्वेनेत्यर्थः ।

ननु-वृत्तिमद्विशेषणदानेऽप्युक्ताव्याप्तिस्तदवस्थैव, 'इदानीमाकाशम्' इति प्रत्यये-नाकाशस्यापि वृत्तिमत्त्वावगमादिति चेत्; अत्र केचित — [1]संयोगसमवायान्यतर-संबन्धेन वृत्तिमत्त्वस्य विवक्षितत्वान्नोक्तदोषः । न च-संयोगसंबन्धमादाय घटेऽतिव्याप्तिः संयोगसंबन्धेन वृत्तिमान् योऽत्यन्ताभावः पटात्यन्ताभावाभावः, तदप्रतियोगित्वं घटे वर्तते; समवायमादायापि संयोगात्यन्ताभावेऽव्याप्तिः, संयोगात्यन्ताभावाभावः संयोगरूपोऽत्यन्ताभावः; तत्प्रतियोगित्वमेव वर्तते, तदप्रतियोगित्वं नास्त्येवेत्यव्याप्तिरिति वाच्यम्। स्वसामानाधिकरण्यधीविरोधिनी वृत्तिरेव वृत्तिपदेन विवक्षिता । संयोगादिवृत्तिश्च तदत्यन्ताभवविरोधिनी न भवत्येव । संयोगस्याव्याप्यवृत्तित्वेन संयोगतदात्यन्ताभावयोः समानाधिकरणत्वान्नाव्याप्तिः । पटात्यन्ताभावाभावरूपपटवृत्तेर्घटसामानाधिकरण्यविरोधित्वाभावान्नातिव्याप्तिः । यत्तु — संयोगस्यापि केवलान्वयित्वापत्तिः; तदत्यन्ताभाववृत्तेस्तद्वृत्तिविरोधित्वाभावात्, वृक्षाद'वुभयोः समानाधिकरणत्वादिति । ततुच्छम् । कर्मादावधिकरणे तदत्यन्ताभाववृत्तेरपि तद्वृत्तिविरोधित्वात् । न च संयोगवृत्तिरपि [2] स्वावच्छेदेन स्वात्यन्ताभावविरोधिन्येव; तथाच तत्राव्याप्तिरेवेति वाच्यम्। स्वसामानाधिकरण्यधीविरोधित्व नास्ति, संयोगावच्छेदेन तदत्यन्ताभावासत्त्वेऽपि तत्सामानाधिकरण्यबुद्धेरप्रत्यूहत्वात् । [3] न चैवं मेयत्वादिवृत्तिविरोधिवृत्तेरप्रसिद्धेस्तत्राव्याप्तिरिति वाच्यम् । स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावप्रतियोगिनो घटादयः प्रसिद्धाः; तदन्यत्वस्य तत्रापि सत्त्वादिति संक्षेपः । आकाशात्यन्ताभाववदभिधेयत्वप्रमेयत्वादि केवलन्वयि ।

1 संयोगसमवायान्यतरसंबन्धेन वृत्तिमत्त्वस्य विवक्षितत्वादिति । आकाशस्य कालिकविशेषणतया कालवृत्तित्वेऽपि संयोगसमवायान्यतरसंबन्धेनावृत्तिमत्त्वात् नाकाशाभावेऽव्याप्तिरिति भावः ।

2 स्वावच्छेदेनेति । स्वावच्छेदकप्रदेशावच्छेदेनेत्यर्थः । तत्सामानाधिकरण्यबुद्धेरप्रत्यूहत्वादिति । संयोगवृत्तौ संयोगाभाववृत्तिविरोधित्वं नास्ति, संयोगाधिकरणे द्रव्ये संयोगानवच्छेदकप्रदेशावच्छेदेन संयोगाभावस्य वृत्तेः । अतः स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वं संयोगाभावे संभवति । संयोगाभावाधिकरणे सर्वत्र न संयोगवृत्तिः, कर्मादौ संयोगासत्त्वात् । अतः कर्माद्यन्तर्भावेण संयोगसामानाधिकरण्यं संयोगाभावे नास्तीति संयोगवृत्तिविरोधिवृत्तिमानेव संयोगाभाव इति न तत्प्रतियोगिनः संयोगस्य केवलान्वयित्वमिति भावः ।

3 न चैवं मेयत्वादीति । केवलान्वयिलक्षणे निविष्टं स्वपदमनुयोगिपरम् । अप्रतियोगित्वं यत्र स्थाप्यं तदेव स्वपदार्थ इत्याशयेन शङ्का । कुत्रापि मेयत्वसामानाधिकरण्याभावस्यासत्त्वेन तादृशी वृत्तिरप्रसिद्धेति भावः ।

ननु प्रमेयत्वं प्रमाविषयत्वम् । तच्च न केवलान्वयि, [1] प्रमायाः विषयत्वस्य चाननुगतत्वादिति चेत् ; न । प्रमात्वमेव हि परंपरासंबन्धात् घटादौ : प्रमेयत्वमनुगतं प्रमाजातीयविषयत्वं वेति नोक्तदोषः । 'प्रमेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि, न वा' इति संशयः 'घटः प्रमेयः' इति साध्यसिद्धिविरोधी भवत्येवेति न परोक्तदूषणावकाश इति दिक् ।

क्रमप्राप्तं व्यतिरेकिहेतुं प्रयोजनान्तरापेक्षया परित्यज्यान्वयव्यतिरेकिणं लक्षयति—**पक्षत्वावच्छेदकेति** । यावत्पक्षवृत्तिरित्यर्थः । धर्मोऽन्वयव्यतिरेकीत्युक्ते प्रमेयत्वादावतिव्याप्तिः । तदर्थं विपक्षव्यावृत्त इति । एतावति कृते व्यतिरेकिण्यतिव्याप्तिः । तदर्थं पक्षत्वेत्यादि साध्यवद्वृत्तिरित्यन्तम् । केवलव्यतिरेकिणं लक्षयति—**पक्षत्वावच्छेदकेति** । असत्सपक्षत्वमाह—**पक्षत्वावच्छेदकधर्मात्यन्ताभावेति** । 'साध्यसमव्याप्तो धर्मः केवलव्यतिरेकी'इत्युक्ते समव्याप्तोपाधावतिव्याप्तिः । तत्परिहारार्थं पक्षत्वावच्छेदकधर्मात्यन्ताभावासमानधिकरण इति । समव्याप्तोपाधेः पक्षत्वावच्छेदकधर्मात्यन्ताभाववति सपक्षे साध्येन सह व्याप्तत्वदिति भावः । यद्वा 'विशेषोऽभिधेयः, प्रमेयत्वात्' इति हेतावतिव्याप्तिवारणाय तद्विशेषणम् । पक्षत्वावच्छेदकधर्मात्यन्ताभावासमानाधिकरणेत्युक्तेऽन्वयव्यतिरेकिणि धूमवत्त्वादावतिव्याप्तिः, पक्षत्वावच्छेदकधर्मात्यन्ताभाववति विपक्षे धूमादेरसत्त्वात् । तत्परिहारार्थं साध्यसमव्याप्त इति । यद्वा केवलव्यतिरेकी

1 प्रमाया विषयत्वस्य चाननुगतत्वादिति । प्रमोपादानं दृष्टान्तार्थम् । यथा प्रमाव्यक्तिरननुगता, तथा विषयस्वरूपस्य विषयत्वस्यापि विषयभेदेन भिन्नत्वादित्यर्थः । तथाच चालिनीन्यायेन सर्वस्याप्यत्यन्ताभावप्रतियोगित्वमेव संपन्नमित्यव्याप्तिरिति भावः । परस्परासंबन्धात् स्वाश्रयविषयत्वसंबन्धात् । न च प्रमात्वस्यापि प्रकारविशेषघटितस्वरूपत्वात् भिन्नभिन्नत्वमेवेति पुनरननुगम इति शङ्क्यम् , स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वस्वप्रतियोगिनिष्ठत्वस्वावच्छिन्नत्वैतत् त्रितयसंबन्धेन संबन्धविशिष्टान्यप्रकारताशून्यत्वस्य सर्वानुगतस्य हेतुग्रन्थे गदाधरभट्टाचार्योक्तप्रमात्वस्य संभवात् । ईश्वरज्ञानावृत्तिविषयताशून्यत्वं सर्वानुगतं प्रमात्वमित्यपि केचित् । प्रमाजातीयविषयत्वमिति । प्रमात्वाश्रयविषयत्वमित्यर्थः । विषयत्वस्याननुगतत्वेपि विषयतात्वस्यानुगतत्वादत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वलक्षणं केवलान्वयित्वं प्रमेयस्य संभवतीति भावः । ननु साध्यसंदेहः पक्षतेति मते केवलान्वयिसाध्यकस्थलेऽनुमितिरेव न संभवति । साध्याभावरूपकोट्यप्रसिध्या पक्षे साध्यतदभावकोटिकसंदेहासंभवादित्याशङ्कायामाह—प्रमेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगीति । विरोधीति । प्रतिबन्धकतायां समानविशेष्यकत्वस्याप्रयोजकत्वमिति भावः । दशाविशेषे । व्यतिरेकसहचारेण व्याप्तिग्रहकाले ।

भाववत्साध्यवद्वृत्तिर्विपक्षव्यावृत्तो धर्मोऽन्वयव्यतिरेकी । पक्षत्वावच्छेदक-धर्मव्यापकः पक्षत्वावच्छेदकधर्मात्यन्ताभावासमानाधिकरणः साध्यसम-व्याप्तो धर्मः केवलव्यतिरेकीत्युच्यते ।

## इति परामर्शवादः

त्वसत्सपक्षः । यत्र व्यतिरेकसहचारेण व्याप्तिग्रहः, स हेतुः केवलव्यतिरेकी । दशा-विशेषे धूमादेः केवलव्यतिरेकित्वमिष्टमेवेति दिक् ।

अथ — व्यतिरेक्यनुमानं न भवत्येव, व्याप्तिसपक्षधर्मताज्ञानस्यानुमितिकरणत्वात् ; प्रकृते [1]तदभावात् । ननु व्याप्तिपक्षधर्मत्वं साध्याभावव्यापकाभावप्रतियोगित्वं च द्वयमप्यनुमितिप्रयोजकमिति चेत् ; न, अननुगमात् । न चान्यतरत्वं तथा, प्रत्यक्षाद्यन्य-तमत्वेन चतुर्णामेकजातीयप्रमाजनकत्वसंभवादेकप्रमाणपरिशेषापत्तेः । न च वाच्यं तृणा-रणिमणिन्यायेनानुमितिविशेषे तत्कारणत्वमिति, व्यतिरेकिसाध्येऽनुमितित्वासिद्धेः, अनु-मितिप्रयोजकसामान्यसामग्र्यभावादुभयसिद्धकारणस्याभावात्[2] । अथ साध्याभावव्याप-काभावप्रतियोगित्वमेवानुमितिप्रयोजकमिति चेत् ; न, गौरवात् केवलान्वयिन्यसंभवाच्च । न च — साध्याभावव्यापकाभावप्रतियोगित्वेन साध्यव्याप्यत्वमनुमेयम् ; एवं सति व्यतिरेक-व्याप्त्यान्वयव्याप्तिमनुमाय यत्रानुमितिः स एव व्यतिरेकीत्युच्यत इति वाच्यम् । अन्वय-व्याप्तेर्गमकत्वे व्यतिरेकव्याप्त्युपन्यासस्यार्थान्तरत्वापत्तेः । अन्वयव्याप्त्यनुकूलतया च व्यतिरेकव्याप्त्युपन्यासेऽन्वयव्याप्तिमनुपन्यस्य व्यतिरेकव्याप्त्युपन्यासस्याप्यर्थान्तरत्वादिति सङ्क्षेपः ।[3]

अत्रोच्यते — निरुपाधिव्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते । न च वह्नि-धूमयोः सहचारेण कृतकत्वानित्यत्वयोर्व्याप्तिर्गृह्यताम्, [4]अविशेषादिति वाच्यम् ।

1 तदभावादिति । पक्षधर्मे व्याप्तेरभावेन व्याप्तिविशिष्टपक्षधर्मताज्ञानाभावादित्यर्थः । व्याप्तिपक्षधर्मत्वमिति । व्याप्तिविशिष्टपक्षधर्मत्वमित्यर्थः ।

2 उभयसिद्धकारणस्याभावादिति । 'वह्निमान्' इत्यादौ क्लृप्तस्य व्याप्तिविशिष्टवैशिष्ट्या-वगाहिपरामर्शस्याभावादित्यर्थः । असंभवाच्चेति । साध्याभावाप्रसिद्धेरिति भावः ।

3 संक्षेप इति । पूर्वपक्षसंक्षेप इत्यर्थः ।

4 अविशेषादिति । साध्यहेतुभिन्नयोः साध्याभावहेत्वभावयोः सहचारेण साध्यहेत्वोर्व्या-प्तिर्गृह्यते चेत्, कृतकत्वनित्यत्वभिन्नयोर्वह्निधूमयोः सहचारादपि कृतकत्वानित्यत्वयोर्व्याप्तिर्गृह्येत, अन्यत्वाविशेषादित्यर्थः ।

प्रतियोग्यनुयोगिभावस्य नियामकत्वात्, अन्वयव्यतिरेकिवत्। अथैवम्—व्याप्तिग्रहसमय एव पृथिवी जलादिभिन्नत्वेन प्रतीयते, व्याप्तेर्नियतसामानाधिकरण्यरूपत्वात्; ततश्च सिद्धसाधनमिति चेत्; न, [1]गन्धवत्त्वावच्छेदेनेतरभेदस्य साध्यत्वान्नोक्तदोष इति कश्चित्। अत एवोदयनः पक्षतावच्छेदकस्य न हेतुत्वमनुमेने। [2]'पृथिवीत्वमितरभेदव्याप्यम्' इति प्रतीतावपि 'सर्वा पृथिवी इतरभिन्ना' इति पृथिवीविशेष्यकबुद्धेर्व्यतिरेके साध्यत्वाच्च। अथवा व्यतिरेकव्याप्तेरेवान्वये गम्यगमकभावः, साध्याभावव्यापकसाधनाभावाभावेन साधनेन पक्षे साध्याभावाभावस्य साध्यस्य साधनाव्यापकाभावेन व्याप्याभावावश्यंभावात्। [3]अथैवमपि—'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्' इत्यादौ व्यतिरेकिण्यनुमितिर्न स्यात्, तत्कारणीभूतलिङ्गपरामर्शाभावात्; अन्यथा त्वननुगम इति चेत्; न, अनुमितिमात्रे व्याप्तिज्ञानस्य प्रयोजकत्वात्। न चातिप्रसङ्ग इति वाच्यम्, अनुमितिसामान्यसामग्र्यां सत्यामनुमितिविशेषसामग्रीविरहादनुमितेरनुदयाद्विशेषसामग्रीसहितायाः सामान्यसामग्र्याः कार्यजनकत्वनियमात्।

[4]स्यादेतत्। 'पृथिवी इतरेभ्यो भिद्यते, पृथिवीत्वात्' इति व्यतिरेकिणि साध्यं प्रसिद्धम्? अप्रसिद्धं वा? आद्ये, यत्र साध्यं प्रसिद्धं तत्र हेतोः सत्त्वेऽन्वयित्वम्। हेतोरसत्त्वेऽसाधारण्यम्। द्वितीये, न व्यतिरेकिनिरूपणं, न वा संदेहघटितपक्षत्वं, न वा लिङ्गजन्यसाध्यविशिष्टज्ञानम्; [5]तेषां साध्यज्ञानजन्यत्वात्। अपिच

1 गन्धवत्त्वावच्छेदेनेतरभेदस्य साध्यत्वादिति। एवंच हेतौ पृथिवीत्वे साध्यसामानाधिकरण्यज्ञानेऽपि पक्षतावच्छेदके गन्धवत्त्वे साध्यसामानाधिकरण्यं न ज्ञातमिति न सिद्धसाधनदोष इति भावः।

2 समानविशेष्यकसमानप्रकारकसिद्धेरेव प्रतिबन्धकत्वे पृथिवीत्वस्य पक्षतावच्छेदकत्वेऽपि न सिद्धसाधनमित्याह—पृथिवीत्वमिति।

3 केवलव्यतिरेकिण्यन्वयव्याप्तिरनुमितिप्रयोजिकेति मते विशिष्टपरामर्शसंभवेऽपि, अथवेत्यादिनानुपदमुक्ते तत्र व्यतिरेकव्याप्तिरेवानुमितिप्रयोजिकेति पक्षे परामर्शाभावेनानुमितेरनुपपत्तिं शङ्कते—अथैवमपीति।

4 'स्यादेतत्। पृथिवी इतरेभ्यो भिद्यते' इत्यादिः, 'वागाडम्बरमिति पूर्वपक्षसंक्षेपः' इत्यन्तो ग्रन्थः साध्यप्रसिद्ध्यप्रसिद्धिविकल्पनेन केवलव्यतिकिनिरूपणासंभवाक्षेपप्रतिपादकोऽवसेयः।

5 तेषां साध्यज्ञानजन्यत्वादिति। साध्याभावबुद्धौ प्रतियोगिज्ञानविधया साध्यज्ञानमपेक्षितम्। तस्मात् साध्याभावघटितव्यतिरेकव्याप्तिज्ञानं साध्यज्ञानजन्यम्। साध्यविशिष्टानुमितौ

'पृथिवी इतरेभ्यो भिद्यते' इति वदता वक्तव्यम्—इतरभेदः स्वरूपं वा? जलादिनिष्ठात्यन्ताभावप्रतियोगिधर्मत्वरूपवैधर्म्यं वा? अन्योन्याभावो वा? नाद्यः, अधिकरणप्रतियोगिनोः पृथिवीजलाद्योस्तवदनुमानात्प्रागेव सिद्धेः। न द्वितीयः। तद्धि पृथिवीत्वादिकम्। तच्च सिद्धमेव। जलादिसमवायान्तनिष्ठाऽत्यन्ताभावप्रतियोगित्वेन पृथिवीत्वं न सिद्धमिति नोक्तदोष इति चेत्; न। जलादौ पृथिवीत्वात्यन्ताभावग्रहदशायां पृथिवीत्वेऽपि तत्प्रतियोगित्वग्रहादुक्तदोषो दुर्वारः। अस्तु तर्हि तृतीयः पक्षः। अन्योन्याभावस्य भेदः साध्यः संभवति, अन्योन्याभावग्रहस्य वैधर्म्यज्ञानसाध्यत्वादिति चेत्; न। किं जलादित्रयोदशप्रतियोगिकान्योन्याभावः साध्यः? किं वा जलादिप्रत्येकप्रतियोगिकान्योन्याभावः? नाद्यः, तस्याप्रसिद्धेः। [1]न द्वितीयः, असाधारण्यप्रसङ्गात्। न च—'पृथिवी तेजोभिन्ना, न वा' इति संशयेन तेजोभिन्नत्वे ज्ञाते, 'पृथिवी तेजोभिन्ना सती जलादिद्वादशभिन्ना, न वा' इति संशयेन तेजोभिन्नत्वे सति जलादिद्वादशभिन्नत्वं प्रसिद्धम्; तदेव साध्यम्। एकविशेषणविशिष्टे विशेषणान्तरबुद्धेरेव विशिष्टवैशिष्ट्यज्ञानत्वात्; एवंच संशयप्रसिद्धं साध्यमादाय व्यतिरेकिणो निरूपणीया इति वाच्यम्। साध्यनिश्चये हि साध्यव्यतिरेकनिश्चयो भवति। साध्यसंदेहे सति [2]साध्य व्यतिरेकसंदेहस्य वज्रलेपत्वम्। संशयरूपा साध्यप्रसिद्धिरिति वागाडम्बरमात्रमिति पूर्वपक्षसंक्षेपः।

अत्रोच्यते—घटादावेवेतरसकलभेदस्य प्रत्यक्षतः सिद्धिः, 'घटो न जलादिः' इति प्रतीतेः। न चैवं घटस्यापि पक्षत्वादंशतः सिद्धसाधनमिति वाच्यम्, 'सर्वा पृथिवी इतरभिन्ना' इत्युद्देश्यप्रतीतेरभावात्। [3]पक्षतावच्छेदकनानात्वे हि तत्।

विशेषणज्ञानविधया, साध्यसंशये साधारणादिधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन वा, विशेषणज्ञानविधया वा, साध्यज्ञानं जनकमिति भावः।

1 न द्वितीयः, असाधारण्यप्रसङ्गदिति। जलादिप्रत्येकभेदरूपसाध्याधिकरणे तेजःप्रभृतौ पृथिवीत्वहेतोरभावादिति भावः।

2 साध्यव्यतिरेकसंदेहस्य वज्रलेपत्वमिति। एवंच साध्याभावनिश्चयाभावेन साध्याभावघटितव्यतिरेकव्याप्तिनिश्चयासंभवेनानुमितेरनुपपत्तिरिति भावः।

3 पक्षतावच्छेदकनानात्वे हि तदिति। यत्र पक्षतावच्छेदकं नाना तत्रांशतः सिद्धसाधनं दोषः। यथा—'वाङ्मनसे अनित्ये' इत्यत्रानुगतपक्षतावच्छेदकाभावात् 'वागनित्या' इत्यंशतः साध्यसिद्धिरप्यनुमितिविरोधिनी 'पृथिवी इतरेभ्यो भिद्यते' इत्यत्र तु पृथिवीत्वमेवानुगतं पक्षतावच्छेदकमिति नात्र घटांशतः सिद्धसाधनं दोष इति भावः। संदेहसिषाधयिषयोरभावा-

अत एव 'अनित्ये वाङ्मनसे कार्यत्वात्' इत्यत्र 'अनित्या वाक्' इति बुद्धेरुद्देश्यायाः प्रसिद्धत्वादंशतः सिद्धसाधनम् । अन्यथानुमानमात्रोच्छेदः, पक्षस्य सिद्धस्यैव साध्यत्वात् । ननु घटः कथं पक्षः? साध्यनिश्चयेन संदेहसिषाधयिषयोरभावादिति चेत्; न 'सर्वा पृथिवी, इतरभिन्ना, न वा' इति संशयस्य तत्प्रकारकसिषाधयिषायाश्च सामान्यतो घटविषयत्वात् । घटत्वेनेतरभेददर्शनं सिद्धिर्वा । तेन रूपेण संशयसिषाधयिषे न भवतः । पृथिवीत्वेन ते भवतः । 'धूमवान्वह्निमान्' इति धूमवत्त्वेन वह्निमत्त्वनिश्चयेऽपि पर्वते वह्निसंशयवत् । अथवा सर्वत्वेन रूपेण न पक्षता, सर्वत्राविप्रतिपत्तेः, घटाद्येकदेशे इतरभेदस्य प्रत्यक्षसिद्धत्वात् । तथाचैकदेशविप्रतिपत्तौ सामान्यत इतरभेदसाधनेऽर्थान्तरम् । किंतु सामान्येन पृथिवीत्वेन यावदेव विप्रतिपत्तिविषयस्तावत एव पक्षता ।

नन्वेवम्—'पृथिवी इतरभिन्ना, पृथिवीत्वात्, घटवत्' इत्यन्वयिनैवेतरेतरसिद्धेः किं व्यतिरेकिणा ? [1]घटसाधारणपक्षत्वेऽप्यभेदानुमानवत्पक्षस्यापि दृष्टान्तत्वाविरोधात् । पक्षान्यत्वं हि न तन्त्रं दृष्टान्तत्वे, विपक्षस्यापि दृष्टान्तत्वापत्तेः । किंतु साध्यवत्तया निश्चितत्वं प्रयोजकम् । न च पृथिवीत्वाग्रहे यत्र साध्यं पूर्वं गृहीतं पश्चात् स्मर्यते, तत्र हेतुसाध्यसामानाधिकरण्याग्रहाद्व्यतिरेक्यवतार इति वाच्यम्; हेतोरेव पक्षतावच्छेदकत्वात् । घटे पृथिवीत्वग्रहदशायामितरभेदसामानाधिकरण्यग्रहावश्यंभाव इति चेत्; न, अन्वयितुल्यतया व्यतिरेकिणोऽपि सामर्थ्यावधारणात् । अन्वयाप्रतिसंधानदशायां व्यतिरेक्युपन्यासस्यापर्यनुयोज्यत्वात् । तदुक्तं न्यायकुसुमाञ्जलावुदयनेन—"आस्तां तावत्सुहृदुपदेशः । केवलव्यतिरेकित्वं तावन्निर्व्यूढम्" इति ।

व्यतिरेक्यनुमानसिद्धावर्थापत्तिर्न मानान्तरम्, व्यतिरेक्यनुमानेनैव [2]तदर्थसिद्धेः । तथाहि—स्वकार्योत्पत्तेः पूर्वक्षणकारणानि सकलसहकारिसमेतानि सकल-

दिति । संदिग्धसाध्यधर्मत्वस्य, सिषाधयिषितसाध्यधर्मत्वस्य वा पक्षत्वादिति भावः । सामान्यतो घटविषयत्वादिति । पृथिवीत्वसामान्यधर्मावच्छिन्ना या घटनिष्ठविषयता, तन्निरूपकत्वादित्यर्थः ।

1 पक्षभिन्नस्यैव दृष्टान्तत्वं दृष्टमिति पक्षतावच्छेदकीभूतपृथिवीत्वाक्रान्तस्य घटस्य दृष्टान्तत्वं न घटत इत्याशङ्क्याह—घटसाधारणेति ।

2 तदर्थसिद्धेरिति । अर्थापत्तिप्रमाणप्रयोजनसिद्धेरित्यर्थः ।

## न्यायनिरूपणम् ।

तत्तदनुमितिकारणीभूतज्ञानाविषयाविषयकतत्तदनुमितिकारणीभूतज्ञानविषयत्वव्यापकविषयताप्रतियोगिकज्ञानजनकत्वे सत्यनुमित्युत्पत्तिपरं वाक्यं न्यायः ।

प्रतिबन्धकशून्यानि चानन्तरमेव कार्योत्पादकानि । यानि पुनरेवं न भवन्ति, न तान्यनन्तरकार्योत्पादकानि, यथा केवलतन्तवो मणिप्रतिबद्धवह्निर्वा ।

नन्वन्वयाभावान्नैतदनुमानमिति चेत्; न, केवलान्वयिनोऽपि व्यतिरेकाभावेन प्रमाणान्तरत्वापातादिति स्पष्टम् । अपिच प्रत्यक्षादिभेदानां कचिद्वैधर्म्येण भेदात्प्रमाणान्तरत्वप्रसङ्गः । तथाहि—सविकल्पकनिर्विकल्पकभेदेन योग्ययोगिप्रत्यक्षभेदेन वा द्विविधं प्रत्यक्षम् । [1] कार्यकारणानुभयात्मकत्वेन त्रिविधमनुमानम् । दृष्टादृष्टार्थभेदेन द्विविध आगमः । [2]तस्मादविनाभावबलेनार्थप्रतिपादकत्वादर्थापत्तिरनुमानमिति दिक् ।

इति परामर्शवादः ।

## न्यायनिरूपणम्

'आत्मा इतरेभ्यो भिद्यते, आत्मत्वात् । न यदेवं न तदेवम् । यथा जलादि'; 'क्षित्यादिकं सकर्तृकं, कार्यत्वात् घटवत्' इत्याद्यनुमानं न्यायसाध्यं तदवयवसाध्यं वेति न्यायस्तदवयवाश्च निरूपणीया इत्यभिप्रेत्य प्रथमं न्यायलक्षणमाह—तत्तदनुमितीति । तत्तदनुमितिकारणीभूतं यत् ज्ञानं लिङ्गपरामर्शः, तदविषयः अविषयो यस्याः । तत्तदनुमितेः कारणीभूतं यज्ज्ञानं तद्विषयत्वेत्यादि विषयताविशेषणम् । [3]तत्प्रतियोगिकं यत् ज्ञानं तद्धेतुत्वमित्यर्थः । तथाचानुमितिचरमकारण-

1 कार्यकारणानुभयात्मकत्वेनेति । "अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च" इति न्यायसूत्रम् । तत्र पूर्वं कारणं, शेषः कार्यं, सामान्यतो दृष्टं कार्यकारणभिन्नमित्यर्थस्वीकारादिति भावः ।

2 अविनाभावबलेन । व्याप्तिबलेन ।

3 तत्प्रतियोगिकं यत् ज्ञानमिति । तादृशविषयतानिरूपकं ज्ञानमित्यर्थः । मूले तत्तदनुमितिकारणाविषयकेत्यनेनानुमितिकारणानतिरिक्तविषयत्वं लब्धम् । अनुमितिकारणीभूतज्ञान-

लिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकं वाक्यं न्याय इति पर्यवसन्नोऽर्थः । अनुमित्युत्पत्तौ परामर्शोत्तरभाविज्ञानान्तरानपेक्षत्वमेवानुमितिचरमकारणत्वम् । [1]प्रयोजकत्वं नाम जनकज्ञानजनकत्वम् । शाब्दज्ञानपदं चरमकारणपरामर्शान्यूनविषयज्ञानपरम् । अत्र पक्षे शाब्दज्ञानजनकवाक्यं न्याय इत्युक्ते वह्निव्याप्यवानित्याप्तवाक्येऽतिव्याप्तिः । तदर्थमनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकेति ।

ननु तथापि प्रयोजकपदस्थाने जनकपदं प्रक्षिप्य लक्षणं क्रियताम्, आवश्यकत्वात् लाघवाच्चेति चेत्; न । तथा लक्षणकरणेऽसंभवः । [2]तज्जनकविशिष्टवैशिष्ट्यावगाहिज्ञानजनकं वाक्यं न संभवति, तस्य ज्ञानस्य मानसत्वात् । अतस्तदुपात्तम् । तदर्थस्तूक्त एव । संस्कारद्वारा परामर्शजनके वह्निव्याप्यवानित्याप्तवाक्येऽतिव्याप्तिवारणाय ज्ञानेति । तज्जन्यज्ञानस्यापि यत्किंचिज्जनकज्ञानजनकत्वसंभवादुक्तदोषतादवस्थ्यमित्यत उक्तम्—अनुमितिचरमकारणेति । [3]लिङ्गपरामर्शपदं च स्वरूपकथनपरम् । वह्निव्याप्यवानयमिति वाक्यावयवेऽतिव्याप्तिवारणाय शाब्दज्ञानपदम् । तदर्थस्तूक्त एव । यदि चैवमसाधकताप्रयोगे न्यूनविषयतया व्याप्तिशङ्का, तदा वाक्यपदमेव वा

विषयत्वव्यापकविषयताप्रतियोगिकेत्यनेन तादृशज्ञानन्यूनविषयकत्वं लब्धम् । पर्यवसितलक्षणमाह—तथाचेति ।

1 प्रयोजकत्वं नाम जनकज्ञानजनकत्वमिति । अनुमितौ व्याप्तिविशिष्टवैशिष्ट्यज्ञानं कारणम् । न तु पक्षे व्याप्याभिन्नधूमवदभेदावगाहि ज्ञानम् । तच्च मानसम् । तत्र च विशेषणतावच्छेदकप्रकारकनिर्णयः कारणम् । स च निर्णयो न्यायवाक्यजन्यशाब्दबोधेन जायते । तथाच परामर्शजनकविशेषणतावच्छेदकप्रकारकनिर्णयजनकबोधजनकत्वं न्याये वर्तत इति लक्षणसमन्वयः ।

2 तज्जनकविशिष्टवैशिष्ट्यावगाहिज्ञानजनकं न भवतीति । अनुमितिजनकं यत् विशिष्टवैशिष्ट्यज्ञानं, व्याप्त्यवच्छिन्नधर्मप्रकारतानिरूपितपक्षनिष्ठविशेष्यताशालि ज्ञानं, तज्जनकं न भवतीत्यर्थः । नामार्थयोर्भेदसंबन्धेनानन्वयव्युत्पत्तेर्वह्निव्याप्यधूमवानयं पर्वत इत्यादिवाक्यात् वह्निव्याप्याभिन्नधूमवदभिन्नः पर्वत इत्येव शाब्दबोधो जायते । तत्र व्याप्तेर्धूमे, धूमस्य पर्वते च न प्रकारतया भानं निर्वहतीति भावः ।

तदुपात्तमिति । प्रयोजकत्वमुपात्तमित्यर्थः । तदर्थस्तूक्त एवेति । जनकज्ञानजनकत्वमित्यर्थ उक्त इत्यर्थः ।

3 लिङ्गपरामर्शपदं स्वरूपकथनपरमिति । लिङ्गपरामर्शव्यतिरिक्तस्य कस्याप्यनुमितिचरमकारणत्वाभावादिति भावः । तदर्थस्तूक्त एवेति । शाब्दज्ञानपदं चरमकारणपरामर्शान्यूनविषयज्ञानपरमिति ग्रन्थेनेति शेषः । आत्मादावतिव्याप्तिवारणायेति । शाब्दज्ञाने समवायिकारणत्वादतिव्याप्तिरित्याशयः ।

**एतादृशवाक्यजन्यज्ञानजनकज्ञानजनकं वाक्यमवयवः ।**

**तत्रोपनयोदाहरणरूपमवयवद्वयमित्येके । प्रतिज्ञाहेतूदाहरणरूपम-**

महावाक्यपरमित्याहुः । आत्मादावतिव्याप्तिवारणाय वाक्यपदमिति दिक् । यत्तु [1]समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न्याय इति ; तन्न, तत्रैव वाक्येऽतिव्याप्तेरिति ।

इति न्यायनिरूपणम् ।

## अवयवनिरूपणम्

न्यायलक्षणानन्तरमवयवलक्षणमाह—**एतादृशवाक्येति** । एतादृशवाक्यजन्यज्ञानं न्यायजन्यज्ञानम् । तज्जनकं ज्ञानं शाब्दज्ञानम् । तज्जनकम् । एवंच [2]न्यायजन्यज्ञानजनकशाब्दज्ञानजनकवाक्यमिति पर्यवसन्नार्थः । शाब्दज्ञानजनकवाक्यमवयव इत्युक्ते न्यायबहिर्भूतवाक्येऽतिव्याप्तिः, तस्यापि शाब्दज्ञानजनकत्वात् ; तत्परिहारार्थं न्यायजन्यज्ञानजनकेति । नन्ववयववाक्यवेऽतिप्रसक्तमिदं लक्षणमिति चेत् ; न । अवयववाक्यस्य न्यायजन्यज्ञानजनकत्वेन [3]एतादृशशाब्दज्ञानजनकत्वाभावान्नातिव्याप्तिः । अत एव कण्टकोद्धाररूपे वाक्येऽपि नातिव्याप्तिः, तस्यापि न्यायजन्यज्ञानजनकव्याप्तिज्ञानादिजनकयोग्यताज्ञानादिजनकत्वेन तज्जनकाजनकत्वात् । शाब्दपदं स्पष्टार्थम् । आत्मादावतिव्याप्तिवारणाय वाक्यपदमिति संक्षेपः ।

1 समस्तरूपोपपन्नलिङ्गप्रतिपादकं वाक्यं न्याय इति । गमकतौपयिकरूपाणि पक्षसत्त्वं, सपक्षसत्त्वं, विपक्षासत्त्वम् , अबाधितत्वम्, असत्प्रतिपक्षितत्वं चेति पञ्च रूपाणि । तद्विशिष्टलिङ्गविषयकबोधजनकवाक्यत्वमित्यर्थः । उपनयेन पक्षसत्त्वं साध्यवदन्यावृत्तित्वे सति साध्यसामानाधिकरण्यरूपव्याप्तिबोधकेनोदाहरणेन विपक्षसत्त्वं सपक्षसत्वोभयं, निगमनेनाबाधितत्वासत्प्रतिपक्षितत्वोभयं च लिङ्गस्य बोध्यत इति न्याये निरुक्तलक्षणसमन्वयः । तत्रैव वाक्येऽतिव्याप्तेरिति । समस्तरूपोपपन्नं लिङ्गमिति वाक्ये न्यायलक्षणातिव्याप्तेरित्यर्थः ।

2 न्यायजन्यज्ञानजनकशाब्दज्ञानजनकवाक्यमिति । अवयवसमुदायात्मकन्यायजन्यज्ञाने महावाक्यार्थज्ञानेऽवान्तरवाक्यार्थज्ञानविधया कारणमवयवजन्यं ज्ञानमिति तज्जनकत्वमादायावयवे लक्षणसमन्वयः ।

3 एतादृशशाब्दज्ञानजनकत्वाभावादिति । ज्ञानजनकेत्यनेन साक्षात्कारणत्वमेव विवक्षितं, न प्रयोजकत्वमित्यवयवैकदेशजन्यज्ञानस्य न्यायजन्यज्ञानप्रयोजकत्वेऽपि तत्र नातिव्याप्तिरिति भावः । अत एव । साक्षाज्जनकत्वविवक्षणादेव । कण्टकोद्धाररूप इति । नायमसिद्धः, नापि विरुद्ध इति स्वपक्षे संभावितदोषपरिहारपरे वाक्य इत्यर्थः ।

वयवत्रयमित्यन्ये । प्रतिज्ञादिपञ्चकमित्यपरे । संशयजिज्ञासाशक्यप्राप्ति-प्रयोजनसंशयव्युदासदशकमित्यपरे । इत्यादिविप्रतिपत्तौ चिन्त्यते । यज्ज्ञा-नमनुमितेः साक्षाज्जनकं तदेव प्रतिपादयितुमुचितम् । अन्यथा तज्जनक-

यद्यप्यवयवसामान्यलक्षणमेवमस्तु । तथापि तल्लक्षणलक्षिता अवयवाः कतीति जिज्ञासायां सिद्धान्तं वक्ष्यन्, प्रथमं तदङ्गतया मतभेदं दर्शयति—तत्रेति । अवय-वसामान्यलक्षणे निरूपिते सतीत्यर्थः । एक इति । बौद्धा इत्यर्थः । प्रतिज्ञेति । [1]प्रतिज्ञाद्यवयवत्रयमुदाहरणाद्यवयवत्रयं वेति भावः । अन्य इति । मीमांसका इत्यर्थः । प्रतिज्ञादीति । आदिशब्देन हेतूदाहरणोपनयनिगमनानि गृह्यन्ते । एता-दात्मकं प्रतिज्ञादिपञ्चकमित्यर्थः ।

ननु पदकदम्बकरूपत्वाद्वाक्यस्य तदवयवाः पञ्च किं पदान्येवेति चेत्; न, प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा वाक्यात्मका अपि महावाक्यापेक्षयावयवाः । यथा अवयविनोऽपि पादादयः कायापेक्षयावयवा उच्यन्त इति दिक् ।

## प्रतिज्ञानिरूपणम्

[2]अत्र प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा । केवलपक्षवचनं प्रतिज्ञा मा भूदित्ये-तदर्थं प्रतिपिपादयिषयेति । परं प्रति प्रमाणेन सिषाधयिषयेत्यर्थः । स यथा—'अनित्यः शब्दः' इति । यद्वा, उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजनकवाक्यत्वं प्रतिज्ञात्वम् । अत्र न्यायाप्रविष्टप्रतिज्ञासमानाकारवाक्येऽतिव्याप्तिवारणाय सत्यन्तम्[3] । वाक्यार्थपदं स्पष्टार्थम् । न्यायान्तरप्रतिज्ञायां न्यायान्तरस्थप्रतिज्ञासमानार्थायां न्यायान्तरप्रतिज्ञात्वं मा प्रसाङ्क्षीदिति

1 'उदाहरणपर्यन्तं यद्वोदाहरणादिकम्' इति मीमांसकानुसारेणाह—उदाहरणाद्यवयवत्रयं वेति ।

2 मूलेऽनुक्तानि प्रतिज्ञादीनां लक्षणानि सदलप्रयोजनं स्वयं निरूपयितुमुपक्रमते—अत्रेत्यादिना । पक्षवचनमिति । अनुमितिविधेयविशिष्टो धर्मी पक्षः । तद्बोधकं वाक्यमित्यर्थः । मणिकारोक्तं प्रथमं प्रतिज्ञालक्षणमाह—यद्वेति ।

3 सत्यन्तमिति । यद्यपि न्यायान्तर्गतवाक्यजन्यज्ञानस्यैव न्यायाप्रविष्टप्रतिज्ञासमाना-कारवाक्याजन्यज्ञानस्याप्युपनायकज्ञानविधया परामर्शप्रयोजकत्वमस्त्येवेत्यतिव्याप्तिर्दुर्वारा, तथापि सत्यन्तेन न्यायान्तर्गतत्वं विवक्षितमिति नातिव्याप्तिः ।

न्यायान्तरप्रतिज्ञायामिति । पर्वतो वह्निमानित्यानुपूर्वीकविभिन्नवाक्यघटितन्यायो भिन्न-भिन्नो वर्तते । न्यायानन्तर्गततादृशवाक्यव्यक्तेः एतन्न्यायान्तर्गतप्रतिज्ञाव्यवहारविषयता नास्ति ।

प्रथमोद्देश्यपदम् । अनुमितौ लिङ्गभानपक्षे चैतदर्थमेवाग्रेऽप्युद्देश्यपदम् । अनुमितौ लिङ्गभानपक्षेऽसंभवपरिहाराय द्वितीयोद्देश्यपदम् । तथाचास्मिन्पक्षे यद्विषयत्वेनानुमितिरुद्देश्या, तस्यैवोद्देश्यानुमितिविषयत्वमिति नोक्तदोषः । प्रतिज्ञैकदेशेऽतिव्याप्तिवारणाय अन्यूनेति । ननु पक्षतावच्छेदकस्यावयवान्तराप्रतिपाद्यत्वादन्यूनपदेनैव तद्व्यवच्छेदेऽनतिरिक्तपदवैयर्थ्यमिति चेत्; न, 'पृथिवी इतरेभ्यो भिद्यते' इत्यत्रेतरभेदाभाव इति साध्याभावांशे उदाहरणैकदेशेऽतिव्याप्तिवारकत्वादिति दिक् ।

## हेतुनिरूपणम्

प्रतिज्ञालक्षणानन्तरं हेतुलक्षणमभिधीयते—साधनत्वव्यापकं लिङ्गवचनं हेतुः । लिङ्गवचनं हेतुरित्युच्यमाने 'धूमोऽयम्; धूमवान्' इत्यादिवचनस्यापि हेतुत्वप्रसङ्गः । तन्निवृत्त्यर्थं साधनत्वव्यापकमिति विशेषणम् । 'धूमवत्त्वात्; [1]धूमवत्त्वेन; धूमो यस्मात्' इत्यादि वचनं हेतुरिति बोध्यम् । [2]अथवा पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं हेतुत्वम् । न्यायाप्रविष्टहेतुसदृशेऽतिव्याप्तिवारणाय अनुमितिपरेति । न्यायप्रविष्टेत्यर्थः । [3]निगमनेऽतिव्याप्तिवारणाय लाक्षणिकेति । तस्मादिति सर्वनाम्नो बुद्धिस्थवाचकतया तस्यार्थस्य बुद्धिविषयत्वे शक्त्यैव, तदविषयत्वे लक्षणाया अप्यसंभवेन सर्वथा लक्षणाया अनुपपत्तेर्नोक्तदोषः । पञ्चम्यन्तेति विशेषणं विहाय तदितराभिधाने

1 धूमवत्त्वेनेति । पञ्चम्या इव तृतीयाया अपि हेतावनुशासनात् साधनत्वव्यापकत्वे सति लिङ्गवचनत्वं तृतीयान्तेऽपि वर्तत इति भावः ।

2 तृतीयान्तपदघटितस्य हेतुवाक्यत्वं न सांप्रदायिकमित्याशयेनाह—अथवेति । पञ्चम्यन्तेति । पञ्चम्यन्तं यल्लाक्षणिकं पदं तद्वत्त्वे सत्यनुमितिपरवाक्यत्वं न्यायान्तर्गतहेतुलक्षणमित्यर्थः ।

3 निगमनेऽतिव्याप्तिवारणायेति । तस्माद्वह्निमानिति निगमने न्यायावयवे पञ्चम्यन्ततच्छब्दवत्त्वादतिव्याप्तिरिति भावः । लिङ्गबोधकस्य निगमनघटकतच्छब्दस्याबाधितासत्प्रतिपक्षितत्वविशिष्टे लिङ्गे लाक्षणिकत्वात् लाक्षणिकत्वोपादानेऽप्यतिव्याप्तिर्दुर्वारेत्याशङ्कायामाह—तस्मादिति सर्वनाम्न इति । तस्यार्थस्येति । यस्मिन्नर्थे तच्छब्दस्य लक्षणाभिमता, तस्यार्थस्येत्यर्थः । एवंच लक्ष्यतयाभिमतोऽर्थो बुद्धिस्थो वा ? न वा ? आद्ये तस्य तच्छब्दवाच्यतैव, तच्छब्दस्य बुद्धिस्थवाचकत्वात् । द्वितीये तत्र लक्षणैव न संभवति, ज्ञाताया एव लक्षणाया उपयोगात् । अबुद्धिस्थे शक्यसंबन्धरूपलक्षणाया ज्ञातुमशक्यत्वात् । तथाच तच्छब्दे लाक्षणिकत्वं नास्तीति न निगमनेऽतिव्याप्तिरिति भावः ।

प्रतिज्ञायामतिव्याप्तिः, तत्रापि [1]साध्यपदे लक्षणाभ्युपगमात् । तन्निवृत्त्यर्थं तद्विशेषणम् । ननु प्रतिज्ञायां साध्यपदे लक्षणेत्यत्र प्रमाणाभाव इति चेत्; न, साध्यस्य हेतुवाक्यार्थेन हेतुनान्वयासंभवात्, साध्यस्य हेत्वकार्यत्वात् । ननु हेतुवाक्येन कारको हेतुर्नाभिधीयते; अपितु ज्ञापकम्, साध्यनिर्देशानन्तरं कुत इति प्रमाणाकाङ्क्षायामेव हेतुप्रयोगात्; पञ्चम्या अपि तत्र ज्ञापकत्वरूपहेतुत्वपरत्वम् । तथाच हेतुवाक्यार्थे ज्ञापकज्ञाप्यस्य साध्यस्य विषयत्वेनैवान्वय इति न साध्यपदे ज्ञानलक्षणा । एवंच लाक्षणिकपदेनैव प्रतिज्ञायामतिव्याप्तिपरिहारोपपत्तौ पञ्चम्यन्तेति विशेषणं व्यर्थमिति चेत्; न । पञ्चम्या ज्ञापकत्वपरत्वं लक्षणया वा? शक्त्या वा? नाद्यः, सुब्विभक्तौ लक्षणाया [2]अव्युत्पत्तेः । नान्त्यः, एकार्थत्वे संभवति नानार्थत्वायोगात् । प्रतिज्ञालक्षणं च यथा सुस्थं तथोक्तमिति दिक् ।

## उदाहरणनिरूपणम्

सम्यग् दृष्टान्ताभिधानमुदाहरणम् । सम्यगित्यभिधानविशेषणं भिन्नं पदमव्याप्त्यभिधानादेर्दृष्टान्ताभासस्य निरासार्थम् । यद्वा, [3]अनुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतवन्निष्ठनियतव्यापकताभिमतसंबन्धबोधजनकशब्दत्वमुदाहरणत्वम् । अत्र जनकान्तं परित्यज्य तदितराभिधाने उदासीनवाक्येऽतिव्याप्तिः स्यात् । तन्निवृत्त्यर्थं जनकान्तम् । जनकपदं न्यायजन्यज्ञानजनकपरम् । प्रतिज्ञायामतिव्याप्तिवारणाय

1 साध्यपदे लक्षणाभ्युपगमादिति । 'पर्वतो वह्निमान्' इत्यत्र वह्निपदस्य वह्निप्रकारकज्ञाने लक्षणा । मतुबर्थो विशेष्यतारूपसंबन्धवान् । वह्निप्रकारकज्ञानविशेष्यः पर्वत इति बोधः । धूमादिति हेतुघटकपञ्चम्यर्थहेतुत्वस्य निरूपकतासंबन्धेन साध्यपदार्थज्ञानेऽन्वय इति बोध्यम् ।

2 अव्युत्पत्तेरिति । 'न सुब्विभक्तौ लक्षणा' इति नैयायिकवृद्धानां व्यवहारात् पञ्चम्या ज्ञापकत्वे लक्षणा न संभवदुक्तिकेति भावः ।

3 अनुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकेति शब्दविशेषणं न्यायावयवार्थकम् । व्याप्यत्वाभिमतवन्निष्ठो यो नियतव्यापकताभिमतसाध्यसंबन्धः, तद्विषयकबोधजनकशब्दत्वं विशेष्यदलार्थः । 'यो यो धूमवान् स वह्निमान्' इत्युदाहरणजन्यबोधे व्याप्यधूमवति व्यापकवह्निसंबन्धस्य भानाल्लक्षणसंगतिः ।

बोधजनकेत्यन्तम् । निरुक्तबोधजनकत्वं च [1] तद्बोधतात्पर्यकत्वम् । उपनये च [2]पक्षधर्मताबोधने तात्पर्यमिति न तत्रातिव्याप्तिः । अथवा तत्संबन्धविषयकमित्यर्थः । उपनयस्य तु तत्संबन्धानुमापकत्वमिति । तावत्पदं समुदायपरम् । तेनोदाहरणैकदेशे नातिव्याप्तिः । तत् द्विविधम्—साधर्म्योदाहरणं वैधर्म्योदाहरणं चेति । तथाच न्यायसूत्रम्—" साधर्म्यवैधर्म्यभेदात् " इति । साधर्म्यवैधर्म्ये एव भेदः; तस्मादिति विग्रह; । अन्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणम् । यथा—'अनित्यः शब्दः, तीव्रादिधर्मोपेतत्वात् । यत् तीव्रादिधर्मोपेतं तदनित्यम् । यथा सुखादि ' इति । व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणम् । यथा—'यदनित्यं न भवति, तत् तीव्रादिधर्मोपेतं न भवति, यथा आकाशम् ' इति दिक् ।

## उदाहरणाभासनिरूपणम्

समीचीनोदाहरणपरिज्ञानस्यात्यन्तोपयोगित्वादुदाहरणाभासा अप्यत्र निरूप्यन्ते । उदाहरणलक्षणरहिता उदाहरणवदवभासमाना उदाहरणाभासाः । ते चानेकप्रकाराः । तथाच ' मनः अनित्यं, मूर्तत्वात् ' इत्यस्मिन् प्रयोगे सर्वे उदाहरणाभासा उच्यन्ते । ' यन्मूर्तं तदनित्यम् , यथा परमाणुः ' इति कृते साध्यविकलो दृष्टान्ताभासः, साध्यस्यानित्यत्वस्य परमाणावभावात् । ' यथा कर्म ' इति साधनविकलः, साधनस्य मूर्तत्वस्य कर्मण्यभावात् । ' यथा आकाशः ' इत्युभयविकलः, उभयोः साध्यसाधनयोराकाशेऽभावात् ; तस्य नित्यत्वाद्विभुत्वाच्च । ' खरविषाणवत् ' इत्याश्रयहीनः । ' घटवत् ' इत्यव्याप्त्यभिधानमिति । न व्याप्त्यभिधानमव्याप्त्यभिधानम् । ' यन्मूर्तं तदनित्यम् '

1 साध्यव्याप्यहेतुमान् पक्ष इत्युपनयवाक्यं प्रयुज्यते । तज्जन्यबोधे व्याप्तिघटकतया व्याप्यवति व्यापकसंबन्धो भासत इत्युपनयवाक्येऽतिव्याप्तिः । तद्वारणाय तात्पर्यनिवेशः ।

2 पक्षधर्मताबोधने तात्पर्यमिति । उदाहरणस्य व्याप्तिबोधने तात्पर्यादुपनयस्यापि व्याप्तौ तात्पर्ये पौनरुक्त्यं स्यादित्युपनयस्य व्याप्तौ तात्पर्यं नास्ति । परंतु व्याप्यः पक्षे वर्तते, न वेत्याकाङ्क्षानिवर्तकत्वानुरोधेन व्याप्यवत्पदघटितमेवोपनयवाक्यं प्रयुज्यत इति भावः ।
' धूमवान् पर्वतः ' इत्येव व्याप्त्यर्थकपदाघटितमुपनयवाक्यं प्रयुज्यत इति मताभिप्रायेणाह—अथवेति ।

इति वचनमन्तरेण व्याप्तेरप्रतीतेः । 'यदनित्यं तन्मूर्तं दृष्टम्' इति विपरीतव्याप्त्यभिधानम् । यत्र साधनजातीयमस्ति, तत्र साध्यजातीयमवश्यमस्तीति वक्तव्यम् । अव्याप्त्यभिधानविपरीतव्याप्त्यभिधाने द्वे वचनदोषौ । आद्याश्चत्वारोऽर्थदोषा इति विभागः । इति षट् साधर्म्योदाहरणाभासा निरूपिताः ।

अथ षट् वैधर्म्योदाहरणाभासा निरूप्यन्ते । 'यदनित्यं भवति, तन्मूर्तमपि न भवति, यथा परमाणुः' इति साधनाव्यावृत्तो दृष्टान्ताभासः । साधनं मूर्तत्वम् । यस्मात् दृष्टान्ताभासादव्यावृत्तमसौ साधनाव्यावृत्तः । यस्मिन्निति वा विग्रहः । 'यथा कर्म' इति साध्याव्यावृत्तः । 'यथा घटः' इत्युभयाव्यावृत्तः । 'यथा खपुष्पम्' इत्याश्रयहीनः । 'आकाशवत्' इत्यव्याप्त्यभिधानम्, 'यदनित्यमपि न भवति, तन्मूर्तमपि न भवति' इत्यभिधानमन्तरेण व्यावृत्तेरप्रतीतेः । 'यन्मूर्तं न भवति तदनित्यं न भवति, यथा आकाशम्' इति विपरीतव्याप्त्यभिधानमिति ।

नन्वेतयोः कथं दोषत्वं घटत इति चेत्; उच्यते—'यत्र साध्यं नास्ति, तत्र साधनं नास्ति' इति व्यतिरेके वक्तव्ये, अन्यथाभिधानं साधनात् साध्यसिद्धावङ्गं न भवतीति दोष एव । अत्राप्याद्याश्चत्वारोऽर्थदोषाः । इतरावव्याप्त्यभिधानविपरीतव्याप्त्यभिधानलक्षणौ वचनदोषाविति विभागः । इति वैधर्म्योदाहरणाभासा निरूपिताः ।

## उपनयनिरूपणम्

उदाहरणप्रसङ्गेनोदाहरणाभासानभिधाय क्रमप्राप्तोपनयस्य लक्षणमुच्यते—[1]दृष्टान्ते प्रसिद्धाविनाभावस्य दृष्टान्तोपमानेन पक्षे व्याप्तिख्यापकं वचनमुपनयः । साधनस्य पक्षे व्याप्तिख्यापकं वचनमुपनय इत्युक्ते हेतुरूपवचनस्याप्युपनयत्वप्रसङ्गः । तन्निवृत्त्यर्थं दृष्टान्तोपमानेति पदम् । एतच्चोपलक्षणम्—दृष्टान्तोपमानेन वा,

1 दृष्टान्ते प्रसिद्धाविनाभावस्य दृष्टान्तोपमानेन पक्षे व्याप्तिख्यापकं वचनमुपनय इति । प्रसिद्धः ज्ञातः, अविनाभावो व्याप्तिः, यस्य तस्य दृष्टान्ते महानसादौ गृहीतव्याप्तिकस्य हेतोरिति यावत् । दृष्टान्तोपमानेन, दृष्टान्ते उपमानेन सह पक्षे व्याप्तिख्यापकं संबन्धबोधकं तथा चायमिति वाक्यं, 'महानसवत् वह्निव्याप्यधूमवान्पर्वतः' इति बोधजनकमुपनय इत्यर्थः ।

को हेतुरित्यकाङ्क्षायां प्रवृत्तेन हेतुवचनेन हेतोः पक्षसंबन्धानवगमात् दृष्टान्तोपमानेनेति पदं व्यर्थमित्याशयेन मणिकारोक्तं लक्षणमाह—यद्वेति ।

जनकपरंपराप्रतिपादनेऽनवस्था । व्याप्तिपक्षधर्मताविशिष्टस्यैवार्थस्य ज्ञानं साक्षादनुमितिजनकमिति तावन्मात्रस्य प्रयोगो युज्यते । स च 'एतत्साध्य-

दृष्टान्तवैधर्म्येण वा सहेत्यर्थो बोध्यः । शेषं स्वरूपकथनार्थम् । यद्वा [1]अनुमितिकारणतृतीयलिङ्गपरामर्शजनकावयवत्वमुपनयत्वमिति तत्सामान्यलक्षणमवगन्तव्यम् । स द्विविधः—साधर्म्योपनयः, वैधर्म्योपनयश्चेति । साध्यव्याप्यविशिष्टपक्षधर्मबोधकावयवत्वं साधर्म्योपनयत्वम् । 'स यथा, तथा तीव्रादिधर्मोपेतः शब्दः' इति । साध्याभावव्यापकाभावप्रतियोगित्वबोधकावयवत्वं वैधर्म्योपनयत्वम् । 'स यथा, न च तथा तीव्रादिधर्मोपेतः शब्दो न भवति' इति । अत्र यद्यपि 'द्वौ नञौ प्रकृतमर्थं गमयतः' इति न्यायेनार्थभेदो नास्ति, तथाप्युक्तिभेदादुपनयभेदः । उक्तिभेदोऽप्युदाहरणभेदादिति संक्षेपः ।

## निगमननिरूपणम्

उपनयानन्तरं निगमनमुच्यते—सहेतुकं प्रतिज्ञावचनं निगमनमिति । यद्वा, अनुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानकारणव्याप्तपक्षधर्मतादिधीप्रयुक्तसाध्यधीजनकं वाक्यं निगमनम् । अत्रोदासीनवारणाय कारणेत्यन्तं साध्यधीविशेषणम् । प्रतिज्ञायामतिव्याप्तिवारणाय व्याप्तेत्यादि । साध्यधीजनकत्वं साध्यधीज्ञानजनकत्वम् । प्रतिज्ञायामिव निगमनेऽपि साध्यपदस्य लक्षणया ज्ञानपरत्वादिति । यथा 'तस्मादनित्य एव' इति । एतत्सर्वं मनसि निधायाह—**इत्यपर इति** । गौतममततत्त्ववेदिन इत्यर्थः । **यज्ज्ञानमिति** । परामर्शरूपमित्यर्थः । **अनुमितीति** । अनुमितौ व्यापारत्वेन जनकमित्यर्थः । **तदेवेति** । तज्ज्ञानमेवेत्यर्थः । अन्यथाशब्दार्थं प्रतिपादयति—**तज्जनकेति** । अनुमितिजनकेत्यर्थः । अनुमितौ साक्षाज्जनकं ज्ञानं किमित्यपेक्षायामाह—**व्याप्तीति** । **अर्थस्येति** । लिङ्गस्येत्यर्थः । **तावन्मात्रस्येति** ।

1 लिङ्गपरामर्शजनकावयवत्वमिति । अत्र लिङ्गपरामर्शपदेन साध्यव्याप्याभिन्नहेतुमद्भेदावगाही विवक्षितः । तेन पूर्वोक्तरीत्यानुमितिजनकस्य विशिष्टवैशिष्ट्यावगाहिपरामर्शस्योपनयवाक्यादनुत्पत्तावपि नाव्याप्तिः ।

व्याप्यैतद्धर्मवानयम्' इति वा, 'एतद्वृत्तिरयं धर्मः साध्यव्याप्यः' इति वा, एतद्वृत्त्यैतद्धर्मव्यापकं साध्यम्' इति वा कर्तव्यः ॥

नन्वाकाङ्क्षाक्रमेणाभिधानम् । विप्रतिपत्तेरनन्तरं 'कुत्र किं ज्ञापयितव्यम्' इत्याकाङ्क्षायां 'शब्देऽनित्यत्वं ज्ञापयितव्यम्' इति प्रतिपादनार्थं ज्ञानलक्षणया वृत्त्या प्रतिज्ञा प्रयुज्यते—'शब्दोऽनित्यः' इति । तदनन्तरं कस्माद्धेतोरित्याकाङ्क्षायां, कृतकत्वज्ञानादित्यस्मिन्नर्थे ज्ञानलक्ष-

परामर्शमात्रस्येत्यर्थः । परामर्शमभिनीय दर्शयति—स चेति । वस्तुतस्तु—व्याप्तिपक्षधर्मतावगाहिनस्तृतीयलिङ्गपरामर्शस्यावयवान्तरादलाभात् उपनयानभ्युपगमे पक्षधर्मताया अप्यलाभः । न च हेतुवचनादेव पक्षधर्मतावगतिः, हेतुवचनस्य कोऽत्र हेतुरित्याकाङ्क्षायां प्रवृत्तत्वेन हेतुस्वरूपख्यापकस्यातत्परत्वात् । न च वादिवाक्यादेवाक्षेप इति वाच्यम्, तदर्थस्यासिद्धत्वेनानाक्षेपकत्वात्; अन्यथा प्रतिज्ञामात्रादेव सर्वाक्षेपे सत्यवयवान्तरविलयापत्तेः । न च प्रतिपाद्यानां स्वत एव तदवगम इति वाच्यम्, तेषां व्युत्पन्नाव्युत्पन्नतया सर्वत्र तदसंभवात्; प्रतिपादकेन स्वव्यापारस्य निर्वाहयितुमशक्यत्वाच्च; अन्यथा त्ववयवान्तरेऽप्येवं प्रसङ्गादिति । तस्मात् परामर्शसंपादकत्वेनोपनयोऽभ्युपगन्तव्यः । एवं निगमनमप्यभ्युपगन्तव्यम्, अन्यथा, अबाधितत्वासत्प्रतिपक्षत्वयोरलाभेन प्रतिज्ञाहेतूदाहरणोपनयानामप्यपर्यवसानात् । तस्मादबाधितत्वासत्प्रतिपक्षत्वसंपादकत्वेन निगमनमास्थेयमिति प्रतिज्ञादिपञ्चकमेव युक्तमिति तत्त्वमिति दिक् । अथवोपनयनिगमनाभ्यामेवानुमित्युत्पत्तौ प्रतिज्ञादीनां त्रयाणामपि वैयर्थ्यं स्यादिति प्रतिबन्दीतरङ्गिणी दुरुत्तरेत्यपरो भाव इति संक्षेपः ।

ननु प्रतिज्ञादित्रयमनङ्गीकृत्योपनयनिगमनयोः प्रदर्शनेऽप्राप्तकालता स्यादिति तन्निरासाय प्रतिज्ञादित्रयमास्थेयमिति शङ्कते—नन्विति । नन्वस्तु प्रतिज्ञाप्रयोगः । हेतुप्रयोगोऽनर्थक इत्यत आह—शब्दोऽनित्य इति । तदनन्तरमिति । प्रतिज्ञाप्रयोगानन्तरमित्यर्थः । हेतावुक्ते कथमस्य गमकत्वमित्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोरुपदर्शनप्राप्तौ व्याप्तेः प्राथम्यात्तद्दर्शनायोदाहरणमावश्यकमित्यभिप्रायेणाह—एवमिति । अनवधेयतयेत्युपलक्षणम् । प्रतिज्ञादित्रयेणैवेष्टार्थसिद्धावतिरिक्तावयवद्वयाभ्युपगमे गौरवं स्यादिति भावः ।

णयैव कृतकत्वादिति हेतुः प्रयुज्यते । एवमुत्तरत्राप्याकाङ्क्षाक्रमेणावयवाभिधानम् । अन्यथानाकाङ्क्षिताभिधानेऽनवधेयता स्यादिति । तन्न । एतादृशि विप्रतिपत्तौ 'गौतममतमाश्रित्य मया शब्दानित्यत्वमनुमापयितव्यम् । तद्दूषणानि च निराकरणीयानि' इत्येकः । परोऽपि 'जैमिनिमतमाश्रित्य मया तद्दूषणं वक्तव्यम् । शब्दनित्यत्वस्थापना च कर्तव्या' इत्यङ्गीकृतवान् । एतदनन्तरम् 'अनित्यत्वव्याप्यकृतकत्वाश्रयः शब्दः' इत्येतावन्मात्रेणाकाङ्क्षायाः पूर्णत्वादतिरिक्ताभिधानमनुपयुक्तमेव । अन्यथा दूषणाभावप्रतिज्ञामपि कुर्यात् । ननु नायमसिद्धो न विरुद्ध इत्यादिकण्टकोद्धरणव्याजेन दूषणाभावः प्रतिज्ञायत एव । मैवम् । एवं सत्यधिकावयवत्वप्रसङ्गः । न वा कण्टकोद्धारस्य सार्वत्रिकत्वम् । ननु स्वार्थानुमानस्य येन क्रमेणोत्पत्तिस्तेनैव क्रमेण परार्थानुमानस्यापि । अयमेव विशेषो यत्परार्थानुमाने शब्दप्रयोगः क्रियते ; न स्वार्थानुमान इति । तत्र प्रथमं पक्षविज्ञानम् । ततस्तद्वृत्तिधूमदर्शनम् । अथ व्याप्तिस्मरणम् । अनन्तरं विशिष्टपरामर्शः । ततोऽनुमितिरिति । तथा परार्थानुमानेऽप्यस्तु । मैवम् । यदि स्वार्थानुमानेऽपि यत्र व्याप्तिस्मरणमन्यथोत्पद्यते, ततो विशिष्टपरामर्शादनुमितिरुत्पद्यत एव । न त्वेतादृशक्रमोदाहरणम् । नापि पर्वतज्ञानानन्तरमेव साध्यस्य तत्र प्रतीतिः । अत्र तु साध्यनिर्देशः क्रियते ।

अपिच, अन्यत्र यथा तथास्तु । निगमनस्य पुनः कुत्रोपयोगः? यदि तावत्कारणीभूतविज्ञानविषयाभिधाने, तदावयवचतुष्टयमेवास्तु । अयोगा-

सिद्धान्ती प्रतिबन्द्यैव परिहरति—तन्नेति । अन्यथेति । एतत्त्रितयातिरिक्तावयवद्वयाभ्युपगम इत्यर्थः । दूषणाभावप्रतिपादनमिष्टमेवेति शङ्कते—नन्विति । मीमांसकस्याधिकाख्यनिग्रहस्थानमापद्येतेत्यभिप्रायेण परिहरति—मैवमिति । ननु नियमकथायामेतदधिकं दूषणम् ; नानियमकथायामित्यरुचेराह—न वेति । समयविशेषोपयोगित्वादिति भावः ।

ननु स्वार्थानुमानस्येत्यादिग्रन्थमारभ्य साध्यनिर्देशः क्रियत इत्यन्तो ग्रन्थः स्पष्टार्थः । दोषान्तरमाह—अपिचेति । अवयवचतुष्टयमिति । प्रतिज्ञाद्युपनयान्त-

न्ययोगव्यवच्छेदाभ्यामबाधितासत्प्रतिपक्षत्वरूपद्वयप्रतिपादनपरतयास्त्येव निगमनस्योपयोग इति चेत्; न। पक्षधर्मत्वसपक्षसत्त्वविपक्षाद्व्यावृत्त्याद्यभिधानमपि तर्हि कर्तव्यम्। इतरावयवैस्तत्कृतमिति चेत्, न, विपक्षव्यावृत्तेरनभिधानात्। कयाचिद्भङ्ग्या तत्र तात्पर्येऽपि केवलान्वयिकेवलव्यतिरेकिणोः पञ्चावयवानभिधानप्रसङ्गात्; रूपचतुष्टयस्यैव तयोः सद्भावात्। एवं द्व्यवयववादिमते दूषणमूहनीयम्। संशयादीनामज्ञातानामेव यथोपयोगस्तथा पक्षधर्मताप्रस्तावेऽभिहितम्। अतो न तेषामभिधानं क्रियत इति न दशावयवत्वमिति।

इत्यवयवनिरूपणम्।

मित्यर्थः। तत्रेति। विपक्षव्यावृत्तावित्यर्थः। पञ्चावयवेति। पञ्चरूपानभिधानप्रसङ्गादित्यर्थः। पक्षधर्मत्वं, सपक्षे सत्त्वम्, अबाधितविषयत्वम्, असत्प्रतिपक्षितत्वं चेति रूपचतुष्टयं केवलान्वयिहेतौ। व्यतिरेकिणि सपक्षे सत्त्वमपहाय तदितररूपचतुष्टयमित्यभिप्रायेणाह—रूपेति। उक्तन्यायं बौद्धमतेऽप्यतिदिशति—एवमिति। तर्हस्तु दशावयवत्वमित्यत आह—संशयादीनामिति। अभिहितमिति। तत्रैवानुसंधेयमिति भावः। वस्तुतस्तु—संशयप्रयोजनादयस्त्ववयवसामान्यलक्षणाक्रान्तत्वाभावादेव नावयवाः। किंतु न्यायाङ्गत्वेनोपयुज्यन्त इति नाधिक्यमिति भावः। उपसंहरति—अत इति। यतोऽज्ञातानां तेषामुपयोगः, अत इत्यर्थः।

इति श्रीमदहोबलश्रीनृसिंहस्वामिकरुणाकटाक्षवीक्षितश्रीमन्मंकालान्नमसोमयाजिसूनुना नृसिंहयज्वना विरचितायां न्यायरत्नटीकायां द्युतिमालिकायामवयवनिरूपणम्।

## कथानिरूपणम्

अवयवनिरूपणानन्तरं कथा निरूप्यते, अवयवसाध्यत्वात्कथायाः। किं कथात्वम्? साधनदूषणप्रतिपादकवाक्यत्वं वा? निग्रहस्थानवद्वाक्यत्वं वा? अनुवादेतरस्थापनावत्कर्तृकत्वे सति दूषणवक्तृवाक्यत्वं वा? नाद्यः, वादकथायां यत्रैकः साधनमभिधत्ते, अपरः स्तम्भरूपपर्यनुयोज्योपेक्षणान्न किंचिद्वदति, तत्त्वबुभुत्सुकथायामुपेक्षणीयस्यानुद्भाव्यत्वात् प्रथमवादी नोद्भावयति, तत्राव्याप्तेः। न द्वितीयः। निग्रहोन्नायकं वाक्यं निग्रहस्थानम्। निग्रहस्तु कथाकारणीभूतसम्यक्प्रतिपत्तिव्यतिरेकः। अतः कथानिरूपणीयत्वात्कथाया आत्माश्रयः। अप्रतिपत्तिविप्रतिपत्त्यन्यतरमात्रं

## कथानिरूपणम्

अवयवनिरूपणानन्तरं कथा निरूप्यत इत्यत्र हेतुमाह—**अवयवसाध्यत्वादिति**। अवयवप्रतिपाद्यत्वादित्यर्थः। कथात्वं विचारयितुं प्रथमं तदङ्गतया पूर्वपक्षमाह—**किं कथात्वमिति**। किंशब्दो निषेधपरः। कथात्वं निर्वक्तुमशक्यमिति भावः। **साधनेति**। वादिप्रतिवादिनोरिति शेषः। [1]कथाविशेषरूपवितण्डायामव्याप्तिरित्यरुचेराह—**निग्रहेति**। निग्रहोन्नायकमित्यर्थः। [2]निग्रहपदार्थनिरुक्तावात्माश्रय इत्यपरितोषादाह—**अनुवादेतरेति**। अनुवादेतरस्थापनावान् कर्ता यस्येति बहुव्रीहिः। तस्य भावस्तत्त्वम्। तस्मिन्निति विग्रहः। तदेवं विकल्प्य यथोद्देशं दूषयति—**नाद्य इति**। **अपर इति**। न किंचिद्वदतीत्यनेन संबध्यते। तत्र हेतुमाह—**स्तम्भरूपेति**। रूपशब्दः स्वभाववाची। पर्यनुयोज्योपेक्षणं निग्रहं प्राप्तस्यानिग्रहः। तथाच स्तम्भस्वभावपर्यनुयोज्योपेक्षणादित्यर्थः।

निग्रहस्थानवद्वाक्यं कथेति वदता निग्रहोन्नायकं निग्रहस्थानं वक्तव्यम्। कश्चायं निग्रहः? कथाकारणीभूतसम्यक्प्रतिपत्तिव्यतिरेको वा? अप्रतिपत्तिविप्रतिपत्त्यन्यतरमात्रं वा? इति विकल्प्याद्यं कल्पं निराकरोति—**निग्रहस्त्विति**। द्वितीयमुत्थापयति—

1 वितण्डायामव्याप्तिरिति। तत्र वैतण्डिकस्य साधनाभावादिति भावः।

2 निग्रहपदार्थनिरुक्तावात्माश्रय इति। कथाकारणीभूतसम्यक्प्रतिपत्तिविरहस्यैव निग्रहपदार्थत्वात् तद्घटितकथात्वमात्माश्रयदोषदुष्टमिति भावः।

निग्रहः ; तदुन्नायकं निग्रहस्थानमिति चेत् ; न, यत्किंचिद्वाक्यस्यापि कथात्वप्रसङ्गात् । नेतरः, आद्यपक्षदूषणेनैव दूषितत्वात् ; जल्पविशेषे चाव्याप्तेः । तत्र य एव स्थापनावक्ता, स एव दूषणवक्तेति । एकाविषयत्वे सतीति चेत् , यत्रैक एव वादी प्रौढिवादितया 'अस्मिन् स्थापना दूषणं च मया कर्तव्यम्' इति कथां करोति, तत्राव्याप्तिः । एवं कथकाशक्तिलिङ्गवद्वाक्यं कथेत्यादावपि दूषणमूहनीयम् । तत्कथमुच्यते ?

उच्यते—[1] पराभिधास्यमानहेत्वाभासादिनिराकर्तव्यताज्ञानजन्यं वाक्यं कथा । यद्वा कथात्वं जातिविशेष एव । पदत्ववाक्यत्वसूत्रत्वप्रकरणत्वाह्निकत्वाध्यायत्ववत् ।

ननु सा जातिः किमन्त्यवर्णवृत्तिः ? सकलवर्णवृत्तिर्वा ? नाद्यः, अन्त्यवर्णाप्रतिसंधानेऽपि कथात्वप्रतीतेः; अन्त्यवर्णमात्रप्रतिसंधानेऽपि कथात्वाप्रतीतेः । न द्वितीयः, योग्यैकव्यक्तिग्रहेऽपि जातिग्रहणनियमात् किंचिद्वर्णग्रहणेऽपि कथात्वग्रहणप्रसङ्गः; जातिसंकरश्चेति । मैवम् । पूर्वपूर्ववर्णध्वंसा

अप्रतिपत्तीति । परिहरति—नेति । न तृतीय इत्याह—नेतर इति । अव्याप्त्यन्तरमाह—जल्पविशेष इति । शेषमतिरोहितार्थम् । तृतीयलक्षणोक्तं दूषणं लक्षणान्तरेऽप्यतिदिशति—एवमिति ।

सिद्धान्तमारभते—उच्यत इति । पारिभाषिकाभिधानेति । पारिभाषिकाः कथकाः । तेषामभिधानस्य सिद्धान्तवचनस्येत्यर्थः । मानमनुमानम् । तत्र ये हेत्वाभासादयः प्रतिवादिनोक्ताः, तेषां निराकर्तव्यताज्ञानजन्यमित्यर्थः । जल्पविशेषेऽव्याप्तिरित्यपरितुष्यन्नाह—यद्वेति । अत्र दृष्टान्तमाह—पदत्वेति ।

ननु कथात्वं न जातिः, विकल्पासहत्वादिति शङ्कते—नन्विति । मध्यगतानां वर्णानां वैयर्थ्यापत्तिरित्यरुचेराह—सकलेति । शेषमतिरोहितार्थम् । योग्यैकेति । एकघटग्रहेऽपि घटत्वग्रहवदिति भावः । अस्तु ; प्रस्तुते किमायातम् ? अत आह—किंचिद्वर्णेति । परिहरति—मैवमिति । पूर्वेति । पूर्वपूर्ववर्णानां ये ध्वंसास्तद्विष-

1 पारिभाषिकाभिधानमानहेत्वाभासादीति व्याख्यासंमतः पाठः ।

नुभवजन्यसंस्कारसचिवेनेन्द्रियेण कथात्वपरिच्छेदात् । अन्यथोपाधित्वपक्षेऽप्येतद्दोषप्रसङ्गः । अन्त्यवर्णाज्ञानेऽपि यत् क्वचित्कथात्वं पूर्वमेव प्रतीयते, तदर्धोत्पन्ने घटे घटत्वप्रतीतिवदवगन्तव्यम् । जातिसंकरस्तु दूषणमेव न भवतीति प्रागुक्तम् ।

## वादनिरूपणम्

इदानीं तद्विशेषा निरूप्यन्ते—तत्रादौ वादः, केवलं तत्त्वनिर्णयार्थत्वात् । जयानुद्देशेन प्रवृत्तत्वे सति कथात्वसामान्यवान् वादः । वादवि-

यको योऽयमनुभवः, तज्जन्यो योऽयं संस्कारः, तत्सचिवेन तत्सनाथेनेत्यर्थः । कथात्वपरिच्छेदादिति । कथात्वनिर्णयादित्यर्थः । अनङ्गीकारे बाधकमाह—अन्यथेति । ननु कथात्वपरिच्छेद एतादृशेन्द्रियेण गृह्यताम् ; पूर्वोक्तविकल्पयोर्मध्ये कः पक्षः स्वीकृत इत्याशङ्क्य, आद्यपक्षोऽङ्गीकृत इत्याह—अन्त्यवर्णेति । अत्र दृष्टान्तमाह—अर्धोत्पन्नेति ।

वस्तुतस्तु—कथात्वमुपाधिः । वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथा । वादिप्रतिवादिनोरिति विशेषणं साधनदूषणरहितपक्षपरिग्रहः कथा मा भूदित्येतदर्थम् । यथायोग्यं साधनदूषणवादिनोरित्यर्थः । कथा द्विविधा—वीतरागकथा विजिगीषुकथा चेति । यत्र वीतरागो वीतरागेणैव सह तत्त्वनिर्णयार्थं साधनोपालम्भौ करोति, सा वीतरागकथा । प्रागुक्तमेवेति । तर्कपरिच्छेद इत्यर्थः ।

तद्विशेषा इति । कथाविशेषा इत्यर्थः । कथात्वं वादजल्पवितण्डात्वविशिष्टम् ; प्रत्यक्षादिषु प्रमाकरणत्ववदिति भावः । तत्रेति । वादजल्पवितण्डास्वित्यर्थः । वादः । वचनव्यत्ययेन निरूप्यत इत्यनुषङ्गः । जल्पाद्यपेक्षया प्रथमं वादो निरूप्यत इत्यत्र हेतुमाह—केवलमिति । "परानुग्रहार्थं ज्ञानाङ्कुरसंरक्षणार्थं च प्रवर्तते" इत्युद्योतकराचार्यस्य वचनम् । तदर्थस्तु परेषां शिष्यादीनां वेदप्रामाण्ये मोक्षादौ च निश्चयोत्पादनद्वारेण मोक्षशास्त्राचार्यादौ श्रद्धोत्पादनद्वारेण चानुग्रहाय ज्ञानाङ्कुरस्य बौद्धादिमृगेभ्यः संरक्षणार्थं च सा जल्पसंज्ञा वितण्डासंज्ञा च प्रवर्तत इति । तथाच अक्षपादसूत्रम् "तत्त्वाध्यवसानसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" इति । अत्र वीतरागकथा वादसंज्ञैवोच्यते । विजिगीषुकथायां वादः सामान्यसंज्ञायां जल्प इति विवेको बोध्यः ।

**तण्ता तु कथैव न भवति, विरोधात् । केवलतत्त्वनिर्णयोद्देशेन प्रवृत्तत्वं, जयोद्देशेन प्रवृत्तत्वं चेति विरोधः । न च तत्त्वनिर्णयोद्देशेन प्रवृत्तकथात्वमात्रं लक्षणम् , संभूयोद्देशजल्पेऽतिव्याप्तेः ।**

यत्र विजिगीषुर्विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्तते, सा विजिगीषुकथा । सा च वादिप्रतिवादिसभापतिप्राश्निकाख्यचतुरङ्गिका । विजिगीषुकथा जल्पवितण्डासंज्ञोक्तेति सिद्धान्तरहस्यं ज्ञेयम् । लाभः सुवर्णादिप्राप्तिः । पूजा वचनेन सत्कारः । ख्यातिर्लोककीर्तिः । जयपराजयार्थमिति । स्वस्य जयार्थं परस्य पराजयार्थमिति लक्षणार्थ इति संक्षेपः । वादलक्षणमाह—**जयानुद्देशेनेति** । वादकथा सकलकथासाधारणीति लोकव्यवहाराद्विज्ञायते । तथाच जल्पेऽपि क्रियमाणे वादं कुरुत इति व्यवहरति । तथा वितण्डायां क्रियमाणायां वादं कुरुत इति । **वादविपय्डा त्विति** । विरोधमेव प्रतिपादयति—**केवलतत्त्वेति** । ननु तत्त्वनिर्णयोद्देशप्रवृत्तत्वे सति कथात्वमात्रं तल्लक्षणम् ; अतो न विरोध इत्यत आह—**न चेति** । वादोऽपि द्विविधः—वीतरागवादो विजिगीषुवादश्चेति । न च तत्र वीतरागवादे प्रमाणाभाव इति वाच्यम् , **भगवदक्षपाद**प्रणीतसूत्रस्यैव तत्र प्रमाणत्वात् । तथाहि—“ प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ” इति । साध्यते येन पक्षः, तत् साधनं प्रमाणम् । उपालभ्यते दूष्यते प्रतिपक्षसाधनं येन स उपालम्भः । प्रमाणैस्तर्केण वा विषयीकृतसामर्थ्यौ साधनोपालम्भौ यत्र, स प्रमाणतर्कसाधनोपालम्भः । पक्षप्रतिपक्षपरिग्रहात्मकत्वं कथात्रयेऽप्यस्तीत्यतिव्याप्तिः । तदर्थं प्रमाणेत्यादिविशेषणम् । तत्र साधनोपालम्भग्रहणेन वितण्डायामतिव्याप्तिनिरासः । न हि वितण्डायामप्युभाभ्यामपि साधनमुपालम्भश्चोपपद्यते । जल्पाद्यवच्छेदस्तु प्रमाणतर्कग्रहणेन । कथम् ? अनेन साधनेन स्वपक्षः साधयितुं शक्यते; अनेन चोपालम्भेन प्रतिपक्षसाधनं दूषयितुं शक्यत इति प्रमाणेन निश्चितसामर्थ्यौ तर्कविषयीकृतसामर्थ्यौ वा साधनोपालम्भौ कर्तव्यौ, नान्यथेति शुद्धाभिसन्धित्वं पुरुषयोर्नियम्यते । न चैवं जल्पेऽपि । तत्र ह्येकान्तपराजयावस्थायां छलादिप्रयोगस्यापि वक्तुं शक्यत्वात् । तथाच वक्ष्यति । सिद्धान्ताविरुद्ध इत्यादि पदं तु शिष्यशिक्षार्थम् । सिद्धान्ताविरुद्ध एव वादः कार्यः, न पुनः शुष्क-

तदिह किंचिन्निग्रहस्थानमसंभावनीयमेव । यथा—हानिः संन्यासो निरर्थकमर्थान्तरमविज्ञातार्थमपार्थकमिति षट्कम् ।

तार्किकवदीश्वरस्य शरीराभ्युपगमेन । [1]तथा स्वपक्षसाधनं, प्रतिपक्षसाधनदूषणं, स्वसाधनसमर्थनं, प्रतिपक्षदूषणसमर्थनं, शब्ददोषवर्जनमित्येतैः पञ्चभिरवयवैरुपपन्नो वादः कार्यः, येनाभिमतसिद्धिः स्यात् । शब्ददोषास्तु निरर्थकाविज्ञातार्थकादय इति सूत्रतात्पर्यार्थः ।

सोऽपि द्विविधः—सत्प्रतिपक्षोऽसत्प्रतिपक्षश्चेति । आद्यस्तु प्रसिद्ध एव । द्वितीये च भगवदक्षपादसूत्रं प्रमाणम् । तथाहि—"तं प्रतिपक्षहीनमपि वा कुर्यात् प्रयोजनार्थमर्थित्वे" इति । अस्यार्थः—तं वादं प्रतिपक्षविषयसाधनं प्रतिपक्षः उपचारात् । तेन हीनमपि वा कुर्यात् । प्रयोजनार्थं तत्त्वज्ञानार्थमर्थित्वे सति । न्यायभाष्योक्तप्रकारेण तात्पर्यार्थोऽभिधीयते—यथा शिष्यो गुरुणा सह प्रश्नद्वारेण वादं करोति ; न पुनः प्रतिपक्षसाधनद्वारेणेति दिक् ।

प्रतिज्ञाहानिरित्यादिसूत्रोक्तद्वाविंशतिनिग्रहस्थानानामेषां विप्रतिपत्तिसूचकत्वेन पराजयनिमित्तत्वमुक्तम् । तेषां निग्रहस्थानानां वादकथायामुद्भावनमुचितं न वेति संदेहे निर्णयमाह—**तदिहेति** । **किंचिदिति** । द्वाविंशतिनिग्रहस्थानानामन्यतरदित्यर्थः । वादकथायास्तत्त्वाध्यवसानार्थकत्वादिति भावः । द्वाविंशतिनिग्रहस्थानानि नामभिः कीर्तयंस्तेषां विनियोगमाह—**यथेति** । **हानिरिति** । प्रतिज्ञाहानिरित्यर्थः । तल्लक्षणं तु [2]साध्ये प्रतिदृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानिः । यथा—'यदि

1 वादलक्षणसूत्रगतस्य पञ्चावयवोपपन्नपदस्य प्रतिज्ञादिभिः पञ्चभिरवयवैरुपपन्न इति भाष्यादिसंमतस्यार्थस्य स्फुटत्वात्तमुपेक्ष्य प्रकारान्तरेण स्वयं तत्पदं व्याचष्टे—तथा स्वपक्षसाधनमित्यादिना ।

कथाधिकारिणः, तत्त्वनिर्णयविजयान्यतराभिलाषिणः सर्वजनसिद्धानुभवानपलापिनः श्रवणादिपटवोऽकलहकारिणः कथौपयिकव्यापारसमर्थाः । वादाधिकारिणस्तु तत्त्वबुभुत्सवः प्रकृतोक्तिका अविप्रलम्भका यथाकालस्फूर्तिका अनपेक्षका युक्तिसिद्धप्रत्येतारः । अनुविधेयस्थेयसभ्यपुरुषवती जनता सभा । अनुविधेयः राजादिः । स्थेयान् मध्यस्थः । सा च सभा वादे नावश्यकी ।

2 साध्ये प्रतिदृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानिरिति । साध्यः साधनीयः स्वपक्षः । प्रतिदृष्टान्तः प्रतिकूलदृष्टान्तः यत्नेति व्युत्पत्त्या प्रतिपक्षे परपक्षधर्माभ्यनुज्ञा । स्वयं विशिष्याभिहितपरित्यागात् प्रतिज्ञाहानिरित्यर्थः ।

कृतकत्वात् घटवदनित्यः शब्द इष्यते, तर्ह्याकाशवदमूर्तत्वान्नित्यः किं नेष्यते ? ' इत्येवं प्रतिवादिनोक्ते वाद्याह ' भवतु; किं नो बाध्यते?' इति । अत्र तस्य नित्यत्वाभ्युपगमेनानित्यत्वप्रतिज्ञा हीयते । अतः प्रतिज्ञाहानिर्नाम निग्रहस्थानं भवतीति दिक् ।

**संन्यास इति ।** प्रतिज्ञासंन्यास इत्यर्थः । स च [1]पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनमित्यर्थः । यथा—अग्निरनुष्णः पदार्थत्वात् ' इत्यस्य प्रतिषेधे वाद्याह 'मध्यस्थैः साक्षिभिरुक्तं भवेत्; नाहमग्निमनुष्णं ब्रवीमि ' इति । अनुक्तोपालम्भोऽयमित्येतस्य प्रतिज्ञासंन्यासलक्षणं निग्रहस्थानं भवति ।

**निरर्थकमिति ।** [2]वर्णक्रमनिर्देशवन्निरर्थकमित्यर्थः । यथा ' अनित्यः शब्दः, कचटतपानां जबगडदत्वात्, भघढधवदिति । वर्णक्रमनिर्देशो वर्णानां पाठक्रमः— अ आ इ ई इत्यादि । तद्वत् । सादृश्यं चात्रार्थशून्यत्वम् । यत्र पदार्थोऽपि नास्ति तन्निरर्थकम् । वर्णक्रमनिर्देश एवास्ति, न पुनरर्थो यत्र, तद्वर्णक्रमनिर्देशवदिति मत्वर्थीयो वेति दिक् ।

**अर्थान्तरमिति ।** प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरमित्यर्थः । यथा— ' अनित्यः शब्दः कृतकत्वात् ' इति हेतुः । हेतुर्नाम हिनोतेर्धातोस्तुन्प्रत्यये कृते कृदन्तं पदमित्यादिप्रसक्तानुप्रसक्त्या प्रकृतार्थानुपयोगिशास्त्रान्तरमुपदिशतीत्यर्थान्तरं नाम निग्रहस्थानं भवतीति दिक् ।

**अविज्ञातार्थकमिति ।** परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यज्ञातमविज्ञातार्थकमित्यर्थः । यद्वाक्यं वादिना त्रिरभिहितमप्यप्रसिद्धप्रयोगातिद्रुतोच्चारणादिनिमित्तेन परिषत्प्रतिवादिभ्यां न ज्ञायते, तदज्ञानसंवरणायोक्तमविज्ञातार्थं नाम निग्रहस्थानं भवति । न ज्ञायत इति, [3]विद्यमानार्थं वाक्यमर्थतो न ज्ञायत इति ।

1 पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनमिति । स्वपक्षप्रतिषेधे कृते सति, तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनम् अपलाप इत्यर्थः ।

2 वर्णक्रमनिर्देशवन्निरर्थकमिति न्यायसूत्रम् । तत्र वर्णक्रमनिर्देशवदिति पदं वतिप्रत्ययान्ततया, मतुप्प्रत्ययान्ततया चेति द्वेधा विवृतं टीकायाम् ।

3 निरर्थकमपि वाक्यं परिषत्प्रतिवादिभ्यां न ज्ञायत एवेति निरर्थकादविज्ञातार्थकवैलक्षण्याय स्वोक्तं न ज्ञायते इत्यंशं व्याचष्टे—विद्यमानार्थं वाक्यमर्थतो न ज्ञायते इति । निरर्थके वाक्यस्यार्थ एव नास्तीति ततो भेद इति भावः ।

किंचित्संभवदनुद्भाव्यम् । यथा—प्रतिज्ञान्तरं, हेत्वन्तरम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणमिति सप्तकम् ।

अपार्थकमिति । [1]पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकमित्यर्थ इति निग्रहस्थानषट्कं बोध्यम् ।

यथा प्रतिज्ञान्तरमिति । 'प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्' इत्यर्थः । इदं लक्षणं सूत्रोदाहरणप्रदर्शनव्याजेन व्याचष्टे—'[2]सर्वमनित्यं मेयत्वात्' इत्यत्र दृष्टान्ताभावेन प्रतिज्ञातार्थप्रतिषेधे, धर्मो विवादास्पदीभूतत्वलक्षणः, तस्य विकल्पः प्रतिज्ञातार्थे विशेषणत्वेन योजनम् । तदर्थ इति प्रतिषेधनिवृत्त्यर्थ इत्यर्थः, यथा मशकार्थो धूम इति निर्देशः । 'विवादास्पदीभूतं सर्वमनित्यम्' इत्येतत्प्रतिज्ञान्तरं निग्रहस्थानमिति दिक् ।

हेत्वन्तरमिति । अविशेषोक्ते हेतौ प्रतिषिद्धे, विशेषमिच्छतो हेत्वन्तरमित्यर्थः । विशिष्यते येनासौ विशेषो विशेषणम् । न विद्यते विशेषो यस्यासावविशेषः । स चासावुक्तश्चेत्यविशेषोक्तः । तस्मिन्निति ज्ञेयम् । यथा 'वेदा नित्याः, अस्मर्यमाणकर्तृकत्वात्' इत्यस्य जीर्णकूपारामादिभिरनैकान्तिकत्वेन प्रतिषेधे, संप्रदायाविच्छेदे सतीति विशेषणमिच्छतो हेत्वन्तरं नाम निग्रहस्थानं भवति ।

अज्ञानमिति । [3]अविज्ञातार्थं चाज्ञानमित्यर्थः । यच्च वाक्यं त्रिरभिहितमपि परिषदावगतार्थं प्रतिवादी प्रत्युच्चारयन्नपि नार्थतः समधिगच्छति, तदज्ञानं नाम निग्रहस्थानमिति ज्ञेयम् ।

1 पौर्वापर्यायोगादप्रतिसंबद्धार्थकमपार्थकमिति । पौर्वापर्यं कार्यकारणभावः । तस्यायोगात् असंभवात् । शाब्दबोधजनकाकाङ्क्षाज्ञानाद्यभावादिति फलितार्थः । अप्रतिसंबद्धः असंबद्धः अर्थः प्रयोजनं शाब्दबोधरूपं यत्र तदपार्थकमित्यर्थः ।

2 प्रतिज्ञातार्थप्रतिषेधे इत्यादि प्रतिज्ञान्तरमित्यन्तं न्यायसूत्रम् । तद्व्याचष्टे—सर्वमनित्यमिति ।

अत्र प्रकरणे प्रायो न्यायसूत्रोदाहरणेनैव निग्रहस्थानस्वरूपं निरूपितं टीकायाम् ।

3 अविज्ञातार्थं चाज्ञानमित्यर्थ इति । अविज्ञातं चाज्ञानम् इति सूत्रपाठो ग्रन्थेषु दृश्यते । अविज्ञातमिति भावे क्तः । चकारात् पूर्वसूत्रात् परिषदा विज्ञातस्य त्रिरभिहितस्यापीत्यस्यानुकर्षः । इत्थं च तथाभूतस्याविज्ञानमज्ञानमिति सूत्रार्थः ।

किंचिदुद्भाव्यमात्तम् । यथा—विरोधः, अप्राप्तकालं, न्यूनम् , अधिकं, पुनरुक्तम् , अननुभाषणम् , अपसिद्धान्त इति सप्तकम् । यथा हेत्वाभासो निरनुयोज्यानुयोगश्चेति द्वयम् ।

अप्रतिभेति । कथामभ्युपगम्य तूष्णींभावोऽप्रतिभेत्यर्थः । वादिप्रतिवादिनोरेतच्च निग्रहस्थानमिति रहस्यम् ।

विक्षेप इति । कार्यव्यासङ्गात् कथाविच्छेद इत्यर्थः । कथामभ्युपगम्य सभ्येषु मिलितेषु ब्रवीति—'अद्य मे महत्प्रयोजनमस्ति ; तस्मिन्नवसिते पश्चात्कथयिष्यामि ' इति । यदि पुनस्तदानीमेव महत्प्रयोजनं सभ्या अभ्युपगच्छन्ति, तद्बाधकवशेन कथाविच्छेदेऽपि न पराजय इति ज्ञेयम् ।

मतानुज्ञेति । स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषप्रसङ्गो मतानुज्ञेत्यर्थः । पक्षोऽत्र सिद्धान्तो विवक्षितः; न पुनः सिषाधयिषेत्यादि । अभ्युपगमोऽपरिहरणम् । तेन सिद्धान्ते परोक्तं दूषणमपरिहृत्य परसिद्धान्ते दोषप्रसञ्जनं मतानुज्ञेति तात्पर्यार्थः । यथा 'भवांश्चोरः' इत्युक्ते 'त्वमपि चोरः' इत्युक्तवत इदं निग्रहस्थानमिति दिक् ।

पर्यनुयोज्योपेक्षणमिति । निग्रहं प्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणमित्यर्थ इति दिक् ।

यथा विरोध इति । प्रतिज्ञाहेत्वोर्विरोध इत्यर्थः । यथा 'गुणव्यतिरिक्तं द्रव्यं, भेदेनानुपलभ्यमानत्वात् ' इति ।

अप्राप्तकालमिति । अवयवविपर्यासवचनमप्राप्तकालमित्यर्थः । विपर्यासेन व्यत्यासेन वचनम् । अवयवानां प्रतिज्ञादीनां विपर्यासवचनम् । प्रतिज्ञादीनामर्थवशात् क्रमः । तेषां विपर्ययेणाभिधानमिति तात्पर्यार्थ इति । स्पष्टमेतदुदाहरणम् ।

न्यूनमिति । हीनम् ; अन्यतमेनाप्यवयवेन न्यूनमित्यर्थः । साधनाभावे साध्यसिद्धेरयोगादिति व्यक्तमेतत् ।

अधिकमिति । हेतूदाहरणाधिकमधिकमित्यर्थः । अस्य निग्रहस्थानत्वे कारणमेकेन कृतार्थत्वादितरानर्थक्यमिति । एतच्च निग्रहस्थानद्वयं [1]स्वस्वमताभ्युपगमापेक्षया न्यूनत्वेऽधिकत्वे च दूषणं विज्ञेयमिति दिक् ।

1 स्वस्वमताभ्युपगमापेक्षयेति । तेन त्र्यवयववादिनां मीमांसकानामवयवत्रयप्रयोगे न न्यूनत्वं निग्रहस्थानम् । न वा नैयायिकस्य पञ्चावयवप्रयोक्तुरधिकं निग्रहस्थानं भवति ।

तत्र हान्यादीनामशक्तिसंगूहनप्रकारत्वात्तत्त्वबुभुत्सुकथायां बुद्धिपूर्वकारिणां न संभवः । उद्भावनं तु यदनुद्भावने तत्त्वप्रतीतिव्याघातः,

पुनरुक्तमिति । शब्दार्थयोः पुनर्वचनं पुनरुक्तमित्यर्थः । एतच्चानुवादादन्यत्र दूषणं बोध्यम् । यथा 'नित्यः शब्दो नित्यः शब्दः' इति ।

अननुभाषणमिति । विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणमित्यर्थः । एतच्च प्रतिवादिनो निग्रहस्थानमवगन्तव्यमिति ।

अपसिद्धान्त इति । सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्ग इत्यर्थः । मीमांसासिद्धान्तमभ्युपगम्य कश्चित् 'अग्निहोत्रं स्वर्गसाधनम्' इत्याह । 'कथं पुनरग्निहोत्रक्रिया स्वयं ध्वस्ता सती स्वर्गस्य साधिका भवति?' इत्यनुयुक्तः प्राह — यथा क्रिययाराधितः परमेश्वरः फलं ददाति, राजादिवत्' इति । [1]तस्येश्वरानभ्युपगमादपसिद्धान्तो निग्रहस्थानमिति दिक् ।

यथा हेत्वाभास इति । अनुमितिप्रतिबन्धकयथार्थज्ञानविषयतावच्छेदकरूपवत्त्वमित्यर्थः । यथा 'शब्दोऽनित्यः शब्दत्वात्' इत्यादि ।

निरनुयोज्यानुयोग इति । अयं निग्रहस्थानाभियोग इत्यर्थः । अदोषे दोषोद्भावनमिति [2]सूत्रतात्पर्यार्थः । यथा सावयवत्वेन पृथिव्यादेः कार्यत्वसाधने परो ब्रूयात् — 'अप्रयोजकोऽयं हेत्वाभासः' इति । एवं वदत इदं निग्रहस्थानमिति दिक् ।

एतेषु निग्रहस्थानेष्वन्यत् दूषणभूषणादिकं सर्वं निग्रहस्थानपदार्थव्याख्यानावसरे स्पष्टतरमुपपादयिष्यामः ।

तत्त्वबुभुत्सुकथायामेतेषामुद्भावनं न संभवतीत्याह — तत्रेति । कथास्वित्यर्थः । तर्हि सूत्रोक्तद्वाविंशतिनिग्रहस्थानोपन्यासवैयर्थ्यापत्तिरित्याशङ्क्याह — [3]उद्भावनं

1 तस्येश्वरानभ्युपगमादिति । तस्य मीमांसकस्य ।

2 सूत्रतात्पर्यार्थ इति । 'अनिग्रहस्थाने निग्रहस्थानाभियोगः' इति न्यायसूत्रस्य तात्पर्यविषयीभूतोऽर्थ इत्यर्थः ।

3 तर्हि सूत्रोक्तद्वाविंशतिनिग्रहस्थानोपन्यासवैयर्थ्यपत्तिरित्याशङ्क्याह—उद्भावनमिति तत्त्वनिर्णयोद्देशेन प्रवृत्तायां वादकथायामशक्तिसंगूहनप्रकाराणां प्रतिज्ञाहान्यादीनां निग्रहस्थानानां नोद्भावनम् । अपितु यस्य निग्रहस्यनस्थानुद्भावने वादकथाप्रवृत्त्युद्देश्यस्य तत्त्वबोधस्य व्याघातः, तादृशविरोधादिनिग्रहस्थानस्यैवोद्भावनं नान्येषामिति भावः ।

तावन्मात्रस्यैव । स च साक्षाद्वा परंपरया वा । प्रथमो हेत्वाभासानुद्भावने निरनुयोज्यानुद्भावने च । द्वितीयस्तु विरोधाद्यनुद्भावने । तथाहि—विरोधो योग्यताविरहः, अप्राप्तकालता, आकाङ्क्षाविरहः । तस्मिन् सति विवक्षितवाक्यार्थप्रतिपत्तिव्यतिरेक इति विरोधादीनामुद्भावनामात्रम् । यद्यप्यन्येषामपि क्वचित्कथावसानिकत्वमस्ति, तथाप्यनावश्यकत्वादुपेक्षितमिति ।

## जल्पनिरूपणम् ।

वादानन्तरं जल्पो निरूप्यते, उभयस्थापनावत्त्वसाधर्म्यात् । स्वपक्षस्थापनाज्ञानजन्या विजिगीषुकथा जल्पः ।

त्विति । तावन्मात्रस्येति । निग्रहस्थानमात्रस्येत्यर्थः । स चेति । तत्त्वप्रतिपत्तिव्याघात इत्यर्थः । द्वितीयस्त्विति । परंपरया तत्त्वप्रतिपत्तिव्याघात इत्यर्थः । विरोध इति । प्रतिज्ञाविरोध इत्यर्थः । तस्मिन् सतीति । योग्यताकाङ्क्षान्यतरविरहे सतीत्यर्थः । कारणाभावे कार्यानुदय इति भावः ।

ननु विरोधादीनामेव कथावसानीयकत्वं कथम् ? पक्षहान्यादीनामपि कथावसानीयकत्वसंभवादित्याशङ्क्य सूत्रकारानुक्तत्वेनानावश्यकत्वात्तदुद्भावनमुपेक्षितमिति शङ्कोत्तराभ्यामाह—यद्यपीत्यादिना ।

## जल्पनिरूपणम्

वादं सप्रपञ्चं निरूप्य क्रमप्राप्तं जल्पं निरूपयितुं प्रतिजानीते—वादेति । वादनिरूपणानन्तरमित्यर्थः । उभयेति । शब्दे नित्यत्वानित्यत्वोभयस्थापनावन्तौ कृतकत्वश्रावणत्वहेतू । तयोर्भावः । उभयस्थापनावत्त्वम् । तदेव साधर्म्यम् । तस्मादित्यर्थः । जल्पलक्षणमाह—स्वपक्ष इति ।

[1]वस्तुतस्तु—"यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः" इति सूत्रम् । तस्यायमर्थः—यथोक्त वादलक्षणे यदुपपन्नं योग्यं तद्यथोक्तोपपन्नम् । तेनोपपन्नः संबद्धः । यथोक्तोपपन्नोपपन्न इत्येकस्योपपन्नशब्दस्य लोपो द्रष्टव्यः, [2]सौत्रत्वात् ।

1 न्यायसूत्रार्थवर्णनपूर्वकं साक्षात्सूत्रोक्तं जल्पलक्षणं निरूपयितुमारभते–वस्तुतस्त्विति ।

2 सौत्रत्वादिति । यथोक्तोपपन्नोपपन्न इति वक्तव्ये मध्यमपदलोपिसमासाश्रयणेनैकस्यो-

प्रवृत्तिक्रमस्तु—विप्रतिपत्तिवाक्यानन्तरं वादिना स्थापनायां कृतायां मध्यस्थेनानूद्य दत्ते, प्रतिवादिना वादिपक्षे दूषणमभिधाय स्वपक्षस्थापना कर्तव्या । वादिना परावृत्य प्रतिवादिनः स्थापना दूष्येति ।

केचिदत्रेत्थं कथाक्रममाहुः—साध्यं प्रयुज्य संक्षेपतो विस्तरतो वा हेत्वाभासानुद्धृत्य वादिनि विरते, अनुक्तोच्यमानाभासबहिरुक्तग्राह्यनिग्रहस्थानालाभे वादिवाक्यमनूद्य दूषयित्वा प्रतिवादी स्वपक्षं स्थापयेत् । एवमेव परावृत्य दूषणमत्र कुर्यात् । एवंविधनिग्रहस्थानलाभे तु तावतैव कथा-

साधनं चोपालम्भश्च साधनोपालम्भौ । छलजातिनिग्रहस्थानैः साधनोपालम्भौ यस्य स तथोक्तः । यथोक्तोपपन्नश्चासौ छलजातिनिग्रहस्थानसाधनोपालम्भश्चेति । यद्यपि छलादीनामसदुत्तरत्वात्परमार्थतस्तैः स्वपक्षसाधनं परपक्षोपालम्भश्च कर्तुं न शक्यते, तथापि भ्रान्तानां साधनोपालम्भबुद्धिजननात् साधनोपालम्भहेतुत्वमुक्तमिति । यद्वा प्रमाणैरेव साधने उपालम्भे च क्रियमाणे तद्विघाताय परैः प्रयुक्तानां छलजात्यादीनामनुद्भावने प्रमाणेषु दूषितत्वबुद्ध्या साधनमुपालम्भश्च न स्यात् । उद्भावने तु छलादीन्येवासद्दूषणत्वेन प्रतीतानि साधनोपालम्भहेतूनां प्रमाणानामङ्गभावं भजन्त इति पराम्पर्येण छलादीनां तद्धेतुत्वं चेति । प्रतिवादितत्त्वमपेक्ष्य प्रतिपक्ष उच्यत इति दिक् ।

स्वाभिमतं जल्पकथाप्रवृत्तिक्रमं दर्शयति—**प्रवृत्तिक्रमस्त्विति** । **विप्रतिपत्तीति** । विरुद्धार्थप्रतिपादकवचनद्वयी विप्रतिपत्ति. ।

वैशेषिकमतं दर्शयति—**केचिदिति** । कथाक्रममेव दर्शयति—**साध्यमिति** । **उद्धृत्येति** । ‘नायमसिद्धः, तल्लक्षणरहितत्वात्’ इत्यादिना हेत्वाभासानुद्धृत्येत्यर्थः । **अनुक्तेति** । अत्र द्वन्द्वान्ते श्रूयमाणो ग्राह्यशब्दः प्रत्येकमभिसंबध्यते । अनुक्तग्राह्यं चोच्यमानग्राह्यं [1]चाभासबहिरुक्तग्राह्यं च । तानि च तानि निग्रहस्थानानि च । तेषामलाभेऽप्राप्तावित्यर्थः । **एवंविधेति** । एवंविधनिग्रहस्थानानामनुक्तग्राह्यादिनिग्रहस्थानानां लाभे प्राप्तावित्यर्थः । अनुक्तग्राह्यादिस्वरूपं दर्शयति—**तत्रेत्यादिना**

पपन्नशब्दस्य लोपं कृत्वा यथोक्तोपपन्न इत्युक्तिर्वाक्यलाघवमाश्रित्य प्रवृत्ता, यतः सूचकं सूत्रमिति भावः ।

1 आभासबहिरुक्तग्राह्यमिति । हेत्वाभासातिरिक्तमुक्तग्राह्यनिग्रहस्थानमित्यर्थः ।

विरतिः, न साधनविचारावसरः । तत्रानुक्तग्राह्यमप्रतिभादि, अवचन-रूपत्वात् । उच्यमानग्राह्यमप्राप्तकालादि, वचनविपर्यासरूपत्वात् । आभास-बहिरुक्तग्राह्यं प्रतिज्ञाविरोधादि, अयोग्यतारूपत्वात् अयोग्यतायाः पदार्थ-प्रतिसंधानपूर्वकत्वादिति । तन्न । अवयववाक्येनैव सकलरूपस्य दर्शितत्वात् तदाभासोद्धारस्याधिकत्वात् । अशेषरूपसंपन्नश्च हेत्वाभासश्चेति विरुद्धम्; अप्राप्तकालादीनामप्युक्तग्राह्यत्वाच्च । आकाङ्क्षाविरहस्य तत्र दूषणत्वम् । आकाङ्क्षाविरहश्च पदार्थप्रतिसंधानपूर्वक इत्युक्तग्राह्यतैव तेषां, नोच्यमान-ग्राह्यतेति ।

तदयं स्थापनोपक्रमो दूषणोपक्रमश्च । तत्राद्यः प्रसिद्ध एव । द्वितीयस्तु वादिनोः परस्परमताभिज्ञताशौण्डीर्येणान्योन्यसंमत्या । यत्तु खण्डनकृतोक्तम्—"जल्पस्त्वेका कथा न संभवत्येवासामयिकी,

पदार्थप्रतिसंधानपूर्वकत्वादित्यन्तेत । दूषयति—तन्नेति । अवयवेति । पञ्चा-वयवोपपन्नमहावाक्यप्रदर्शनेनैवेत्यर्थः । ननु 'उपायस्यानुपायता दोषः, न तूपाया-न्तरसत्त्वम्' इति न्यायेन हेत्वाभासनिराकरणमपि स्यादित्यत आह—तदाभासो-द्धारस्येति । अधिकत्वादिति । अधिकाख्यनिग्रहस्थानत्वादित्यर्थः । तर्हि हेत्वा-भासता स्यादित्यत आह—अशेषेति । निगदव्याख्यातमन्यत् ।

महाखण्डनकारोक्तं दूषणं दूषयितुमुपन्यस्यति—यत्त्विति । [1]अन्यथेति । उभयशरीरत्वाभाव इत्यर्थः । परिहरति—तन्नेति । दूषणमेव प्रतिपादयति—तदा हीति । जल्पस्य कथाद्वयरूपत्वमाशङ्कते—अथेति । प्रतिबन्द्या परिहरति—नेति । प्रागुक्तमेवेति । उभयस्थापनावत्त्वसाधर्म्यादित्यादिनोक्तमेवेत्यर्थः ।

1 अन्यथेति उभयशरीरत्वाभाव इत्यर्थ इति । वितण्डाद्वयशरीरत्वाभाव इत्यर्थः । अत्र मूलं 'जल्पस्त्वेका कथा न संभवत्येवासामयिकी' इति । नैयायिकसंकेतेनैव जल्प एका कथा, समयं संकेतं विना न्यायतो विचार्यमाणे जल्प एका कथा न संभवतीत्यर्थः ।
मूले वितण्डाद्वयशरीरत्वादिति । यदा प्रतिवादी छलजात्यादिभिर्वादिपक्षं दूषयति, तदास्य स्वपक्षसाधनावसराभावात् दूषयित्वैव निवर्तत इत्येका वितण्डा । दूषितश्च वादी प्रत्यावृत्य यदा प्रतिवादिपक्षं दूषयति, तत्पक्षस्य साधनानर्हत्वात् सोऽपि प्रतिपक्षं दूषयित्वैव निवर्तत इत्यपरा वितण्डा । ततश्च वितण्डाद्वयव्यतिरेकेण जल्पस्य स्वरूपं नास्तीति भावः । अन्यथा जल्पद्वयेनापि

वितण्डाद्वयशरीरत्वात् । अन्यथा जल्पद्वयेनापि किमित्येका "कथा न कल्प्यते ?" इति । तन्न । तदा हि जल्पस्य वितण्डाद्वयशरीरता संभाव्येत, यदि कथाद्वयमिदं स्यात् । किंचैकस्मिन्नेव पक्षे साध्यस्थापनातद्दूषण-साध्यप्रतिस्थापनातद्दूषणरूपवादिप्रतिवादिवाक्यैरेका कथा जन्यते । तथाच क्व वितण्डाद्वयशरीरत्वम् ? अथ—वादिप्रतिवादिवाक्याभ्यां मिलितत्वान्नैकवाक्यता ; अतः कथाद्वयमेवेति चेत् ; न । वितण्डाया अपि वादिप्रति-वादिशब्दरूपत्वात् कथाद्वैधप्रसङ्गः । ततो वितण्डाद्वयशरीरत्वादिति यदुक्तं तद्भ्रममेव ।

ननु सुहृद्भावेन पृच्छामः—जल्पद्वयेन या कथा, तस्याः क्वान्तर्भावः? यदि जल्पद्वयेनैका कथा संभवति, तदा जल्पलक्षणाक्रान्तत्वाज्जल्प एव । जल्पलक्षणं तु प्रागुक्तमेव ।

## वितण्डानिरूपणम् ।

जल्पानन्तरं वितण्डा निरूप्यते, तदत्यन्तसाधर्म्यात् । प्रतिवादि स्थापनेतरस्थापनाज्ञानजन्या विजिगीषुकथा वितण्डा । वादवितण्डा तु कथैव नास्ति । यदि केवलतत्त्वबोधार्था, तदा वाद एव । यदि जयार्था, तदा वितण्डैव । अथोभयार्था, तदा वादजल्पोऽपि कथान्तरं स्यात् ।

### वितण्डानिरूपणम्

जल्पेति । जल्पनिरूपणानन्तरमित्यर्थः । वितण्डालक्षणमाह—प्रतिवादीत्यादि । वादवितण्डा केवलतत्त्वबोधार्था वा ? जयार्था वा ? तत्त्वबोधजयोभयरूपार्था वा ? इति विकल्प्याद्ये कल्पे वादो भवेदिति दूषयति—यदीति । द्वितीयं प्रत्याह—यदि जल्पेति । तृतीयं दूषयति—अथोभयेति ।

शङ्कते—नन्विति । निषेधति—मैवमिति । तस्या इति । द्वितीयपक्ष-स्थापनाहानेरित्यर्थः । तत्र हेतुमाह—दूषणत्वेनेति ।

किमित्येका कथा न कल्प्यत इति । स्वपक्षासाधनपुरःसरं परपक्षाणामुपालभ्य, पुनः परपक्षोपा-लम्भपुरःसरं स्वपक्षसमर्थनमेका चतुर्थी कथा कल्प्यताम् । यदि कथाद्वयरूपत्वान्न सा एका कथा, तदा जल्पोऽपि नैका, वितण्डारूपकथाद्वयरूपत्वादिति भावः ।

नन्तु द्वितीयसाधनहानिः कथम् ? अत्र दूषणवचनस्यानुमानप्रयोगरूपतयैव संभवतीति । मैवम् । द्वितीयपक्षस्थापनाहानिरत्र विवक्षिता । तस्यास्तु न दूषणत्वम्, दूषणत्वेनानुपन्यासात् । न द्वितीयसाधनमात्रहानिः ।

का पुनः स्थापना ? परिगृहीतपक्षसाधकप्रमाणमिति चेत्; न, प्रतिरोधबाधयोरतिप्रसङ्गात् । न च वाच्यं तत्र साधकत्वं नास्तीति, बाधकस्य विपरीतसाधकत्वात् । उच्यते—दूषणत्वेनानुपन्यस्य मानविप्रतिपत्तिकोटिसाधकप्रयोगविशेषः स्थापना । बाधप्रतिरोधयोस्तु दूषणत्वेनोपन्यासान्न तथा प्रमितिः ।

इति कथानिरूपणम् ।

## हेत्वाभासनिरूपणम्

अथ हेत्वाभासा निरूप्यन्ते—तत्त्वनिर्णयविजयप्रयोजकत्वात् । यद्यपि हेत्वाभासत्वं केवलान्वयित्वान्नेतरभेदसाधकम्, तथापि तत्तदनुमितिहेत्वाभासत्वस्य तादृशत्वात् तन्निरूप्यते ।

स्वाभिमतस्थापनालक्षणं वक्तुमनाकाङ्क्षाभिधाननिरासायाकाङ्क्षामुद्भावयति—**का पुनरिति** । शङ्कते—**परिगृहीतेति** । परिगृहीतो यः पक्षः, तस्य साधकं प्रमाणमिति समासः । अतिव्याप्त्या दूषयति—**नेति** । परिगृहीतपक्षसाध्यकत्वाभावाद्बाधप्रतिरोधयोर्नातिव्याप्तिरित्याशङ्क्याह—**न चेति** । नास्तीत्यनेन संबध्यत इति योजना ।

सिद्धान्तमारभते—**उच्यत इति** । बाधप्रतिरोधयोर्दूषणत्वेनोपन्यस्यमानत्वान्नातिव्याप्तिरित्याह—**बाधेति** ।

इति कथानिरूपणम्

## हेत्वाभासनिरूपणम्

सद्धेतुबुद्धावत्यन्तोपयोगित्वाद्धेत्वाभासान् निरूपयितुमुपक्रमते—**अथेति** । वितण्डानिरूपणानन्तरमित्यर्थः । निरूप्यन्त इति शेषः । तत्र हेतुमाह—**तत्त्वनिर्णयेति** । ननु हेत्वाभासत्वस्य केवलान्वयित्वादितरभेदसाधकत्वं न संपनीपद्यत इत्याशङ्क्य तत्तद्-

तच्च तत्तदनुमितिकारणीभूताभावप्रतियोगिज्ञानविषयत्वं वा? तत्तदनुमितिकारणीभूतज्ञानाविषयत्वं वा? व्याप्तिपक्षधर्मताशून्यत्वं वा?

नुमितिहेत्वाभासत्वस्येतरभेदसाधकत्वात्तन्निरूपणं युज्यत इति शङ्कोत्तराभ्यामाह — यद्यपीत्यादिना निरूप्यत इत्यन्तेन ग्रन्थेन।

ननु हेत्वाभासत्वं दुर्निरूपं, विकल्पासहत्वादिति शङ्कते—तच्चेति। तत्तदनुमितीति। तत्तदनुमितौ कारणीभूतो योऽयमभावः व्यभिचारादिज्ञानाभावः, तत्प्रतियोगि ज्ञानं व्यभिचारादिज्ञानं, तद्विषयत्वमित्यर्थः; नन्विदमसंगतम्। 'वह्निव्यभिचारी धूमः' इति भ्रमविषयीभूतधूमादावतिव्याप्तेः। न च तादृशयथार्थज्ञानविषयत्वं तत्; अतो नोक्तातिव्याप्तिरिति वाच्यम्; [1]ज्ञानस्य विशेषणत्वे अज्ञायमानतादशायां नित्यदोषे साधारणानैकान्तिकादावव्याप्तेः। उपलक्षणत्वेऽसाधारणसत्प्रतिपक्षोत्तीर्णतादशायां सद्धेतावतिव्याप्तेरित्यरुचेराह—तत्तदनुमितीति। तत्तदनमितौ कारणीभूतं यज्ज्ञानं परामर्शः, तदविषयत्वमित्यर्थः। सिद्ध्यसिद्धिपराहतत्वेन तादृशज्ञानाविषयत्वस्य वक्तुमशक्यत्वादित्यस्वरसादाह—व्याप्तीति। ननु यत्किंचिद्व्याप्तिपक्षधर्मताशून्यत्वं तत्? उत प्रकृतव्याप्तिपक्षधर्मताशून्यत्वम्? नाद्यः, सद्धेतावतिव्याप्तेः' तस्य तत्त्वात्। [2]न द्वितीयः, असंभवादित्यरुचेराह—व्याप्तिपक्षधर्मताप्रमितत्वेति।

1 ज्ञानस्य विशेषणत्वेऽज्ञायमानतादशायां नित्यदोषे साधारणानैकान्तिकादावव्याप्तेरित्यादि। सर्वदा हेतोर्दुष्टताव्यवहारनियामको दोषो नित्यदोषः। साधारणानैकान्तिको नित्यदोष इत्युच्यते। असाधारणः पक्षे साध्यसंदेहदशायामेव। हेतोर्दुष्टताव्यवहारस्तदानीमेव निश्चितसाध्यवद्व्यावृत्तत्वस्य हेतौ सत्त्वात्। एवं प्रतिहेतुपरामर्शेन प्रकृतहेतुपरामर्शस्य संवलनदशायामेव वस्तुतः सद्धेतावसद्धेतौ वा सत्प्रतिपक्ष इति व्यवहार इति सोऽप्यनित्यदोषः। अनुमितिकारणीभूताभावप्रतियोगिज्ञानविषयत्वमित्यत्र ज्ञानस्य विशेषणत्वविवक्षायां व्यभिचारज्ञानशून्यतादशायां तादृशज्ञानविशिष्टविषयत्वं नास्तीति नित्यदोषे साधारणेऽव्याप्तिः। ज्ञानस्योपलक्षणत्वविवक्षायामसाधारण्योत्तीर्णतादशायां पक्षे साध्यस्य साध्याभावस्य वा निश्चयदशायां कालान्तरीयतादृशज्ञानविषयत्वमादायातिव्याप्तिः। प्रतिपरामर्शसंवलनाभावदशायामपि कालान्तरीयज्ञानविनयत्वमादायातिव्याप्तिरिति समुदायार्थः।

2 न द्वितीयः, असंभवादिति। दुष्टहेतौ प्रकृतसाध्यव्याप्तेः प्रकृतपक्षधर्मताया वा हेतावप्रसिद्धत्वेन प्रकृतसाध्यव्याप्तिविशिष्टप्रकृतपक्षधर्मताया अप्रसिध्या तच्छून्यत्वं सुतरामप्रसिद्धमित्यसंभव इत्यर्थः।

व्याप्तिपक्षधर्मताप्रमितत्वशून्यत्वं वा? नाद्यः। समूहालम्बनेन यत्र घटपटयोर्गुणवत्त्वं गृहीत्वा तत्रैव व्याप्तिं स्मृत्वा, तत्रैव लिङ्गपरामर्शादेकत्र द्रव्यत्वमपरत्रानित्यत्वमेकत्रैव वा द्वयमनुमीयते, तत्र समूहालम्बनरूप-तृतीयलिङ्गपरामर्शविषयस्य गुणवत्त्वस्य घटद्रव्यत्वसाधने हेत्वाभासत्व-प्रसङ्गात्। न द्वितीयः। अत्रैव घटानित्यत्वसाधने गुणवत्त्वस्याहेत्वा-भासत्वप्रसङ्गात्, अनुमितिकारणीभूतज्ञानविषयत्वस्यैव विद्यमानत्वात्। एवमन्ययत्राप्यूह्यम्। न तृतीयः। शब्दानित्यत्वसाधने कृतकत्वे श्रावणत्वेन प्रतिपक्षिते तस्यां दशायां हेत्वाभासत्वं न वर्तेत। नापि चतुर्थः; पूर्व-दूषणेनैव निरस्तत्वात्, व्याप्तिपक्षधर्मतातत्प्रमितीनां सत्वात्। यद्वा तथाविधसमूहालम्बन एवातिव्याप्तिः। अपिच यत्किंचिद्व्याप्तिपक्षधर्मता-दिव्यतिरेकस्य चाप्रसिद्धिः, प्रतियोगिनोऽप्रमितेः।

प्रमितत्वस्य सिद्धत्वे तच्छून्यत्वस्य वक्तुमशक्यत्वात् तस्यासिद्धत्वे सुतरां वक्तुमशक्य-त्वादिति दूषणं बोध्यम्। तदेवं विकल्प्य यथोद्देशं दूषयति—नाद्य इति। तत्तदनु-मितिकारणीभूताभावप्रतियोगिज्ञानविषयत्वमिति पक्ष इत्यर्थः। अतिव्याप्त्या दूषयति—**समूहेत्यादिना हेत्वाभासत्वप्रसङ्गादित्यन्तेत ग्रन्थेन। न द्वितीय इति।** तादृशज्ञानाविषयत्वमिति पक्ष इत्यर्थः। अव्याप्तिग्रस्तत्वात् दूषयति—**अत्रैव घटानि-त्यत्वेति। न तृतीय इति।** व्याप्तिपक्षधर्मताशून्यत्वमिति पक्ष इत्यर्थः। लक्षण-स्याव्याप्तिं प्रदर्शयति—**शब्दानित्यत्वेत्यादिना न वर्तेतेत्यन्तेन ग्रन्थेन। नापि चतुर्थ इति।** प्रमितत्वशून्यत्वमिति पक्ष इत्यर्थः। दोषान्तरमप्याह—**यद्वेति।** दूषणान्तरमप्याह—**अपिचेति।**

ननु हेतुलक्षणरहितत्वे सति हेतुवदवभासमानत्वं हेत्वाभासत्वमिति चेत्; मैवम्, विकल्पासहत्वात्। [1]पक्षधर्मत्वादिपञ्चरूपरहितत्वं वा? यस्य हेतोर्यानि रूपाणि सन्ति, तदन्यतररूपरहितत्वं वा? नाद्यः, व्यतिरेक्यादावतिव्याप्तेः। न द्वितीयः, अननुगमापत्तेः। एवंच सति हेतुवदवभासमानत्वस्य वैयर्थ्यं स्यात्। ननु धूमानुमाने

1 पक्षधर्मत्वादिपञ्चरूपरहितत्वमिति। पक्षधर्मत्वं, सपक्षधर्मत्वं, विपक्षासत्त्वम्, अबाधितत्वम्, असत्प्रतिपक्षत्वं चेति गमकतौपयिकानि पञ्च रूपाणि।

उच्यते—तत्तदनुमितिकारणीभूततृतीयलिङ्गपरामर्शप्रमात्वनिरूपकव्याप्तिपक्षधर्मतावैशिष्ट्यव्यतिरेक एव हेत्वाभासत्वम् । तथाहि—विरुद्धसव्यभिचारयोर्व्याप्त्यभावात्प्रमाभूतलिङ्गपरामर्शव्यतिरेकः । आश्रयासिद्धस्वरूपासिद्ध्योः पक्षधर्मताविरहात् । व्याप्यत्वासिद्धे ज्ञानस्यैव विरहात् । सिद्धसाधनस्य यदि दोषत्वं तदा पक्षधर्मताविरहादेव । पक्षधर्मतावच्छेदकस्य संदेहस्य विरहाद्बाधोऽपि यद्वा व्याप्तिविरहात् । प्रतिपक्षे तु परस्परप्रतिबन्धात् तृतीयलिङ्गपरामर्शानुदय इत्यग्रे वक्ष्यते ।

घटादावतिव्याप्तिनिवृत्तये तद्विशेषणोपादानमिति चेत्, न, तस्य तत्र हेत्वाभासत्वादेव । न च वाच्यं घटे न कथं हेत्वाभासपदप्रयोग इति । विवेकिनामस्त्येव । अपिच हेतुवदवभासमानत्वमिति वदता वक्तव्यम्—यत्किंचिद्रूपेण हेतुवदवभासमानत्वं वा ? [1]पञ्चम्यन्तादिरूपेण हेतुवदवभासमानत्वं वा ? नाद्यः, घटादावतिव्याप्तेः; तस्य तत्र सत्त्वात् । न द्वितीयः, पूर्वोक्तदोषानतिवृत्तेः । किंच पूर्णलक्षणस्याज्ञायमानतादशायां नित्यदोषे साधारणानैकान्तिकादावव्याप्तेरिति पूर्वपक्षसंक्षेपः ।

निरुक्तानुपपत्तिपरिहारपूर्वकं सिद्धान्तं करिष्यमाणः प्रतिजानीते—**उच्यत इति** । सव्यभिचारादिसाधारणं लक्षणमभिधत्ते—**तत्तदनुमितीति** । तत्तदनुमितौ कारणीभूतो यस्तृतीयलिङ्गपरामर्शः, [2]तन्निष्ठं यत् प्रमात्वं तद्वति तत्प्रकारकानुभवत्वं, तन्निरूपकं यद्व्याप्तिपक्षधर्मतावैशिष्ट्यं तद्व्यतिरेकस्तदभाव इत्यर्थः । सव्यभिचारादिषु लक्षणसद्भावं दर्शयति—**तथाहीत्यादिना वक्ष्यत इत्यन्तेन** ग्रन्थेन ।

व्यतिरेक्यादावतिव्याप्तेरिति । केवलव्यतिरेकिणि केवलान्वयिनि चाव्याप्तेरित्यर्थः । प्रथमे सपक्षसत्त्वस्य, द्वितीये विपक्षासत्त्वस्य चाभावादिति भावः ।

1 पञ्चम्यन्तादिरूपेण । पञ्चम्यन्तादिपदबोध्यत्वेन रूपेण ।

2 तन्निष्ठं प्रमात्वमिति । अत्र हेतुवदाभासमाना दुष्टहेतवो लक्ष्यन्ते । परामर्शे लिङ्गांशे व्याप्तिपक्षाधर्मतावैशिष्ट्यं भासते । तादृशवैशिष्ट्यस्य सत्त्व एव परामर्शस्य प्रमात्वं भवति, विषयाबाधात् । तथाच लिङ्गे यादृशव्याप्तिपक्षधर्मतावैशिष्ट्याभावात् प्रकृतानुमितिजनकपरामर्शः प्रमारूपो न भवति, तादृशवैशिष्ट्यरहितो हेतुवदवभासमानो हेत्वाभास इत्यर्थः । तादृशवैशिष्ट्यव्यतिरेकश्च वैशिष्ट्यघटकव्याप्तेः पक्षधर्मतायास्तद्घटकपक्षतायाश्च व्यतिरेकाद्भवति । सत्प्रतिपक्षे शब्दोऽनित्यः कृतकत्वादित्यादिसद्धेतौ व्याप्तिपक्षधर्मतावैशिष्ट्यस्य सत्त्वेऽपि यद्वा विरोधिव्याप्तिद्वयसंस्कारोद्बोधे कृतकत्वश्रावणत्वज्ञानयोः परस्परप्रतिबन्धान्न

[1]वस्तुतस्तु—अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकरूपवत्त्वं हेत्वाभासत्वम्। यद्यपि सत्प्रतिपक्षे परामर्शस्य ज्ञानं न प्रतिबन्धकम्, तथाप्यनुमितिप्रतिबन्धकत्वेनैतद्विषयः प्रतिसाधनम्। यद्विषयतावच्छेदकं पूर्वसाधनम्, स्वरूपसंबन्धेन तद्वत्ता पूर्वसाधनता त्वस्त्येव। तथाच दुष्टहेतौ हेतुदोषव्यभिचारादौ च हेत्वाभासपदप्रयोगे [2]वत्साहित्यासाहित्याभ्यामुभयलक्षणमप्युक्तं भवति। यद्यपि 'धूमो वह्निव्यभिचारी' इति ज्ञानस्यानुमितिप्रतिबन्धकत्वेन तद्विषयतावच्छेदके व्यभिचारो भवत्येव; तथापि [3]तद्वत्त्वं न धूमेऽस्तीति नातिव्याप्तिः, अत्रानुमितितत्करणान्यतरसाक्षात्प्रतिबन्धकत्वपुरस्कारेणानुमितिप्रतिबन्धकत्वस्योक्तत्वात्। अत एव—अनुमितिप्रतिबन्धकत्वं साक्षाद्वा? परंपरया वा? नाद्यः, व्यभिचारादावव्याप्तेः। न द्वितीयः, व्यभिचारज्ञानद्वारा व्याप्तिज्ञानविघटकोपाधावतिव्याप्तेः; [21]बाधसत्प्रतिपक्षयोरव्याप्तेश्चेत्यादि दूषणं निरस्तमिति दिक्।

हेत्वाभाससामान्यलक्षणलक्षितास्ते कतीति जिज्ञासायामाह—**ते चेति**। **एक** एवेत्यत्र विद्यमान एवकारोऽधिकसंख्याव्यवच्छेदपरः। असिद्ध एक एव हेत्वाभास इत्यत्र हेतुमाह—**व्याप्तीति**। **सर्वत्रेति**। सव्यभिचारादिष्वित्यर्थः। मतान्तरं

व्याप्तिस्मृतिजनकत्वम्। ततश्च विरोधिज्ञानप्रतिबद्धज्ञानत्वमेव दूषकताबीजम्' इति मूले वक्ष्यमाणरीत्या प्रकृतानुमितिजनकलिङ्गपरामर्शप्रमाया अनुत्पादात् निरुक्तपरामर्शनिष्ठप्रमात्वनिरूपकत्वरूपविशेषणाभावप्रयुक्तस्तादृशनिरूपकत्वविशिष्टव्याप्तिपक्षधर्मवैशिष्ट्याभावो वर्तत इति सर्वत्र हेत्वाभासलक्षणसंगतिः।

1 हेत्वाभासस्थले अनुमितिजनकपरामर्शस्य प्रमात्वाभावादनुमितिजनकपरामर्शनिष्ठप्रमात्वनिरूपकेत्यादिलक्षणस्यासंगतत्वं मनसि निधाय स्वयं हेतुदोषदुष्टहेत्वोर्लक्षणं निरूपयितुमारभते—वस्तुतस्त्विति। अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकरूपवत्त्वमिति। धूमव्यभिचारी वह्निरिति ज्ञानस्यानुमितिप्रतिबन्धकत्वात् तद्विषयतावच्छेदकपदेन व्यभिचारमादाय-तद्वति वह्नौ दुष्टहेतौ लक्षणसमन्वयः।

2 वत्साहित्यासाहित्याभ्यामिति। वत्कारस्याभावे अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकत्वमिति लक्षणं पर्यवस्यति। तच हेतोराभासा इति व्युत्पत्त्या हेत्वाभासपदबोध्यानां दोषाणां लक्षणं भवति। वत्कारसाहित्ये निरुक्तप्रतिबन्धकज्ञानविषयतावच्छेदकरूपवत्त्वं लक्षणं पर्यवसन्नम्। तच हेतुवदाभासन्त इति व्युत्पत्त्या हेत्वाभासपदबोध्यदुष्टहेतोर्लक्षणं भवातीत्यर्थः।

3 तद्वत्त्वं न धूमेऽस्तीति। विपक्षवृत्तित्वरूपव्यभिचारस्य धूमेऽभावादिति भावः।

ते च सव्यभिचारविरुद्धप्रकरणसमासिद्धबाधिताः पञ्च । असिद्ध एक एव हेत्वाभास इति केचित् , व्याप्तिपक्षधर्मतातत्प्रमित्यन्यतमव्यतिरेकस्य सर्वत्र सत्त्वात् । अन्ये तु—सकलकार्यसाधारणदोषत्वात् प्रतिबन्धस्य नासाधारणहेत्वाभासत्वं प्रतिपक्षस्य । बाधस्याप्यनैकान्तिकेऽन्तर्भावान्न पृथक्त्वमिति । आधिक्यं विभागस्य ; न्यूनमपि । तथाच लीलावतीकारः—'पदैकदेशवृत्तिरनध्यवसितोऽधिकः ' इत्याह । एवं सोपाधिरपीति ।

उच्यते—यद्यपि विरुद्धानैकान्तिकयोर्व्याप्तिप्रमाविरहः , तथाप्यनैकान्तिके संशयकारणीभूतसाधारणासाधारणधर्मज्ञाननिबन्धनप्रमाव्यतिरेकः । विरुद्धे तु साध्यासमानाधिकरणधर्मग्रहणनिबन्धनः । तदुपजीव्यत्वात् तयोरेवोद्भावनम् , न तु प्रमाव्यतिरेकरूपस्यासिद्धस्य ।

दर्शयति—अन्ये त्विति । आधिक्यमिति । [1]अनध्यवसितोपाध्योरुभयोः सत्त्वादाधिक्यमिति भावः । न्यूनत्वमपीति । प्रतिपक्षादेरनैकान्तिकेऽन्तर्भूतत्वान्न्यूनत्वमिति भावः । हेत्वाभासाधिक्यमित्यत्र लीलावतीकारसंमतिमाह—तथाचेति । 'सर्वमनित्यं कार्यत्वात्' इत्युदाहरणमनध्यवसितस्य द्रष्टव्यमिति भावः ।

स्वसिद्धान्तमारभते—उच्यत इति । पूर्वपक्षं दूषयितुमनुवदति—यद्यपीति । निषेधति—तथापीति । व्याप्तिप्रमाव्यतिरेकस्य सत्त्वेऽपीत्यर्थः । संशयेति ।

1 अनध्यवसितोपाध्योः सत्त्वादाधिक्यमिति भाव इति । सव्यभिचारविरुद्धप्रकरणसमासिद्धबाधिताः पञ्च हेत्वाभासा इति विभागोऽसमञ्जसः । हेत्वाभासत्वेन संग्राह्यस्यानध्यवसितस्य सोपाधेश्चानभिधानात् न्यूनतादोषो विभागे वर्तते । सकलकार्यसाधारणस्यानुमित्यसाधारणदोषत्वाभावात् सत्प्रतिपक्षस्य चानैकान्तिकेऽन्तर्भावात् बाधितप्रकरणसमयोरतिरिक्तहेत्वाभासत्वाभावात् तयोः प्रवेशेन विभागे अधिकतादोषोऽस्तीति मूलार्थः श्लिष्टः प्रतिभाति । वस्तुतस्तु गमकतौपयिकरूपेषु पञ्चस्वेकैकस्याभावादेकैको हेत्वाभास इति पञ्च हेत्वाभासाः संपद्यन्ते । पक्षवृत्तित्वरूपाभावाद्विरुद्धः, विपक्षावृत्तित्वाभावादनैकान्तिकः अबाधितत्वरूपाभावात् बाधितः कालात्ययापदिष्टः, असत्प्रतिपक्षितत्वाभावात् सत्प्रतिपक्षः प्रकरणसमश्च हेत्वाभासो भवति । अतो हेत्वाभासानां पञ्चधा विभागेऽतीव रमणीय इति बोध्यम् ।

ननु आश्रयासिद्धस्वरूपासिद्धतद्विशेषणासिद्धेषु सर्वत्र तदभावज्ञान-निबन्धन एव प्रमाव्यतिरेकः; ततस्तेषामपि दूषणान्तरत्वं स्यात्, उपजीव्य-त्वात्। मैवम्। अभावज्ञानाद्भावप्रमाव्यतिरेक इति सर्वत्र नैतावतैवासाधा-रणत्वमायाति। तच्चेह निरूपयितुमारभ्यत इति। व्याप्यत्वासिद्धे तु यद्य-प्यनुकूलतर्काभावप्रतिकूलतर्कोपाधीनामुपजीव्यत्वमस्ति, तथापि न तेषां पृथग्दूषणत्वम्। न ह्यमीषां सत्त्वेऽप्यनुमितौ काचित् क्षतिरस्ति। किंतु व्याप्तिज्ञानप्रतिबन्धकत्वममीषां नानुमितिप्रतिबन्धकत्वम्। अतो व्याप्यत्वा-सिद्धेरेव दूषणत्वम्, न त्वमीषाम्। अनैकान्तिकस्य संशयजनकत्वम्। तस्मिन् कालेऽन्यस्य विशेषधर्मस्याग्रहणात् पक्षे संशय एवोत्पद्यते, न त्वनुमितिः। विरुद्धस्यापि पक्षे साध्याभावप्रमाजनकत्वात्साक्षादेवानुमिति-प्रतिबन्धकत्वात् पृथग्दूषणत्वम्। न त्वेवं प्रतिकूलतर्कादीनां साक्षादनुमिति-प्रतिबन्धकत्वम्। बाधस्यापि पक्षे साध्याभावप्रमारूपस्य साक्षादनुमिति-प्रतिबन्धकत्वात्पृथग्दूषणत्वम्, न तु सिद्धसाधनस्य। न हि पक्षे साध्य-

संशयकारणीभूतौ यौ साधारणासाधारणधर्मौ, तद्विषयकं ज्ञानं निबन्धनं कारणं यस्य, स चासौ प्रमाव्यतिरेक इति समासः। विरुद्धे नैवमित्याह—**विरुद्धे त्विति**। साध्यासमानाधिकरणो यो धर्मः साधनं, तद्ग्रहो निबन्धनं यस्येति बहुव्रीहिः। व्याप्ति-प्रमाव्यतिरेक इत्यनुषङ्गः। **तयोरेवेति**। विरुद्धानैकान्तिकयोरित्यर्थः।

आश्रयासिद्धादीनामपि विरुद्धादिवद्धेत्वाभासान्तरत्वं स्यादित्याशङ्कते—**नन्विति**। परिहरति—**मैवमिति**।

नन्वनुकूलतर्काभावादीनामप्युपजीव्यत्वेन पृथक् हेत्वाभासत्वमस्त्वित्याशङ्क्य तत्सत्त्वेऽप्यनुमितिविलम्बाभावान्न तथेति शङ्कोत्तराभ्यामाह—**यद्यपीत्यादिना**। प्रतिकूलतर्कादीनामपि बाधवत्साक्षादनुमितिप्रतिबन्धकत्वात्पृथगेन हेत्वाभासत्वमस्त्वित्या-शङ्क्याह—**न त्वेवमिति**। तर्हि बाधस्यापि पृथग्दूषणत्वं न स्यादित्यत आह—**बाधस्यापीति**। तर्हि बाधादिवत्सिद्धसाधनमपि पृथगेव प्रतिबन्धकत्वेन हेत्वाभासः स्यादित्याशङ्क्य निषेधति—[1]**न त्विति**। सिद्धसाधनोपन्यासवैयर्थ्यापत्तिरित्यत

1 न त्विति। तथा च पक्षे साध्यज्ञानं न साध्यज्ञानं प्रतिबध्नाति। अत एव धारावाहि-

ज्ञानं ज्ञानान्तरं साक्षात् प्रतिबध्नाति । किंतु संशयनिवर्तनद्वारा । अतस्तस्याश्रयविशेषणासिद्ध एवान्तर्भावः । सत्प्रतिपक्षस्य तु द्वयी प्रतिबन्धकता—साधारणी असाधारणी च । यथात्मसाक्षात्कारं प्रति मनसो द्वयी कारणता । तस्यानुमितिमात्रं प्रति प्रतिबन्धकतया हेत्वाभासत्वम् । न हि साध्याभावज्ञानसामग्र्यां सत्यां साध्यज्ञानमुत्पत्तुमर्हति । अतः साक्षादनुमितिप्रतिबन्धकतया सत्प्रतिपक्षस्यापि पृथगेव दूषणत्वम् । अनुपसंहारी तु व्याप्यत्वासिद्ध एवान्तर्भवति, साक्षाद्दूषणत्वाभावात् । एवं सोपाधिरपि न पृथगाभासः न हि साध्यव्यापकाव्याप्यत्वे हेतोरवगते व्याप्तिज्ञानविरहमन्तरेणानुमितौ काचित् क्षतिरस्ति । व्याप्तिज्ञानभङ्ग एव तेन क्रियत इति चेत्, तर्हि साक्षाद्व्याप्यत्वासिद्धेरेव दूषणत्वम् ।

आह—किंत्विति । सत्प्रतिपक्षस्य साक्षादनुमितिप्रतिबन्धकत्वेन पृथक् हेत्वाभासत्वं संभवतीत्याह—सत्प्रतिपक्षस्येत्यादिना । अत इति । सत्प्रतिपक्षवदनुपसंहारिणोऽपि पृथक् हेत्वाभासत्वं स्यादित्याशङ्क्याह—अनुपसंहारी त्विति । [1]अनध्यवसितस्याप्यनुपसंहारिवद्धेत्वाभासत्वं न पृथगिति ध्येयम् । यच्चोक्तमुपाधेरपि पृथक् हेत्वाभासत्वं, तत्रोत्तरमाह—एवमिति ।

कज्ञानं जायते । अन्यथा प्रथमज्ञानस्य प्रतिबन्धकस्य सत्त्वेन द्वितीयज्ञानोत्पत्तिरेव न स्यादिति भावः ।

1 अनध्यवसितस्याप्यनुपसंहारिवद्धेत्वाभासत्वं न पृथगिति ध्येयमिति । अधिकतया शङ्कितौ द्वौ हेत्वाभासौ—अनध्यवसितः सोपाधिकश्चेति । सोपाधिकस्य व्याप्यत्वासिद्धेऽन्तर्भावम् एवमित्यादिना मूलकारो वक्ष्यति । अनध्यवसितस्यान्तर्भावो नोक्तो मूले इति स्वयं तस्यासिद्धावन्तर्भावमाह—अनध्यवसितस्यापीति । सर्वमनित्यं कार्यत्वादित्युदाहरणमनध्यवसितस्येति स्वयमुक्तत्वात् । तस्यानुपसंहारित्वेनान्यैर्व्यवह्रियमाणत्वात् अनुपसंहारिणे व्याप्यत्वासिद्धेऽत्यन्तभावकथनेनानध्यवसितपदबोध्यस्यापि तस्यासिद्धेऽन्तर्भावः सिद्धो भवतीति भावः ।

वस्तुतस्तु सपक्षविपक्षव्यावृत्तो हेतुरनध्यवसितः । "पक्षैकदेशवृत्तिरनध्यवसितः" इति लीलावतीवाक्यं पक्षैकेति प्रतीकमुपादाय 'सर्वसपक्षविपक्षव्यावृत्त इत्यर्थः इति व्याचख्युर्वर्धमानोपाध्याया न्यायलीलावतीप्रकाशे । वैशेषिकमते संशयाद्विलक्षणोऽनध्यवसायः । साधारणधर्मज्ञानात्संशयो जायते । स चैकस्मिन् विरुद्धनानाकोट्युल्लेखवान् 'अयं स्थाणुर्वा पुरुषो वा' इत्यादिप्रत्ययः । असाधारणधर्मज्ञानाच्चानध्यवसायो जायते । स च किंस्विदित्याकारकः । तदुक्तं

तत्र सव्यभिचारत्वं पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षातिरिक्तसाध्याभाववन्मात्रवृत्त्यन्यधर्मत्वम् । साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वमिति केचित् ।

द्विविधश्चायम्—साधारणासाधारणभेदात् । तत्र पक्षसपक्षविपक्षवृत्तिः साधारणः । पक्षवृत्तित्वे सति सपक्षविपक्षावृत्तिरसाधारणः ।

तत्रेति । सव्यभिचारादिष्वित्यर्थः । पक्षातिरिक्तेति । साध्याभाववन्मात्रवृत्त्यन्यधर्मत्वमनैकान्तिकत्वमित्युक्ते सद्धेतौ धूमादावतिव्याप्तिः । तदर्थं साध्यवन्मात्रवृत्त्यन्यत्वे सतीति । एतावति कृते विरुद्धेऽतिव्याप्तिः स्यात् । तदर्थं साध्याभाववन्मात्रवृत्त्यन्यधर्मत्वमिति विशेषणम् । एवमपि साध्यतदभाववद्वृत्तिसाधारणानैकान्तिकेऽव्याप्तिर्भवेत् । तत्परिहारार्थं मात्रपदद्वयम् । [1]एतावति कृतेऽनुपसंहारिण्यव्याप्तिर्भवेत् । तत्परिहाराय पक्षातिरिक्तपदद्वयमिति दिक् ।

केचिदित्यस्वरसोद्भावनम् । तद्बीजं तु [2]धूमे सद्धेतावतिव्याप्तिः, अनुपसंहारिण्य-

न्यायलीलावत्यां वल्लभाचार्यैः—'सामान्यतोऽवगते विशेषतोऽज्ञाते वाच्यविशेषे यदा किंशब्दाभिलापः, तदा अनध्यवसायः । अव्यवस्थितनानावाचकवाच्यत्वप्रतिभासे तु संशय इति । साध्यसंशयजनकत्वमनैकान्तिकस्य दूषकताबीजम् । अनध्यवसिते तन्नास्ति, असाधारणधर्मज्ञानस्यानध्यवसायज्ञानजनकत्वात् । अतोऽयमनैकान्तिकभिन्नः । तदुक्तं वर्धमानोपाध्यायैः—"अनैकान्तिकस्य ।संशयजनकहेत्वाभासादसाधारणधर्मस्यानध्यवसायज्ञानजनकत्वादिति भवः" इति । इत्थं च वैशेषिकमतावलम्बिना लीलावतीकारेण संशयातिरिक्तमनध्यवसायज्ञानमङ्गीकृत्य तथोक्तावपि, न्यायमते संशयातिरिक्तस्यानध्यवसायस्यानङ्गीकारात् असाधारणधर्मज्ञानेनापि संशयस्यैव जननात् अनध्यावसितस्य संशयजनकत्वेनानैकान्तिकदूषकताबीजसद्भावादसाधारणानैकान्तिक एवायमनध्यवसितो नातिरिक्त इति समीचीनं प्रति भाति ।

1 एतावति कृतेऽनुपसंहारिण्यतिव्याप्तिर्भवेदिति । मूलकारमतेऽनुपसंहारी न सव्यभिचारान्तर्भूतः । अपित्वसिद्धान्तर्भूतः । ततश्चालक्ष्ये सर्वमनित्यं प्रमेयत्वादित्यत्रानित्यमात्रावृत्तौ नित्यमात्रावृत्तौ च प्रमेयत्वे साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभावन्मात्रवृत्त्यन्यत्वस्य सत्त्वादतिव्याप्तिः । पक्षातिरिक्तपदोपादाने, तत्र सर्वस्यापि पक्षत्वेन पक्षातिरिक्ताप्रसिद्ध्या नातिव्याप्तिरिति भावः ।

2 धूमे सद्धेतावतिव्याप्तिरिति । वह्निमान् धूमादित्यत्र सद्धेतोर्धूमस्य पक्षे साध्यवति महानसादौ च सत्त्वात् पक्षातिरिक्तं यत् साध्यवत् तन्मात्रवृत्तित्वं नास्तीति पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वेनातिव्याप्तिरित्यर्थः । अनुपसंहारिण्यव्याप्तिरिति । टीकाकारस्यानुपसंहारी

व्याप्तिः । असाधकतायां व्यर्थविशेषणत्वमिति द्रष्टव्यम् । अन्ये तु—असाधारण्याभावकालावच्छिन्नसाध्यव्याप्यत्वाभाववत्त्वे सत्यसाधारण्याभावकालावच्छिन्नविरुद्धत्वाभाववत्त्वं सव्यभिचारत्वम् । अत्रासाधारण्याभावकालातच्छिन्नं यत्साध्यव्याप्यत्वं तदभाववत्त्वे सत्यसाधारण्याभावकालावच्छिन्नं यद्विरुद्धत्वं तदभाववत्त्वमिति समासः । साध्यव्याप्यत्वाभाववत्त्वमनैकान्तिकत्वमित्युच्यमाने विरुद्धेऽतिव्याप्तिः । तन्निवृत्तये विरुद्धत्वाभाववत्त्वम् । तावन्मात्रस्य सद्धेतावतिव्याप्तेस्तत्परिहारार्थं साध्यव्याप्यत्वाभाववत्त्वे सतीति विशेषणम् । एवमपि 'शब्दोऽनित्यः, शब्दत्वात्' इत्यादिसद्धेत्वसाधारणेऽव्याप्तिः स्यात् । तत्परिहारार्थमसाधारण्याभावकालावच्छिन्नेति । तेन सत्यपि साध्यव्याप्यत्वे विशेषणाभावाद्विशिष्टाभावः । एवमप्यसाधारणतापन्ने विरुद्धेऽव्याप्तिः स्यात् । तदर्थमसाधारण्याभावकालावच्छिन्नेति । तेन 'आत्मा, अनित्यः आत्मत्वात्' इत्यादिष्वसाधारणतापन्नेषु सत्यपि [1]विरुद्धत्वेऽसाधारण्याभावकालावच्छिन्नत्वरूपविशेषणाभावाद्विशिष्टाभावः संभवतीति नोक्तदोष इति दिक् ।

येन रूपेणानैकान्तिकोद्भावनम्, अनुमितिप्रतिबन्धः, असाधकतानुमानं च तदाह—द्विविधश्चायमिति । इदं त्वेकदेशिमतम् । वस्तुतस्त्वयं त्रिविधः । तदुक्तं तत्वचिन्तामणौ गङ्गेशमिश्रेण "सव्यभिचारस्त्रिविधः—साधारणासाधारणानुपसंहारिभेदात्" इति । अथैवं साधारणादिभिस्त्रिभिरनुमितिप्रतिबन्धे हेत्वाभासाधिक्यं कथं नास्ति ? कथं वा न विभागव्याघातः ? इति चेत्, स्वरूपसतानेन सामान्यलक्षणेन साधारणादीनेकीकृत्य पञ्चैव हेत्वाभासा इति विभागकरणात् ।

नन्वेवमपि साध्याभावज्ञापकत्वेन बाधसत्प्रतिपक्षयोः, सव्यभिचारविरुद्धासिद्धानां साक्षात्साध्याभावाज्ञापकतया चैकत्वेन द्विविधो हेत्वाभास इति कथं न विभागः कृत इति चेत्; न, स्वतन्त्रेच्छस्य मुनेर्नियन्तुमशक्यत्वादिति दिक् ।

सव्यभिचारान्तर्गत एवेत्यभिमतम् । अत एव वक्ष्यति सव्यभिचारः साधारणोऽसाधारणश्चेति द्विविध इति मूले एकदेशिमतेनोक्तमिति । तथा च लक्ष्ये सर्वमनित्यं कार्यत्वादित्यत्र पक्षातिरिक्ताप्रसिद्ध्या अव्याप्तिरिति भावः ।

1 असाधारण्याभावकालः पक्षे साध्यतदभावान्यतरनिश्चयकालः । तदानीं हेतोर्निश्चितसाध्यतदभाववद्वावृत्तत्वाभावेनासाधारण्याभावात् ।

## साधारणनिरूपणम्

द्वे विधे दर्शयति—**साधारणेति । तत्रेति ।** द्वयोर्मध्ये इत्यर्थः । साधारणं लक्षयति—**पक्षसपक्षेति ।** अथेदमलक्षणम्, विरुद्धसंकीर्णसाधारणे सपक्षवृत्तित्वाभावेनाव्याप्तेः । विपक्षवृत्तित्वज्ञानेनानुमितिप्रतिबन्धेऽसाधकतानुमाने च संभवति [1]शेषवैयर्थ्यात् । न च विपक्षवृत्तित्वं साधारणत्वम्, विपक्षस्य निश्चयघटितत्वेन साधारणस्यानित्यदोषत्वापत्तेः । अनुमितिप्रतिबन्धे परं प्रत्युद्भावनेऽसाधकतानुमाने च साध्याभाववद्गामित्वस्यैव प्रयोजकत्वेन निश्चयभागस्य व्यर्थत्वादिति चेत्, न । विपक्षवृत्तित्वं साधारणत्वम् । विपक्षत्वं च साध्यव्यधिकरणधर्मवत्त्वम् । व्यधिकरणत्वं च [2]तदधिकरणानधिकरणत्वम् । तथाच साध्याधिकरणानधिकरणधर्मवद्वृत्तित्वं विपक्षवृत्तित्वमिति पर्यवसन्नोऽर्थः । तथाच प्रतियोगिव्यधिकरणसाध्यात्यन्ताभाववद्गामित्वाद्युपाधीनां भानेऽस्योपाधेर्भानमावश्यकमित्येतद्विषयत्वेनैव सर्वेषामनुमितिप्रतिबन्धकत्वम् । अतो नाधिक्यम्, न वा विभागव्याघातः । एतत्संदेहात् संदिग्धानैकान्तिकता ।

ननु साध्यव्यधिकरणधर्मवद्वृत्तित्वे साध्यव्यधिकरणस्यैवानुमितिप्रतिबन्धकत्वादिसामर्थ्येऽधिकवैयर्थ्यमिति चेत्, [3]अन्यविशेषणत्वेनोपात्तस्यान्यविशेषणत्वं कृत्वा दूषणाभिधानस्याप्रामाणिकत्वात् । न च वाच्यम्—पक्षे व्यभिचारसंदेहस्यानुमितिप्रतिबन्धकत्वेऽनुमानमात्रोच्छेद इति, अनुकूलतर्कादिना व्यभिचारसंदेहनिवृत्तावनुमानप्रवृत्तेः । अथवा निश्चितहेतुमति साध्यव्यभिचारसंशयातिरिक्तव्यभिचारसंशयत्वेनानुमितिप्रतिबन्धकत्वान्नानुमानमात्रोच्छेद इति दिक् ।

1 शेषवैयर्थ्यादिति । पक्षसपक्षवृत्तित्वस्य विशेषणस्य वैयर्थ्यादित्यर्थः । अनित्यदोषत्वापत्तेरिति । हेतुमति साध्याभावनिश्चयदशायमेव निश्चयघटितसाधारण्यस्य संभवेन तच्छून्यतादशायां हेतौ दुष्टत्वव्यवहारो न स्यात् । न चेष्टापत्तिः, साधारणस्य नित्यदोषत्वेन सर्वदा दुष्टव्यवहारात् ।

2 तदधिकरणानधिकरणत्वमिति । तदधिकरणमवधिकरणं यस्य, तत्वं तदधिकरणावृत्तित्वमिति यावत् । तथाचेति । साध्यात्यन्ताभावसाध्यवद्भेदयोः साध्यवदवृत्त्वेन साध्यात्यान्ताभाववदवृत्तित्वज्ञानस्य साध्यवदन्यवृत्तित्वज्ञानस्य च साध्याधिकरणावृत्तिधर्मवदवृत्तित्वज्ञानत्वं संपद्यते ।

3 अन्यविशेषणत्वेनोपात्तस्यान्यविशेणत्वं कृत्वा दूषणाभिधानस्येति । साध्याधिकरणावृत्तित्वे सतीति यदि हेतौ विशेषणं दीयते, तदा तज्ज्ञानस्यैवानुमितिप्रतिबन्धकत्वात्तदितरांश-

## असाधारणः

असाधारणं लक्षयति—**पक्षवृत्तित्वे सतीति** । विपक्षव्यावृत्तोऽसाधारण इत्युक्तेऽन्वयव्यतिरेकिणि सद्धेतावतिव्याप्तिः । तत्परिहाराय[1] **सपक्षव्यावृत्त इति** ।

यत्किंचित्सपक्षव्यावृत्तधूमस्यासाधारणता मा भूदित्येतदर्थं सर्वेति विशेषणं सपक्षे देयम् । एवमप्याकाशादावतिव्याप्तिः स्यात् । तदर्थं **पक्षवृत्तित्वे सतीति** । पक्षवृत्तित्वमसाधारणत्वमित्युक्तेऽन्वयव्यतिरेकिण्यतिव्याप्तिः । तदर्थं **सकलसपक्षव्यावृत्त इति** । एवमपि विरुद्धेऽतिव्याप्तिः । तदर्थं **विपक्षव्यावृत्त इति** ।

नन्वेवं सपक्षव्यावृत्तिरेव दूषकतायामुपयुज्यते । न तु विपक्षव्यावृत्तिरपि, [2]तस्या अनुगुणत्वात् । अपिच परं प्रति तदुद्भावनदशायां विपक्षव्यावृत्त्युपन्यासे साध्यसाधकौ व्यतिरेकसहचार एवोपन्यस्तो भवेत् । अपिच परामर्शोत्तरकालमिदमुद्भाव्यं वा ? तत्पूर्वकालं वा ? नाद्यः, बाधसत्प्रतिपक्षयोरभावेऽनुमितेर्ब्रह्मणापि वारयितुमशक्यत्वात् । न द्वितीयः 'शब्दो नित्यः, शब्दत्वात्' इत्युक्त्वा [3]वादिनि निवृत्ते सति न्यूननिग्रहोद्भावनेनैव वादिनिवृत्तेः । न च स्वार्थानुमाने दोषो भविष्यतीति वाच्यम्, तत्रापि सपक्षव्यावृत्तत्वमात्रस्य दोषत्वात् । अत्र वदन्ति—'नित्यः शब्दः, शब्दत्वात्' इत्यत्र शब्दत्वं साध्यवतस्तदभाववतश्च व्यावृत्तम् । एवंच यत्र यत्र नित्यत्वं तत्र तत्र शब्दत्वाभावः । यत्र यत्र नित्यत्वाभावस्तत्र तत्रापि शब्दत्वाभावः । एवंच साध्यतद-

वैयर्थ्यं स्यात् । अत्र साध्याधिकरणावृत्तिर्यो धर्मस्तद्वद्वृत्तित्वमित्यधिकरणविशेषणीभूतधर्मविशेषणतयोक्तमिति निरुक्तज्ञानस्य हेतौ साध्याधिकरणावृत्तित्वानवगाहनान्न प्रतिबन्धकत्वमिति न वैयर्थ्यमिति भावः ।

अनुमानमात्रोच्छेद इति । सर्वत्रानुमाने पक्षे साध्यसंदेहस्य हेतुनिश्चयस्य च सत्त्वेनसंदिग्धानैकान्तिकतासंभवः ।

1 सपक्षविपक्षव्यावृत्त इति टीकापाठः । यत्किंचित्सपक्षव्यावृत्तधूमेति । वह्निमान् धूमादित्यत्र साध्यतया निश्चितयत्किंचिद्विपक्षात् अयोगोलकात् व्यावृत्तत्वस्य धूमे सत्त्वादतिव्याप्तिरित्यर्थः ।

2 तस्या अनुगुणत्वादिति । अधिकरणविशेषान्तर्भावेण व्यभिचारज्ञानं प्रति प्रतिबन्धकतया साध्यव्याप्तिज्ञानं प्रति विपक्षव्यावृत्तेरुपयुक्तत्वादित्यर्थः ।

3 वादिनि निवृत्ते सति । उदाहरणादिकमनुक्त्वा तूष्णीं भूते सतीत्यर्थः । ततः किमित्यत आह—

न च साध्यवद्वृत्तित्वे सति साध्याभाववद्वृत्तिः साधारणः, सपक्ष विपक्षव्यावृत्तोऽसाधारण इति । प्रथमे 'शब्दो नित्य, आकाशैकगुणत्वात्'

भावाव्यापकाभावप्रतियोगिना शब्दत्वेन पक्षे किं साधनीयमिति [1]साध्यतदभावोत्थापकतया स्वार्थानुमाने [2]परार्थानुमाने वा साधारणो दोषः ।

ननु सत्प्रतिपक्षादसाधारणस्य कथं भेदः? परामर्शद्वयस्योभयत्राप्यविशिष्टत्वादिति चेत्; न, द्वौ हेतू सत्प्रतिपक्षे साध्यतदभावोत्थापकौ । अत्र त्वेक एव हेतुरिति भेदः । न च—न्यूनोद्भावनेनैव वादिनिवृत्तिर्भवति; कथं परार्थानुमानोद्भावनमिति वाच्यम् । विपक्षव्यावृत्ततया यथा साध्यं साधयति, तथा पक्षव्यावृत्तत्वेन साध्याभावमपि साधयतु, अविशेषादिति प्रतिबन्दितया दृष्टान्ततया वास्योद्भावनम् । न्यायोत्तरं साधारणवद्बोध्यम् । सर्वसपक्षव्यावृत्तत्वं लक्षणम् । [3] न त्वधिकम्, व्यर्थत्वात् । विरुद्धस्य विरुद्धत्वेनाज्ञायमानतादशायामेतद्रूपेणावगमेऽसाधारणतैव, अन्यथा हेत्वाभासाधिक्यापत्तेः ।

ननु तथाप्युदाहरणाभावादेवासाधारणो न पृथक् । तथाहि—'अनित्यः शब्दः, शब्दत्वात्' इति सद्धेतुरेव । 'शब्दो नित्यः, शब्दत्वात्' इति विरुद्ध एव । 'भूर्नित्या गन्धवत्त्वात्' इति साधारण एवेति चेत्; उच्यते—संदेहघटितपक्षतादशायां साध्यतदभावानिश्चयदशायां तस्य दोषत्वम् । यद्यपि निश्चयाभावः पुरुषदोषोऽज्ञानं, न हेत्वाभासः; तथापि ज्ञायमानतयानुमितिप्रतिबन्धकत्वेन हेत्वाभासत्वात् तथोक्तम् । अथवा सपक्षव्यावृत्तत्वेन निश्चयदशायामेव तेषामुदाहरणानामसाधारणत्वमिति संक्षेपः ।

न्यूननिग्रहेति । अवयवस्य वक्तव्यस्योदाहरणादेरकथनान्न्यूनाख्यनिग्रहस्थानस्योद्भावनेनेत्यर्थः ।

1 साध्यतदभावोत्थापकतयेति । साध्यतदभावोऽसिध्यनुकूलपरामर्शविषयतया । शब्दत्वादिहेतौ साध्याभावव्यापकीभूताभावप्रतियोगित्वज्ञानं साध्याभावनिरूपितव्यतिरेकव्याप्तिज्ञानम् । साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानं साध्यनिरूपितव्यतिरेकव्याप्तिज्ञानमिति बोध्यम् ।

2 परार्थानुमाने वेति । वाकारश्चार्थे बोध्यः ।

3 न त्वधिकं व्यर्थत्वादिति । सपक्षव्यावृत्तत्वमपि न लक्षणघटकं व्यर्थत्वादित्यर्थः । ननु विरुद्धेऽतिव्याप्तिवारकतया तत्सार्थक्यं पूर्वमुक्तमित्याशङ्क्याह—विरुद्धस्येति ।

इत्यस्याप्यनैकान्तिकत्वप्रसङ्गः । न चेदमनैकान्तिकमेवेति वाच्यम् , दूषकताबीजस्य संदेहजनकत्वस्याभावात् । न हि शब्दातिरिक्तेऽनित्ये आकाशैकगुणत्वं समवेतं दृष्टम् , येन कोटिद्वयस्मरणात् संदेहः स्यात् । द्वितीये तु 'शब्दो नित्यः , आकाशात्' इत्यत्राकाशादेर्व्याप्यस्यावृत्तिमतः सपक्षविपक्षव्यावृत्तस्यासाधारणत्वप्रसङ्गः । दूषकताबीजसंदेहजनकत्वमत्र नास्ति । न हि शब्दावृत्तेः शब्दे संदेहजनकत्वं संभवति , अतिप्रसङ्गात् ।

## अनुपसंहारी

अनुपसंहारी तु नानैकान्तिकेऽन्तर्भवति, दूषकताबीजस्य संदेहजनकत्वस्याभावात् । न हि 'सर्वमनित्यं प्रमेयत्वात्' इत्यत्र प्रमेयत्वस्यान्वयमुखेन व्यतिरेकमुखेन वा संशयजनकत्वं संभवति । अपिच 'सर्व-

साधारणासाधारणयोर्लक्षणान्तरे आशङ्क्य निराकरोति—**न चेत्यादिना** । विरुद्धसद्धेत्वोरतिव्याप्तिवारणाय विशेषणद्वयं द्रष्टव्यम् । [1]अतिव्याप्त्या दूषयति—**प्रथम इति** । साधारणानैकान्तिकलक्षणपक्ष इत्यर्थः । असाधारणानैकान्तिकलक्षणमतिव्याप्त्या दूषयति—**द्वितीय इति** । इष्टापत्तिमाशङ्क्याह—**दूषकतेति** । ननु शब्दावृत्तिधर्मस्यापि शब्दे संदेहजनकत्वमित्याशङ्क्याह—**न हीति** ।

## अनुपसंहारी

**अनुपसंहारी त्विति** । व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र स हेत्वभिमतोऽनुपसंहारी । व्याप्तिग्रहानुकूल एकत्र धर्मिण्युपसंहारः सहचारः, तदभावो यत्रेत्यर्थः । तत्र हेतुमाह—**दूषकताबीजस्येति** । संशयजनकत्वाभावः कथमित्याशङ्क्याह—**न हीति** । असाधारणधर्मवद्व्यतिरेकमुखेन संशयजनकत्वमस्त्वित्याशङ्क्याह—**व्यतिरेकमुखेन वेति** । प्रमेयत्वहेतोः संशयजनकत्वसंभावनैव नास्तीत्याह—**अपिचेति** । [2]असंभावितमित्यत्र हेतुमाह—**अभिधेयत्वेति** । **तस्येति** । प्रमेयत्वहेतोरित्यर्थः ।

1 अतिव्याप्त्या दूषयति—प्रथम इतीति । शब्दो नित्यः, आकाशैकगुणत्वादित्यत्र साध्यवद्वृत्तित्वं वर्तते , नित्ये आकाशपरिमाणादौ आकाशमात्रगुणत्वस्य सत्वात् । वस्तुगत्यनित्यत्वरूपसाध्याभाववति शब्दे आकाशमात्रगुणत्वं वर्तत इति साध्यवद्वृत्तित्वे सति साध्याभाववद्वृत्तित्वस्य सत्त्वादतिव्याप्तिरिति भावः ।

2 असंभावितमित्यत्र हेतुमाह—अभिधेयत्वेतीति । अभिधेयत्वस्य साध्यस्य केवलान्व-

मभिधेयम्, प्रमेयत्वात्' इत्यत्र संशयजनकत्वमसंभावितमेव, अभिधेयत्वानधिकरणस्य तस्याप्रसिद्धत्वात्। तस्मात् व्याप्तेरग्रहणात् व्याप्यत्वासिद्ध एवान्तर्भवति। उभयरूपस्यानैकान्तिकस्य केवलान्वयिनि केवलव्यतिरेकिणि च साध्येऽसंभवः, सपक्षविपक्षाप्रसिद्धेः। केवलान्वयिधर्मो नासाधारणो भवति, उभयव्यावृत्तेरस्याभावात्। अत्र साधारणस्य न क्वचिदपि विरुद्धसंकीर्णता। बाधाश्रयस्वरूपतद्विशेषणासिद्धिसंकीर्णता कुत्र-

[1] वस्तुतस्तु केवलान्वयिधर्मावच्छिन्नपक्षक एवानुपसंहारी। तथाच 'सर्वमभिधेयम्, प्रमेयत्वात्' इत्यादौ विप्रतिपत्त्या साध्यानिश्चयदशायामनुपसंहारित्वमेव।

[2] ननूपसंहाराभावज्ञाने सति व्याप्यत्वासिद्धेर्ज्ञानमावश्यकमिति व्याप्यत्वासिद्धिरेव दोष इति चेत्, व्याप्यत्वासिद्धस्य ज्ञान उद्भावने च व्यभिचारवदुपजीव्यत्वाद्दोष इति दिक्। **सपक्षेति**। केवलान्वयिनि साध्ये विपक्षाप्रसिद्धेः, केवलव्यतिरेकिणि साध्ये सपक्षाप्रसिद्धेरिति भावः। केवलान्वयिधर्मस्य साधारणत्वाभावेऽप्यसाधारणत्वं स्यादित्याशङ्क्याह— **केवलान्वयिधर्म इति**। तत्र हेतुमाह— **उभयेति**। केवलान्वयिधर्माभावस्यासिद्धत्वेन साध्यतदभावोभयव्यावृत्तेरभावादित्यर्थः। साधारणानैकान्तिकस्य विरुद्धसंकीर्णता संभवति? न वा? इति संदेहे निर्णयमाह— **अत्रेति**। साध्याभावनियतसमानाधिकरणत्वाभावादिति भावः। तर्हि बाधादिसंकीर्णत्वमपि न स्यादित्यत आह— **बाधाश्रयेति**। **अस्येति**। साधारणस्येत्यर्थः। तर्हि हेत्वाभासानां भेदो न स्यादित्याशङ्क्योपाधिभेदात् भेद इत्युपसंहरति— **तदेवमिति**। शेषमतिरोहितार्थम्।

यितया तदभावाप्रसिद्ध्या तदभावकोटिकः संशय एव न प्रसिध्यतीति भावः। तत्राप्यभिधेयत्वं पक्षनिष्ठाभावप्रतियोगि न वेति संशयः संभवतीति बोध्यम्।

1 स्वयं मणिकारसरण्या अनुपसंहारिणः स्वरूपं तस्य व्याप्यत्वासिद्धेऽनन्तर्भावं च निरूपयितुमारभते—वस्तुतस्त्विवति। केवलान्वयिधर्मावच्छिन्नपक्षक इति। केवलान्वयिधर्मस्यावच्छिन्नो व्यापकः पक्षः पक्षत्वं साध्यवत्तया सन्दिह्यमानत्वं यत्र स इत्यर्थः। सर्वस्य पक्षत्वे साध्यवत्तया संदिह्यमानत्वस्य सार्वत्रिकत्वेन केवलान्वयिधर्मव्यापकत्वमिति भावः।

2 मूलकारोक्तमनुपसंहारिणो व्याप्यत्वासिद्धेऽन्तर्भावमाशङ्कते—नन्विति। मणिकारोक्तयुक्त्या दूषयति—व्याप्यत्वासिद्धस्येति।

चित् । व्याप्यत्वासिद्धिसंकीर्णता सर्वत्र । प्रतिपक्षसंकीर्णतासंभावना सर्वत्र; अस्य नित्यदोषत्वात् । एवमसाधारणस्यापि विरुद्धत्वाश्रयस्वरूपतद्विशेषणासिद्धिसंकीर्णता क्वचित् । व्याप्यत्वासिद्धिसंकीर्णता सर्वत्र । प्रतिपक्षः पूर्ववत् । तदेवं संकीर्णतायामपि दूषकताबीजभेदोपाधिभेदोपजीव्योपजीवकभावभेदसत्त्वात् हेत्वाभासान्तरताव्यवहारः; न तु परस्परासंकीर्णलक्षणयोगित्वात् ।

नन्वेवंविधानैकान्तिकलक्षणेऽसाधकतानुमाने व्यर्थता स्यात् ? मैवम्; यदेव यत्र दूषकताबीजं तस्यैव तत्र हेतूकरणात् । तथाहि—इदमसाधकं साध्यसंशयजनकत्वादिति । न चात्र व्यर्थता । असाधकताप्रस्तावे तु विशेषं वक्ष्यामः ।

## विरुद्धः

अथ विरुद्धः । साध्यासमानाधिकरणत्वं विरुद्धत्वम् । साध्याभावव्याप्तत्वमिति केचित् । एतत्तु खण्डनकृता दूषितम् । साध्याभावव्याप्यत्वं साध्याभावसामानाधिकरण्यविशेषः । तत्र साध्याभावसमानाधिकरणत्वादित्यस्यैवासाधकतासाधकत्वात् अतोऽधिकं व्यर्थमिति । तन्म-

## विरुद्धः

अथेति । सव्यभिचारनिरूपणानन्तरमित्यर्थः । निरूप्यत इति शेषः । विरुद्धलक्षणमाह—**साध्येति** । [1]साध्याभावाधिकरणाधिकरणकत्वमित्यर्थः । अत्र साध्यासमानाधिकरणः साध्याभावो बोध्यः । अन्यथा 'इदं संयोगि, द्रव्यत्वात्' इत्यादावतिव्याप्तिर्भवेत् । अयं चाभावो भावाभावसाधारणो बोध्यः । तेन 'अयं गुणाभाववान् द्रव्यत्वात्' इत्यादौ गुणवत्त्वाभावाभावगुणवत्त्वव्याप्यत्वेऽपि नाव्याप्तिः । एकदेशिमतं दर्शयति—**साध्येति** । साध्याभावनियतसामानाधिकरण्यमित्यर्थः । महाखण्डनकारोक्तं दूषणं दूषयितुमुपन्यस्यति—**एतत्त्विति** । **इदमिति** । 'शब्दः नित्यः

1 सध्याभावाधिकरणाधिकरणकत्वमित्यर्थ इति । अनेन साध्याभावसमानाधिकरणत्वं विरुद्धत्वमिति मूलपाठः प्रतिभाति । परंतु साध्यासमानाधिकरणत्वं विरुद्धत्वमिति पाठो दृश्यते । असाधकतानुमाने साध्यासमानाधिकरणत्वादिति प्रयोगोऽपि यद्वेत्यादिना प्रदिपादितस्तदैव संगच्छत इति बोध्यम् ।

न्दम् । ‘इदमसाधकं, विरुद्धत्वात्’ इत्यत्र न किंचित् व्यर्थम् । अर्थगत्या तत्रापि व्यर्थत्वमस्तीति चेत्; न, तथाप्युद्भावनस्याशक्यत्वात् । यद्वा साध्यासमानाधिकरणत्वात् साध्याभावप्रमासाधकधर्मत्वादिति हेतुः कर्तव्यः । अतो न व्यर्थता ।

तदस्य बाधाश्रयासिद्धिस्वरूपासिद्धिसाधारणानैकान्तिकसंकीर्णत्वं क्वचित्; व्याप्यत्वासिद्धिसंकीर्णत्वं सर्वत्र । प्रतिपक्षे तु पूर्वोक्तैव गतिः । विरुद्धस्य केवलान्वयिनि साध्ये हेतौ चासंभवः । ‘सर्वा पृथिवी गन्धवती, प्रमेयत्वात्’ इत्यादावनुपसंहारितुल्यं व्याप्यत्वासिद्धत्वमेव दूषणम्; न तु विरुद्धत्वं, दूषकतावीजविरहात् ।

कृतकत्वात्’ इत्यादौ कृतकत्वादिकमित्यर्थः । अर्थविवक्षायां वैयर्थ्यमित्याशङ्कते—अर्थगत्येति । तथापीति । अर्थविवक्षायामपीत्यर्थः । उद्भावनस्येति । विरुद्धोद्भावनस्येत्यर्थः । बुद्धिसौकर्यादाह—यद्वेति ॥

ननु हेत्वाभासान्तरसंकीर्णता विरुद्धस्येत्याशङ्क्योपाधिभेदात् उपजीव्योपजीवकभावभेदाच्च तद्भेद इत्याह—तदस्येति । असंभव इति । साध्याभावव्याप्तत्वाभावेनासंभव इति भावः । तर्हि ‘सर्वा पृथिवी गन्धवती, प्रमेयत्वात्’ इत्यादावपि विरुद्धता स्यात्; साध्याभावसमानाधिकरणत्वादित्यत आह—सर्वेति । दूषकतेति । साध्याभावनियतसमानाधिकरणत्वरूपदूषकताबीजाभावादित्यर्थः । यद्वा साध्यवदवृत्तित्वरूपसकलसंमतदूषकतावीजाभावादित्यर्थः ।

[1]अपरे तु प्रतियोगिव्यधिकरणसाध्यव्यापकाभावप्रतियोगित्वं वृत्तिमतः साध्यवदवृत्तित्वं वा विरुद्धत्वम् । वृत्तिमदिति विशेषणं गगनादौ विरुद्धत्वव्यवहारवारणाय । दूषणं तु साध्यवदवृत्तित्वज्ञानमेव, तावन्मात्रज्ञानस्यैव व्याप्तिज्ञानपरिपन्थित्वात् । ‘आत्मा अनित्यः आत्मत्वात्’ इत्यसाधारणसंकर एव । तथाप्यनेनापि रूपेण तस्य दोषत्वम् । न च वृत्तिमद्यत्साध्यवदवृत्ति, तत्साध्याभाववद्वृत्तीति ज्ञानमावश्यकमिति साधारणानैकान्तिकतयैव दोषः स्यादिति वाच्यम्, उपजीव्यत्वेन तस्य भिन्नदोषत्वात् । ननूपजीव्यत्वेऽपि

1 मणिकारसरण्या विरुद्धहेत्वाभासं तस्य पृथग्दोषत्वं च निरूपयति—अपरेत्विति । व्याप्तिज्ञानपरिपन्थित्वादिति । साध्यसामानाधिकरण्यज्ञाने साध्यवदवृत्तित्वज्ञानस्य प्राग्भावावगाहितया प्रतिबन्धकत्वादित्यर्थः ।

## सत्प्रतिपक्षः

अथ सत्प्रतिपक्षः । एकधर्मनिष्ठतद्व्याप्यत्वप्रकारकविषयतापक्षवृत्तित्वप्रकारकविषयताद्वय प्रतियोगिज्ञानसमानदेशसमानकालत्वे सत्येकधर्मनिष्ठतदभावव्याप्यत्वप्रकारकविषयतापक्षवृत्तित्वप्रकारकविषयताद्वयप्रतियोगिज्ञानत्वं सत्प्रतिपक्षत्वम् ।

साध्यवति हेतुर्न वर्तत इति ज्ञानं न स्वतो दूषकमिति चेत् ; न, सहचारज्ञानपरिपन्थित्वेन व्याप्तिज्ञानविघटकत्वात् ; अव्यभिचारिज्ञानविरोधित्वेन व्यभिचारिज्ञानवत् । न च सहचारज्ञानपरिपन्थित्वेन स्वार्थानुमाने दोषत्वसंभवेऽपि परं प्रति निश्चितानन्वयित्वेनायोग्यतयापार्थकतैव स्यादिति वाच्यम् , अयोग्यताज्ञानस्य [1]विरोधोपजीव्यत्वात् । अत एव 'अग्निरनुष्णः, कृतकत्वात् जलवत्' इत्यादिबाधस्थले बाधस्यैवोपजीव्यत्वमिति सर्वं सुस्थमित्यप्याहुः ।

## सत्प्रतिपक्षः

विरुद्धं सप्रपञ्चं निरूप्य क्रमप्राप्तं प्रकरणसमं निरूपयितुं प्रतिजानीते—**अथेति** । निरूप्यत इति शेषः । [2]सत्प्रतिपक्षलक्षणमाह—[3]**एकेति** । एकस्मिन् धर्मिणि शब्दे, निष्ठं यत्साध्यमनित्यत्वं, तद्व्याप्यं कृतकत्वं, तस्य भावस्तद्व्याप्यत्वं प्रकारो यस्यास्तद्व्याप्यत्वप्रकारिका, सा च सा विषयता च, या च पक्षधर्मता, सा प्रकारो यस्याः, सा च सा विषयता च, ते एव द्वयं, तत्प्रतियोगिज्ञानं परामर्शो यस्य, कृतकत्वहेतोस्तृतीयलिङ्गपरामर्शविषयीभूतस्य तत्समानदेशकालत्वे सतीत्यर्थः ।

1 विरोधोपजीव्यत्वादिति । विरोधः उपजीव्यः यस्य तत्त्वादित्यर्थः ।

2 सत्प्रतिपक्षलक्षणमाहेति । सन् विद्यमानः प्रतिसक्षः पक्षे स्वसाध्यविपरीतसाधको हेतुर्यस्य स सत्प्रतिपक्षः । अस्य प्रकरणसम इति सौत्रं नाम । "यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः" इति न्यायसूत्रम् । अनवसितौ पक्षप्रतिपक्षौ प्रकरणम् । प्रकरणमनतिवर्तमानः प्रकरणसाम्यात् प्रकरणसमव्यपदेशं भजते ।

3 एकधर्मीति मातृकाकोशपाठः । टीकासंमतपाठोऽप्येवम् । एकधर्मनिष्ठतद्व्याप्यत्वप्रकारकविषयतापक्षवृत्तित्वप्रकारकविषयताद्वयप्रतियोगिज्ञानसमानदेशसमानकालत्वे सति , एकधर्मनिष्ठतदभावव्याप्यत्वप्रकारकविषयतापक्षवृत्तित्वप्रकारकविषयताद्वयप्रतियोगिज्ञानत्वं सत्प्रतिपक्षत्वमिति

न तु तुल्यबलबोधितसाध्यविपर्ययत्वम् । तुल्यबलता व्याप्तिपक्षधर्मताभ्यां वास्तविकी न संभवत्येव । [1]वैज्ञानिकी तूभयत्रापि व्याप्तिपक्षधर्म-

एतद्धर्मिनिष्ठः शब्दरूपधर्मिनिष्ठः, योऽयं तदभावोऽनित्यत्वाभावो नित्यत्वं, तद्व्याप्यं श्रावणत्वं, तस्य भावस्तादृशव्याप्यत्वं प्रकारो यस्याः सा विषयता च; पक्षवृत्तित्वं प्रकारो यस्याः, सा च सा विषयता च, ते एव द्वयं, तत्प्रतियोगि ज्ञानं तृतीयलिङ्ग-परामर्शः, यस्य श्रावणत्वहेतोस्तस्य भावस्तत्त्वमित्यर्थः । सत्यन्तमात्रे कृते सद्धेतावति-व्याप्तिः । तदर्थमेतद्धर्मिनिष्ठेत्याद्युत्तरदलम् । एवमपि विरुद्धेऽतिव्याप्तिः । तदर्थं सत्यन्तम् । एकधर्मीति पदं विहाय तदितराभिधाने 'अनित्यः शब्दः कृतकत्वात्'; 'परमाणुः नित्यः; निरवयवद्रव्यत्वात्' इत्यनयोरपि सत्प्रतिपक्षता स्यात् । तन्निवृत्तये एकधर्मिपदम् । अत एवैतद्धर्मिपदमुत्तरदले सार्थकम् । अन्यत् सर्वं स्पष्टमिति दिक् ।

पराभिमतं लक्षणं दूषयति—न त्विति । समानबलोपस्थितसाध्यविपर्ययलिङ्गत्व-मित्यर्थः । तुल्यबलता व्याप्तिपक्षधर्मताभ्यां वा ? पक्षसत्त्वादिना वा ? इति विकल्प्याद्यं कल्पं निराकरोति—तुल्येति । विरोधादिति भावः । वैज्ञानिकी त्विति । तन्नि-श्चतया साध्यमानेत्यर्थः । उभयत्रापीति । कृतकत्वश्रावणत्वहेत्वोरपीत्यर्थः । शेषम-तिरोहितार्थम् ।

मूलपाठः । अनया फक्किकया 'विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता' इत्ययमर्थो विवक्षितः । अत्रोभावप्येकशब्दावन्यार्थकौ । यथा—'चैत्र एकमानयति । मैत्रस्त्वेकम्' इति । एकधर्म-पदेन प्रकृतहेतोरुपादानम् । तन्निष्ठा या तद्व्याप्यत्वप्रकारकविषयता साध्यव्याप्यत्वप्रकारता-निरूपिता साध्यव्याप्यत्वावच्छिन्ना विषयता, या च प्रकृतपक्षवृत्तित्वप्रकारविषयता पक्षवृत्तित्वा-वच्छिन्ना विषयता, तादृशविषयताद्वयप्रतियोगि विषयताद्वयनिरूपकं ज्ञानं परामर्शात्मकं तत्समानदेशसमानकालत्वे सति एकक्षणावच्छिन्नैकात्मवृत्तित्वसंबन्धेन तद्विशिष्टत्वे सति एक-धर्मपिष्ठा अपरहेतुनिष्ठा या तदभावव्याप्यत्वप्रकारकविषयता साध्याभावव्याप्यत्वावच्छिन्ना विषयता, या च प्रकृतपक्षवृत्तित्वप्रकारकविषयता प्रकृतपक्षवृत्तित्वावच्छिन्नविषयता, तादृश-विषयताद्वयप्रतियोगि विषयताद्वयनिरूपकं ज्ञानं परामर्शात्मकं तत्त्वमित्यर्थः। उभयत्र दले प्रकृत-पक्षोपादानेनाभिन्नपक्षवृत्तित्वलाभात् धर्मिभेदस्थले नातिप्रसङ्गः । अत्रोभयत्रापि एकधर्मो-पादानेन धर्मभेदो लभ्यत इति सत्प्रतिपक्षे हेतुद्वयमावश्यकमित्युक्तं भवति । टीकासंमतपाठे सत्यन्तदले एकधर्मिपदेन यो गृह्यते, स एव विशेष्यदले एतद्धर्मिपदेन गृह्यते । धर्मिनिष्ठत्वस्य साध्ये तदभावे चान्वयस्योक्तत्वात् विरुद्धयोः साध्यतदभावयोरेकधर्मिनिष्ठत्वस्य वास्तविकस्या-संभवात् वैज्ञानिकं तत् बोध्यम् । हेतुभेदस्यावश्यकता च नोक्ता भवतीति ज्ञेयम् ।

1 मूले वैज्ञानिकीतूभयत्रापीति । व्याप्तिविशिष्टस्ववैशिष्ट्यज्ञानविषयकपक्षकत्वं पर्य-वसितम् ।

तावैशिष्ट्यज्ञाने सति संभवत्येव । तत्र यत्किंचिद्व्याप्तिपक्षधर्मतावैशिष्ट्यज्ञानस्याविरोधितया विरुद्धज्ञानं वक्तव्यम् । तत्र विरोधिव्याप्तिपक्षधर्मतावैशिष्ट्यज्ञानयोरन्यतरभ्रमरूपत्वस्यावश्यकत्वात् तथाविधविशिष्टवैशिष्ट्यस्याप्रसिद्धेराशेपोऽपि न स्यात् ।

अथेदमुच्यते—व्याप्तिपक्षधर्मतावैशिष्ट्यज्ञानं यदि भ्रमस्तदा तत्साध्यव्याप्यत्वं यत्र क्वचित्प्रसिद्धं तदारोपणीयम् । पक्षधर्मता च तत्पक्षवृत्तिधर्मान्तरे प्रसिद्धा तस्मिन् धर्मे आरोपणीया । एवं साध्याभावव्याप्यत्वादिकमप्यारोपणीयम् । अतो नाप्रसिद्धिदोष इति । मैवम् । एवं सत्यसद्धुक्तरीतिरेवाङ्गीकर्तव्या, अन्यथा निर्वक्तुमशक्यत्वात् ।

नापि पक्षधर्मतादिना तुल्यबलता । केवलव्यतिरेकिण्यन्वयव्यतिरेकिणापि प्रतिपक्षीकरणात् । एवं विपरीतमपि ।

अनिर्धारितविशेषबोधितसाध्यविपर्ययत्वमित्यपि न लक्षणम् । *विशेषो हि व्याप्तिपक्षधर्मताभङ्गादिलक्षणो वक्तव्यः । तत्र चोक्तमेव दूषण

द्वितीयं दूषयति—**नापीति** । **प्रतिपक्षीकरणादिति** । सर्वसंमतत्वेन प्रतिपक्षीकरणात् तन्न स्यात् । ततश्चानुभवविरोध इति भावः । **विपरीतमपीति** । अन्वयव्यतिरेकिणि केवलव्यतिरेकिणा प्रतिपक्षकरणमपीत्यर्थः । [1]लक्षणान्तरमाशङ्क्य निषेधति—**अनिर्धारितेति** । **रत्नकोशकारा**भिमतं लक्षणं दूषयितुमुपन्यस्यति—**संशयेति** । **परस्परेति** । ज्ञानाभ्यां नोत्पत्तव्यं परस्परप्रतिरोधादिति योजना ।

एवंच शब्देऽनित्यः कृतकत्वात् ; शब्दो नित्यः श्रावणत्वादित्यत्र सत्प्रतिपक्षत्वं न स्यात् । श्रावणत्वे नित्यत्वव्याप्तिवैशिष्ट्यस्य सात्त्वात् नित्यत्वव्याप्तिविशिष्टश्रावणत्ववैशिष्ट्याप्रसिद्ध्या, आरोप्यस्याप्रसिद्धत्वात् तादृशवैशिष्ट्यावगाहिज्ञानविषयपक्षकत्वरूपबलवत्त्वस्य प्रतिहेतावभावादिति समुदिततात्पर्यार्थः ।

1 लक्षणान्तरमाशङ्क्य निषेधति—अनिर्धारितेतीति । अनिर्धारितविशेषसाध्याभावबोधकलिङ्गकत्वे सति, अनिर्धारितविशेषप्रकृतसाध्यबोधकलिङ्गत्वमिति लक्षणार्थः ।

* मूले विशेषो हि व्याप्तिपक्षधर्मतादिभङ्गादिलक्षणो वक्तव्य इति । व्याप्तिपक्षधर्मताप्रमितिविषयत्वतद्भ्रमविषयत्वान्यन्तररूपो विशेष इत्यर्थः । तत्र चोक्तमेव दूषणमिति । एकत्र हेतौ व्याप्तिपक्षधर्मताभङ्ग आवश्यकः । इत्थं च अनयोरेकतरत् बाध्यं विरुद्धार्थग्राहकत्वादिति सामान्यत एकत्र भङ्गनिर्धारणं सत्प्रतिपक्षतादशायां वर्तत इति लक्षणमसंभवीति दूषणमुक्तप्रायमित्यर्थः ।

मित्यादि स्वयमूहनीयम् । [1]संशयविरोधितुल्यद्वयविषयानुमितिजनकत्वं सत्प्रतिपक्षत्वमिति रत्नकोशः । इदं तु चिन्त्यते । परस्परं प्रतिबन्धादत्र ज्ञानाभ्यां नोत्पत्तव्यम् ।

[2]परस्परप्रतिबन्धस्त्वनुमित्योरेव वा ? तत्कारणीभूतविशिष्टलिङ्गपरामर्शयोर्वा ? लिङ्गपरामर्शसामग्र्योर्वा ? नाद्यः, अनुमित्यङ्गीकारप्रसङ्गात् । न द्वितीयः, स हि लिङ्गपरामर्शयोः समानकालत्वे सति स्यात् । तच्च न संभवति, ज्ञानोत्पत्तियौगपद्याभावात् । स्थितियौगपद्यं भवत्विति चेत् व्याप्तिपक्षधर्मताज्ञानाभ्यां विशिष्टपरमर्शस्योत्पादः । न ह्येकस्य व्याप्तिपक्षधर्मताज्ञानयोः कालेऽपरस्य व्याप्तिपक्षधर्मताज्ञानद्वयं संभवति, ज्ञानचतुटयस्य यौगपद्यासंभवात् ।

नापि तृतीयः । लिङ्गपरामर्शकारणं व्याप्तिज्ञानं पक्षधर्मताज्ञानं च । तयोरपि विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वात् पुनरपि ज्ञानचतुष्टयस्य यौगपद्यापत्तेः । तत्कथमेतत् ?

उच्यते—तदा हि शब्दे धर्मिणि समूहालम्बनानुभवात्कृतकत्वश्रावणत्वयोस्तुल्यकालसंस्कारोद्बोधात् समूहालम्बनरूपैवोभयोर्व्याप्तिस्मृतिरुत्पद्यते । तदनन्तरमिन्द्रियसंनिकर्षादिभ्यः समूहालम्बनतृतीयलिङ्गपरामर्श-

ननु परस्परप्रतिरोधो दुर्निरूपः, विकल्पासहत्वादित्याशङ्कते—परस्परप्रतिरोधस्त्विति । स हीति । परस्परप्रतिरोध इत्यर्थः । इष्टापत्तिमाशङ्क्याह—तच्चेति । समानकालत्वमित्यर्थः । [3]तत्र हेतुमाह—ज्ञानोत्पत्तीति । शङ्कते—स्थितीति । परिहरति—नेति । नापि तृतीय इति । लिङ्गपरामर्शसामग्र्योरिति पक्ष इत्यर्थः । ज्ञानचतुष्टययौगपद्यप्रसङ्गो दुर्वार इत्याह—लिङ्गेति । तदनन्तर-

1 मूले संशयविरोधीत्यादि । विरोधितुल्यकोटिद्वयविषयिणि या संशयरूपा अनुमितिः, तज्जनकत्वमित्यर्थः । विरोधितुल्यद्वयं विषयो यस्याः सा विरोधितुल्यद्वयविषया । सा चासावनुमितिश्च विरोधितुल्यद्वयविषयानुमितिः । संशयश्चासौ तादृशानुमितिश्चेति समसो ज्ञेयः ।

2 परस्परप्रतिरोधादिति टीकासंमतः पाठः ।

3 तत्र हेतुमाह—ज्ञानोत्पत्तीतीति । तच्च न संभवतीति मूलोक्ते समानकालत्वासंभवे हेतुमाहेत्यर्थः ।

लक्षणज्ञानमुत्पद्यते । अत एकस्मिन् काले विरोधिकार्यद्वयकारणसद्भावान्नैकमपि कार्यमुत्पद्यते । यद्वा विरोधिव्याप्तिद्वयसंस्कारोद्बोधे कृतकत्वश्रावणत्वज्ञानयोः परस्परप्रतिबन्धान्न व्याप्तिस्मृतिजनकत्वम् । ततश्च विरोधिप्रतिबद्धज्ञानत्वमेव दूषकताबीजम् । अत एव नासाधकतानुमाने व्यर्थविशेषणत्वम् । हेत्वाभासान्तरसंकीर्णता तु पूर्ववदवगन्तव्या । केवलान्वयिन्यपि संभवः, साध्यस्य पक्षनिष्ठात्यन्ताभावस्य वा पक्षीकरणात्;

मिति । व्याप्तिस्मृत्यनन्तरमित्यर्थः । बुद्धिसौकर्यादाह—यद्वेति । अत एवेति । विरोधिप्रतिबद्धज्ञानत्वस्य दूषकताबीजत्वादेवेत्यर्थः । बाधादिसंकीर्णता स्यादित्याशङ्क्योपाधेर्यसंकरेऽप्युपाधेरसंकार इत्याह—हेत्वाभासान्तरेति । 'घटोऽभिधेयः प्रमेयत्वात्' इत्यादौ [1]सत्प्रतिपक्षस्यासंभव इत्याशङ्क्याह—केवलान्वयिन्यपीति । उदाहरति—यथेति । अप्रसिद्धविशेषणः पक्ष इत्याशङ्क्याह—तत्प्रतियोगिकत्वमिति । [2]अयमाशयः—'घटोऽभिधेयः प्रमेयत्वात्' इत्यत्र 'अभिधेयत्वं घटनिष्ठात्यन्ताभावप्रयितोगि, जात्यन्यत्वे सति घटमात्रवृत्त्यन्यत्वात् घटान्योन्याभाववत्' । मात्रपदं स्वरूपासिद्धिवारणार्थम् । यस्य मते स्वरूपासिद्धिवारकं हेतौ विशेषणं न दीयते, तन्मतेऽभावविशेषणत्वेन व्यर्थता । घटवृत्तिद्रव्यत्वादिजातौ व्यभिचारवारणाय सत्यन्तम् । न च पक्षैक्याभावात्कथं सत्प्रतिपक्षतेति वाच्यम् । पूर्वसाध्यविरोधिप्रतिसाधनवत्त्वमेव दूषकतायां तन्त्रम्; [3]न त्वधिकम्, व्यर्थत्वादिति ।

[4]ननु सत्प्रतिपक्षे परामर्शद्वयस्याविरोधेऽनुमितिरेव स्यात् । विरोधे एकत्र व्याप्तिभङ्गज्ञानमावश्यकमित्यसिद्धिरेव स्यादिति चेत्; न, परस्परविरोधिपरामर्शद्वयस्य प्रति-

1 सत्प्रतिपक्षस्यासंभव इत्याशङ्क्येति । अभिधेयत्वरूपसाध्याभावस्याप्रसिद्ध्या, घटः नाभिधेय इति प्रतिरोधानुमानस्यासंभवादिति भावः ।

2 मूले अभिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगीति प्रतिज्ञामात्रमुक्तम् । न्यूनतापरिहाराय तत्र विवक्षितं हेतुं सदलप्रयोजनं दृष्टान्तं च निरूपयति—अयमाशय इति । घटनिष्ठोऽत्यन्ताभावोऽभिधेयत्वप्रतियोगिक इत्यत्र घटवृत्तिनित्याभावत्वात् घटनिष्ठान्योन्याभाववदिति हेतुदृष्टान्तश्च बोध्यः ।

3 नत्वधिकं तन्त्रमिति । पक्षैक्यं न तन्त्रमित्यर्थः ।

4 सत्प्रतिपक्षस्थलेऽपि व्याप्यत्वासिद्धिरेवेत्याशङ्क्य उपजीव्यत्वेनास्य पृथक् दूषणत्वमाह—ननुसत्प्रतिपक्षे इत्यादिना ।

यथा 'घटोऽभिधेयः प्रमेयत्वात्' इत्यत्रानुमाने अभिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि । यद्वा घटनिष्ठात्यन्ताभावोऽभिधेयत्वप्रतियोगिकः । तत्प्रतियोगिकत्वं तदन्योन्याभावे प्रसिद्धम् । अतो नाप्रसिद्धिः ।

### असिद्धः

अथासिद्धः । तत्साध्यव्याप्यत्वप्रकारकप्रमाव्यतिरेकतत्पक्षधर्मताप्रकारकप्रमाव्यतिरेकान्यतरत्वमसिद्धत्वम् । तदन्यतरत्वं तदन्यान्यत्वम् । अतो यत्र व्यतिरेकद्वयं तत्र नाव्याप्तिः । न तु व्याप्तिपक्षधर्मताभ्यां रहितोऽसिद्ध इति लक्षणम्, तद्व्याप्तिपक्षधर्मतावैशिष्ट्यस्याप्रसिद्धत्वेनासिद्ध-

बन्धकत्वज्ञानानन्तरं व्याप्तिभङ्गज्ञानमित्युपजीव्यत्वेन व्यभिचारवदस्य दोषत्वात् । अत एव सद्धेतौ सत्प्रतिपक्षतापन्ने व्याप्त्यादिभङ्गाभावेऽप्यनुमितिप्रतिबन्धकज्ञानं विरोधिपरामर्शसहितं जनकपरामर्शरूपमेव ; तद्विषयश्च पूर्वसाधनं तद्विषयतावच्छेदकं प्रतिसाधनमेव ; तद्वत्त्वं च तस्मिन्नविकलमिति प्रतिबन्धकज्ञानविषयतावच्छेदकरूपवत्त्वाद्धेत्वाभासता तस्य । सत्प्रतिपक्षस्योक्तप्रणाड्या केवलान्वयिन्यपि संभव इति ।

### असिद्धः

क्रमप्राप्तमसिद्धं लक्षयति—अथेति । निरूप्यत इति शेषः । असिद्धलक्षणमाह—तत्साध्येति । तत्साध्यव्याप्यत्वं प्रकारो यस्याः; सा च सा प्रमा च ; तद्व्यतिरेकश्च पक्षधर्मताप्रकारकप्रमाव्यतिरेकश्च ; तदन्यतरत्वमित्यर्थः । अन्यतरत्वं निर्वक्ति—तदन्येति । लक्षणान्तरमाशङ्क्याह—न त्विति । व्याप्तिविरहमात्रस्य पक्षधर्मतारहितेऽव्याप्तेः, पक्षधर्मतारहितस्य व्याप्तिरहितेऽव्याप्तेः; [1]उभयाभाववत्त्वस्य प्रत्येकाभाववदादावव्याप्तेः । न च व्याप्तिविशिष्टपक्षधर्मत्वाभावो विशेषणादनुगतः सर्वत्रैवाऽस्तीति वाच्यम् । 'इदमाधकम्, व्याप्तिविरहवत्त्वात्' इत्यस्यैव गमकत्वेऽधिकवैयर्थ्यात् ; प्रत्येकाभावमात्रोद्भावने वादिनिवृत्तेश्चेत्यादिदोषे सत्येव दोषान्तरमाह—तद्व्याप्तीति ।

1 उभयाभाववत्त्वस्य प्रत्येकाभाववदादावव्याप्तेरिति । व्याप्तिपक्षधर्मतयोरेकस्या अभाववत्यपि उभयं नास्तीति प्रतीतिसिद्धोभयाभावस्य संभवात्कथमेतदिति चिन्तनीयम् ।

रुद्भावयितुमशक्यत्वात् ; अन्यस्यातिप्रसञ्जकत्वात् । एवमन्यान्यपि लक्षणानि दूषणीयानि ।

तदयमाश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धभेदेन त्रिविधः । आश्रयविशेषणासिद्धहेतुस्वरूपविशेषणासिद्धावप्यत्रैवान्तर्भवतः । यथा 'अयं काञ्चनमयः पर्वतो वह्निमान्, काञ्चनमयधूमवत्त्वात्' इति ।

एवं भागासिद्धोऽपि । व्याप्यत्वासिद्धस्तूपाधिदर्शनानुकूलतर्का-

असिद्धं विभजते—**तदयमिति** । आश्रयविशेषणासिद्धहेतुस्वरूपविशेषणासिद्धयोः सत्त्वात् कथमसिद्धस्त्रिविध इत्याशङ्क्याह—**आश्रयविशेषणेति** । आश्रयासिद्धमुदाहरति—**यथेति** । ननु पक्षविशेषणाभावादाश्रयासिद्धिर्वाच्या । तथाच तज्ज्ञाने सत्यपि विशेष्यधर्मिणि लिङ्गपरामर्शसंभवेनानुमित्यप्रतिबन्धेन कथं हेत्वाभासतेति चेत्, तज्ज्ञाने विशिष्टपक्षकानुमितिप्रतिबन्धकत्वेनैव हेत्वाभासत्वाद्धेतोर्विशिष्टपक्षवृत्तित्वाभावेनासिद्धसामान्यलक्षणेन संग्रहश्च ।

भागासिद्धस्य कुत्र वान्तर्भाव इति जिज्ञासायामाह—**एवमिति** । **भागासिद्धोऽपीति** । 'वाङ्मनसे अनित्ये, कार्यत्वात्' इति भागासिद्धोऽपीत्यर्थः । एभिरेव प्रकारैरसिद्धोद्भावनं, वादिनिवृत्तिः, अनुमितिप्रतिबन्धः, असाधकतानुमानं चेति प्रत्येकमेव दोषत्वमिति भावः । अथाश्रयासिद्धादिज्ञानमात्रादेव स्वार्थानुमितेरिव प्रतिबन्धकत्वसंभवेन परं प्रत्यपि तदुद्भावनमेवोचितम् ; न त्वसाधकतानुमानमपि । अन्यथा अर्थान्तरतैव स्यादिति चेत् ; परोपन्यस्तसाधकान्मध्यस्थादीनामनुमित्युत्पादाभावः । तस्य चासाधकत्वेन ज्ञानं चेति द्वयमप्युद्देश्यं दोषदातुः । तत्र चाद्यं दोषोद्भावनादेव । अपरं च 'इदमसाधकम्, असिद्धत्वात्' इत्यादिप्रकारेण लिङ्गोपन्यासादेव । अथवा कथकसंप्रदायानुरोधेन दोषोद्भावनानुमितिप्रतिबन्धवदेतादृशलिङ्गोपन्यासेनैव परापकर्षो बोध्यः; नान्यथेत्यसाधकतानुमानस्यावश्यकत्वादित्यास्तां विस्तरः ।

नन्वेवं प्रत्येकज्ञानस्यानुमितिप्रतिबन्धकत्वे हेत्वाभासाधिक्येन पञ्चैव हेत्वाभासा इति विभागव्याघात इति चेत् ; न । व्याप्तिविशिष्टपक्षधर्मत्वाभावेन परामर्शविषयाभावत्वेन च त्रयाणामप्यसिद्धत्वेन महर्षिणा विभागः कृत इति न विभागविरोध इति संक्षेपः ।

भावादितः । व्यभिचारविरुद्धयोस्तु यद्यपि व्याप्तेरज्ञानम् , तथाप्युपजीव्यत्वाद्यथा पृथग्दूषणत्वं तथा प्रागुक्तमेव । अन्यसंकीर्णता तु पूर्ववदूहनीया । व्याप्तितज्ज्ञानपक्षधर्मतातज्ज्ञानव्यतिरेकज्ञानानामन्यतमस्य दूषकताबीजत्वम् ।

### बाधितः

अथ बाधितः । तत्तल्लिङ्गादतिरिक्तप्रमाणेन स्वपक्षे साध्याभावप्रमा बाधः । साध्याभाववत्ताया निश्चितपक्षकत्वं हेतोर्बाधितत्वम् । अनैकान्तिके पक्षे साध्यसंदेह एव । विरुद्धे यद्यपि पक्षे साध्याभावप्रमा, तथापि साध्यसाधकतयोपन्यस्ताल्लिङ्गादेव ; न तु तत्पूर्वमन्यस्मात्कुतश्चित्प्रमाणात् । बाधिते त्वेवम् । अत एव बाधस्य पृथग्दूषणत्वम् । सत्प्रति-

नन्वेवं व्यभिचारविरुद्धयोरपि व्याप्यत्वासिद्धावन्तर्भावः, व्याप्त्यभावादित्याशङ्क्योपजीव्यत्वादिति शङ्कोत्तराभ्यामाह—**व्यभिचारविरुद्धयोरित्यादिना** । निगदव्याख्यातमन्यत् ।

### बाधितः

क्रमप्राप्तं बाधं लक्षयति—**अथ बाधित इति** । **प्रमाणेनेति** । बलवत्प्रमाणेनेत्यर्थः । अत्र साध्याभावज्ञानमात्रं बाध इत्युक्ते, [1]अधिकबलाज्ञाने तृतीयलिङ्गपरामर्शो विशेषदर्शनत्वेन साध्याभावज्ञानं परिभूय साध्यं साधयेत् 'पर्वते धूम इव वह्निम्' । एवं चासंभवः । तत्परिहारार्थं प्रमापदम् । सा च प्रमात्वेन ज्ञाता प्रतिबन्धिका, तस्या अधिकबलत्वेनावगतत्वात् । साध्याभावप्रमा बाध इत्युक्ते, सव्यभिचारादावतिव्याप्तिः । तदर्थं पक्ष इति । अनैकान्तिके पक्षे साध्यसंदेह एवेति नोक्तदोषः । एतावति कृते विरुद्धेऽतिव्याप्तिः । तदर्थं तल्लिङ्गादतिरिक्तप्रमाणेनेति । विरुद्धे तु तल्लिङ्गादेव तत्प्रमा ; न तु लिङ्गान्तरेणेति नोक्तदोष इति दिक् । असाधकतानुमान सौकर्यार्थं हेतुनिष्ठतयोक्तिः स्वीकर्तव्येत्यभिप्रायेणाह—**साध्याभाववत्तयेति** । व्यभिचारसांकर्यमाशङ्क्याह—**निश्चितेति** । पक्षपदस्य प्रयोजनमाह—**अनैकान्तिकश्चेति** । विरुद्धसांकर्यमाशङ्क्याह—**विरुद्ध इत्यादिना** । **तथापीति** । तादृशप्रमायाः

1 अधिकबलाज्ञान इति । साध्याभावज्ञाने प्रमात्वनिश्चयाभाव इत्यर्थः ।

पक्षे तु परस्परप्रतिबन्धात् ज्ञानोत्पत्तेरभावात्प्रमाव्यतिरेक एव । असिद्धे च साध्यज्ञानसामग्रीव्यतिरेकमात्रम्; न तु व्यतिरिक्तज्ञानसामग्रीति महानेव विशेषः ।

अत एव यत्कैश्चिदुच्यते—असिद्धानैकान्तिकयोरेव बाधितस्यान्तर्भाव इति; तदपि निरस्तम्, उपजीव्यत्वात् । तथाहि—यावत्प्रमाणान्तरात्पक्षे साध्याभावप्रमा नोत्पन्ना, तावदसिद्धानैकान्तिकावप्युद्भावयितुं न शक्येते । सा चेदुत्पन्ना, कथं तस्यां विद्यमानायां तद्विरोधिसाध्यप्रमोत्पादः? अत एवोपजीव्यत्वाद्बाध एव पृथग्दूषणम् ।

न च बलवता बोधितसाध्यविपर्ययत्वं बाधलक्षणम् । बलवत्त्वं यदि पक्षधर्मत्वादिना, तदान्वयव्यतिरेकिणा केवलान्वयिकेवलव्यतिरेकिणोः सर्वत्र बाधप्रसङ्गः । नापि प्रमाणेन बोधितसाध्यविपर्ययत्वं

सत्त्वेऽपीत्यर्थः । लक्ष्ये लक्षणमस्तीत्याह—बाधिते त्विति । अत एवेति । व्यभिचाराद्यसंकीर्णत्वादेवेत्यर्थः । सत्प्रतिपक्षेऽतिव्याप्तिमाशङ्क्याह—सत्प्रतिपक्ष इति ।

केषांचिन्मतं निरस्यति—अत एवेति । [1]निरस्तमित्यत्र हेतुमाह—उपजीव्यत्वादिति । उपजीव्यत्वमेव प्रतिपादयति—तथाहीत्यादिना । सा चेदिति । साध्याभावप्रमा चेदित्यर्थः । तस्याम् । साध्याभावप्रमायां विद्यमानायां तद्विरोधिसाध्यप्रमोत्पादः कथमिति योजना ।

बाधस्य लक्षणान्तरमाशङ्क्य निराकरोति—न चेति । बलवता बोधितसाध्यस्य विपर्ययोऽभावो यस्य तस्य भावस्तत्त्वमित्यर्थः । बलवत्त्वं पक्षसत्त्वादिना वा ? प्रमाणेन वा ? इति विकल्प्याद्यं कल्पं प्रतिषेधति—बलवत्त्वं यदीति । बाधप्रसङ्ग इति । तत्रातिव्याप्तिरित्यर्थः । न द्वितीय इत्याह—नापीति । तादृशत्वादिति । [2]प्रमाणेन

1 निरस्तमित्यत्र हेतुमाह-अपजीव्यत्वादितीति । निरस्तं मतं बाधितस्यासिद्धानैकान्तिकयोरन्तर्भाव इति । तत्र बाधस्थले पक्षे हेत्वभावे असिद्धिः । हेतोः सत्त्वे पक्षान्तर्भावेनैवानैकान्तिकतेति बोध्यम् ।

2 प्रमाणेन बोधितसाध्यविपर्ययत्वादिति । विरुद्धस्य हेतोः साध्याभावप्रमाकरणत्वेनप्रमाणत्वात् तेन बोधितसाध्यविपर्ययत्वं विरुद्धेऽस्तीति भावः ।

लक्षणम् , विरुद्धस्यापि तादृशत्वात् । एवमन्यान्यपि लक्षणानि दूषणीयानि ।

इदं तु चिन्त्यते—बाधवत्सिद्धसाधनमपि पृथग्दूषणस्तु । साध्यज्ञानात्संशयनिवृत्तौ सत्यामाश्रयविशेणीभूतसंशयविषयत्वाभावादाश्रयासिद्धौ सिद्धसाधनस्यान्तर्भाव इति चेत् ; न । तर्हि बाधोऽप्येवमस्तु । तत्रापि साध्याभावनिश्चयात्संशयनिवृत्तौ सत्यामाश्रयविशेषणीभूतसंशयनिवृत्तिरस्त्येव । न हि संशयनिवृत्तिद्वारा बाधस्य पृथग्दूषणत्वम् । किंतु साध्याभावज्ञानं साध्यज्ञानस्य स्वत एव प्रतिबन्धकम् । न चैवं सिद्धसाधने । न हि साध्यज्ञानं साध्यज्ञानस्य प्रतिबन्धकम्, धारावाहिकादौ तथादर्शनात् ।

बोधितसाध्यविपर्ययत्वादित्यर्थः । **एवमिति** । पूर्वोक्तलक्षणं यथातिव्याप्तिग्रस्तं, तथा लक्षणान्तराण्यप्यतिव्याप्त्यादिग्रस्तानीत्येवंशब्दार्थः । **अन्यान्यपीति** । साध्याभावप्रमा, साध्याभावज्ञानमात्रं वा, प्रमितसाध्याभाववत्पक्षकत्वमित्येवमादीन्यपीत्यर्थः । संदेहादिघटितपक्षताविघटनद्वारा सिद्धसाधनं दूषणम् ; न स्वत इति सिद्धान्तयिष्यन् प्रथमं तदङ्गतया पूर्वपक्षयति—**इदं त्विति** । आश्रयासिद्धावेव सिद्धसाधनस्यान्तर्भाव इति शङ्कते—**साध्यज्ञानादिति** । प्रतिबन्द्या परिहरति—**न तर्हीत्यादिना अस्त्येवेत्यन्तेन** ग्रन्थेन । सिद्धसाधने सति पक्षत्वाभाव इति बाधवदुपजीव्यत्वात्सिद्धसाधनमपि कथं न पृथक् हेत्वाभास इति भावः । यदि संशयनिवृत्तिद्वारा बाधस्य दूषणत्वं स्यात्, तदैवं भवेदिति परिहरति—**न हीति** । कथं तर्हि प्रतिबन्धकमिति जिज्ञासायामाह—**किंतु साध्याभावेति** । तदुपजीव्यत्वात् सिद्धसाधनमप्यत एव साध्यज्ञानप्रतिबन्धकमस्त्वित्याशङ्क्याह—**न चैवमिति** । साध्यज्ञानं साध्यज्ञानस्य न प्रतिबन्धकम्, अनुभवविरोधादिति परिहरति—**न हीति** । **तथा दर्शनादिति** । एकज्ञानस्य स्वसमानविषयकज्ञानान्तराप्रतिबन्धकत्वेन दर्शनादित्यर्थः । न च साध्यज्ञानमनुमितिप्रतिबन्धकमिति वाच्यम् । अनुमित्सया प्रत्यक्षसिद्धेऽप्यनुमितिदर्शनात् । अत एवोक्तं **वाचस्पतिमिश्रैः प्रमाणटीकायाम्**—"प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति । तस्मात् साध्यज्ञानं नानुमितिप्रतिबन्धकमिति भावः ।

ननु—अभावज्ञानेऽपि सति भावज्ञानं दृष्टम् । यथा रजते 'नेदं रजतम्' इति भ्रमानन्तरं विशेपदर्शनात् रजतमिति ज्ञानम् । न तत्राभावप्रमेति चेत्; न, 'शङ्खो न पीतः, किं तु श्वेतः' इति ज्ञान एव पीतिमज्ञानमुत्पद्यते । अतः कथमेतत् ?

उच्यते—विरोधिज्ञानं हि सर्वत्र प्रतिबन्धकम् । साक्षात्कारिभ्रमस्य साक्षात्कार एव विरोधी, न त्वनुमानादिः । 'पीतः शङ्खः' इत्यत्र तु न तस्मिन् काले पीतत्वाभावसाक्षात्कारः । किंतु प्रमाणान्तरम् । तच्च न विरोधि । ततो यत्र यद्विरोधि, तत्सद्भावात्तत्र विरोध्यन्तरज्ञानं नोत्पद्यत इति सर्वं सुस्थम् । केचित्तु सिद्धसाधनमर्थान्तरेऽन्तर्भावयन्ति । तच्चिन्त्यम् ।

साध्याभावज्ञानमपि साध्यज्ञानप्रतिबन्धकं न भवति, तस्मिन् सति तद्दर्शनादिति शङ्कते—**नन्विति** । तद्दर्शयति—**यथेति** । ननु न साध्याभावज्ञानं साध्यज्ञान-प्रतिबन्धकम्; किंतु साध्याभावप्रमा साध्यज्ञानप्रतिबन्धिकेति प्रकृते तदभाव इत्याशङ्कते—**न तत्रेति** । साध्याभावप्रमापि न साध्यज्ञानप्रतिबन्धिका, व्यभिचारादिति परिहरति—**न शङ्ख इत्यादिना** । उपजीव्यत्वेऽपि साध्याभावप्रमायाः स्वतः साध्य-ज्ञानं प्रति प्रतिबन्धकत्वाभावान्न पृथक् हेत्वाभासत्वमिति भावः ।

समाधत्ते—**उच्यत इति** । तर्हि 'न पीतः शङ्खः, किंतु शुक्लः' इति परोक्षज्ञानात् 'पीतः शङ्खः' इति भ्रमस्य निवृत्तिः स्यादित्यत आह—**साक्षात्कारीति** । साक्षात्कार एवेत्यत्र एवकारव्यवच्छेद्यं दर्शयति—**न त्विति** । **तत्सद्भावादिति** । विरोधिज्ञानसद्भावादित्यर्थः । संदेहघटितपक्षताविघटनद्वारा सिद्धसाधनं दूषणमिति सकलसंमतम् । अतस्तदर्थान्तरेऽन्तर्भूतमित्यभिसंधिमानाह—**तच्चिन्त्यमिति** ।

नन्वेवमसंकीर्णोदाहरणाभावाद्बाधो न पृथक् हेत्वाभास इति चेत्; न । 'रूपप्रागभावावच्छिन्नो घटो रूपवान्, पृथिवीत्वात्' इत्यादौ व्यभिचाराभावात् बाध एव दूषणम् । [1]स च प्रागभावरूपसाध्यविरहप्रमैव । अथ—प्रागभावविशिष्टो घटः पक्षः,

1 स च प्रागभावरूपसाध्यविरहप्रमैवेति । स च बाधश्च । प्रागभावरूपो यः साध्यविरहः तत्प्रमेत्यर्थः । तत्र रूपात्यन्ताभावस्यासत्त्वान्न पक्षान्तर्भावेण हेतोर्व्यभिचारः । साध्याभाववद्वृत्ति-

तथाच [1]विशिष्टे प्रागभावाभावादत्यन्ताभाव एव ; कालत्रयेऽपि विशेषणांशे रूपावृत्तेः । अतो व्यभिचार एवेति चेत्—मैवम् । न तत्र प्रागभावविशिष्टः पक्षः; किंतु पक्षतावच्छेदके प्रागभावावच्छिन्नेति विशेषणम् । तथाच पक्षतावच्छेदकविशिष्टे पक्षे विशेषणांशे साध्यावृत्तित्वेन यदि व्यभिचारी स्यात् , तर्हि 'शब्दोऽनित्यः, शब्दत्वात्' इत्यादौ शब्दत्वरूपपक्षतावच्छेदकविशेषणविशिष्टे कालत्रयेऽप्यनित्यत्वस्यावृत्त्या बाध एव स्यादिति बहुव्याकुली स्यात् । [2]न च वाच्यम्—'गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वात्' इत्यादौ गन्धात्यन्ताभावोऽवश्यं वाच्यः, अन्यथा एतादृशं वाक्यं योग्यं स्यात् । न च यत्र हि धर्मिणि यत्प्रागभावस्तत्र न तदत्यन्ताभाव इति वाच्यम्, तत्काले प्रतियोगिसत्त्वप्रसङ्गादिति । 'गन्धप्रागभावावच्छिन्नो घटो गन्धवान्' इत्यादिवाक्ये यद्युक्तकाल उपलक्षणत्वेन वक्तुस्तात्पर्यविषयः, [3]तदैकस्य द्वययोग्यत्वाद्योग्यमेव । यदि च विशेषणत्वे तात्पर्यम् , तर्हि विशेषणांशे रूपासत्त्वादयोग्यमेव । अनुमितौ च तात्पर्यादेरनुपयोगात्पक्षतावच्छेदकावच्छिन्ने प्रकृतस्थले बाध एव ।

वस्तुतस्तु—प्रागभावकालविशिष्टेऽत्यन्ताभावसत्त्वेऽपि न व्यभिचारः, गन्धरूपप्रतियोगिसमानाधिकरणत्वात् ; [4]प्रतियोग्यसमानाधिकरणसाध्यात्यन्ताभाववद्वृत्तित्वं व्यभि-

त्वमात्रं न व्यभिचारः । गुणवान् द्रव्यत्वादित्यस्य व्यभिचारित्वापत्तेः, गुणप्रागभाववत्त्वाद्यक्षणावच्छिन्नघटादौ द्रव्यत्वसत्त्वात् । अतः साध्यात्यन्ताभाववद्वृत्तित्वमेव व्यभिचारः । स च प्रकृते न संभवतीति व्यभिचाराद्यसंकीर्णबाधो निरुक्तस्थले इति भावः ।

1 विशिष्टे प्रागभावाभावादिति । घटत्वे घटे च प्रमेयत्वसत्त्वात् घटत्वविशिष्टे प्रमेयत्वं वर्तत इत्युच्यते । रूपप्रागभावरूपविशेषणे रूपप्रागभावस्याभावात् रूपप्रागभावविशिष्टे घटे रूपप्रागभावो नास्ति । तथाच विरोधिनोऽभावात् रूपात्यन्ताभावोऽस्तीति पक्षान्तर्भावेण साध्यात्यन्ताभाववद्वृत्तित्वरूपो व्यभिचारोऽस्त्येवेति भावः ।

2 न च वाच्यं गन्धप्रागभावावच्छिन्न इत्यादि । तत्काले प्रतियोगिसत्त्वप्रसङ्गादित्युत्तरेण न च वाच्यमित्यस्य योजना ।

3 एकस्य द्वययोग्यत्वादिति । घटस्य आद्यक्षणावच्छेदेन गन्धप्रागभाववत्त्वस्य द्वितीयादिक्षणावच्छेदेन गन्धवत्त्वस्य च सत्त्वादित्यर्थः ।

4 प्रतियोग्यसमानाधिकरणसाध्यात्यन्ताभाववद्वृत्तित्वं व्यभिचार इत्युक्तत्वादिति । कपिसंयोग्येतत्त्वादित्यादौ अव्याप्यवृत्तिसाध्यके व्यभिचारित्ववारणाय व्यभिचारशरीरघटकसाध्याभावे प्रतियोग्यसमानाधिकरणत्वविशेषणस्यावश्यकत्वादिति भावः ।

तदयमुपजीव्यबाधानुपजीव्यबाधभेदेन द्विविधः । तत्राश्रयसाध्यलिङ्गव्याप्त्यादीनामुपजीव्यत्वेन तद्ग्राहकप्रमाणविरोधादुपजीव्यबाधो बहुविधः । उदाहरणं प्रसिद्धमेव । अनुपजीव्यबाधस्तु यथा पर्वतवृत्तिवह्न्यभावं पश्यन्नेवानुमानेन वह्निं साधयतीत्यादिस्वरूपः स्वयमूहनीयः । आश्रयविशेषणासिद्धानैकान्तिकव्याप्यत्वासिद्धसंकीर्णता सर्वत्र । इतरसंकीर्णता तु क्वचित् । दूषकताबीजमुक्तमेव ।

इति हेत्वाभासाः

चार इत्युक्तत्वात् । न च विशेषणभेदाद्विशिष्टभेदेन प्रागभावविशिष्टं न गन्धाधिकरणम्; [1]अतो व्यभिचार एवेति वाच्यम्, एकस्यापि घटस्यानेकक्षणविशिष्टतया विशेषणभेदेन घटभेदे प्रतिक्षणं स्वीक्रियमाणे क्षणिकत्वापत्तौ बौद्धमतप्रवेशापत्तेरिति । अथ [2]प्रागभावेऽवच्छेदके हेत्वसिद्धिः, अवच्छेद्ये सिद्धसाधनमिति चेत्; पक्षतावच्छेदकधर्मविशिष्टपक्षे साध्यवैशिष्ट्यस्य पक्षधर्मताबलेनानुमानविषयत्वादनुमानविषये सिद्ध एव हि सिद्धसाधनम् । तस्मात्प्रागभावावच्छेदेन प्रतियोगिसाधने बाध एव; न सिद्धसाधनम् । न चास्य हेत्वाभासान्तरासंकीर्णतायामपि संदेहघटितपक्षत्वाभावादाश्रयासिद्धिरेव कथं न भवतीति वाच्यम्, सति बाधे पक्षत्वाभाव इति बाध एवोपजीव्यत्वादिति दिक् ।

बाधं विभजते—तदयमिति । तत्रेति । उपजीव्यबाधानुपजीव्यबाधयोरित्यर्थः । धर्मिग्राहकमानबाधितः—१ 'घटो व्यापकः, सत्त्वात्' इति प्रत्यक्षेण; २ 'परमाणवः सावयवाः, मूर्तत्वात्' इत्यनुमानेन; ३ 'मेरुः पाषाणमयः पर्वतत्वात्' इति सुवर्णमयत्वबोधकागमेन । साध्यग्राहकबाधितः—४ 'नरशिरः-

1 अतो व्यभिचार एवेति । प्रागभावविशिष्टे गन्धाभावेन तन्निष्ठगन्धात्यन्ताभावस्य प्रतियोग्यसमानाधिकरणत्वेन तद्वद्वृत्तौ पृथिवीत्वे व्यभिचारोऽस्तीति भावः ।

2 अवच्छेदके हेत्वसिद्धिरिति । अवच्छेदके प्रागभावे साध्यसाधने पृथिवीत्वहेतोस्तत्राभावेन हेत्वसिद्धिर्दोषः । अवच्छेद्ये घटे साध्यसाधने सिद्धसाधनम् । तथाच तत्रानुमितिः प्रमैवेति न बाधो दोषः । अवच्छेदकविशिष्टं चावच्छेद्यमवच्छेदकावच्छेद्याभ्यां नातिरिक्तमिति कथमुक्तस्थलेऽसंकीर्णबाध इति भावः ।

## छलनिरूपणम्

सद्दूषणापरिस्फूर्तौ जिगीषया छलादिकमपि प्रयोक्तव्यमिति हेत्वाभासानन्तरं छलं निरूप्यते । वादिनोऽन्यथाभिप्रायपूर्वकं वाक्यान्तरेण दूषणाभिधानं छलम् । त्रिविधमेतत्—वाक्छलं, सामान्यच्छलम्, उपचार-

कपालं शुचि प्राण्यङ्गत्वात्, शङ्खवत्' इत्यागमेन ; ५ 'वह्निरनुष्णः कृतकत्वात्' इति प्रत्यक्षेण ; ६ शब्दोऽश्रावणः, 'गुणवत्वात्' इत्यनुमानेन ; ७ 'गवयत्वं न गवयपदप्रवृत्तिनिमित्तं जातित्वात्' इत्युपमानेन । हेतुग्राहकबाधितः —८ 'जलानिलावुमावुष्णौ पृथिवीतो विपरीतस्पर्शवत्त्वात् तेजोवत्' इति प्रत्यक्षेण ; ९ 'मनो विभु, ज्ञानासमवाय्याधारत्वात्' इन्यनुमानेन ; १० 'राजसूयं ब्राह्मणकर्तव्यं स्वर्गसाधनत्वात् अग्निष्टोमवत्' इति राजसूयकर्तव्यताबोधकागमेन । तस्मात् [1]दशविधो बाध इत्याशयवानाह—आश्रयेत्यादिना । अनुपजीव्यबाधं दर्शयति—अनुपजीव्यबाधस्त्विति । शेषमतिरोहितार्थम् ।

इति हेत्वाभासाः ।

## छलनिरूपणम्

हेत्वाभासानन्तरं छलं निरूपयितुं प्रतिजानीते—सद्दूषणेति । छलसामान्यलक्षणमाह—वादिन इति । सद्दूषणाभिधानं छलं मा भूदित्येतदर्थम्—वादिनोऽन्यथाभिप्रायपूर्वकमिति ।

[2]वस्तुतस्तु—अर्थविकल्पोपपत्त्या वचनविघातश्छलम् । अर्थस्य विरुद्धत्वेन कल्पनमर्थविकल्पः । तस्योपपत्तिः संभवः । तयाच तया वादिवचनस्य विघातो दूषणं

1 दशविधो बाध इति । १ धर्मिग्राहकमानबाधितः, २ साध्यग्राहकमानबाधितः, ३ साध्यप्रतियोगिग्राहकमानबाधितः, ४ हेतुग्राहकमानबाधितश्चेति चतुर्विधो बाधः । तत्र प्रथमः धर्मिग्राहकमानानां प्रत्यक्षानुमानागमभेदेन त्रैविध्यात् त्रिविधः । द्वितीयस्तु साध्यग्राहकागमसजातीयागमबाधित एकविध एव । यथा नरशिरःकपालं शुचि प्राण्यङ्गत्वाच्छङ्खशुक्तिवदित्यत्र साध्यशुचित्वग्राहकागमसजातीयेन 'नारं स्पृष्ट्वास्थि सस्नेहं सवासा जलमाविशेत्' इत्यागमेन बाधः । तृतीयोऽपि साध्यप्रतियोगिग्राहकमानानां प्रत्यक्षादिभेदेन त्रैविध्यात् त्रिविधः । चतुर्थोऽपि तथैव त्रिविधः । आहत्य दशविधो बाध इति बोध्यम् ।

2 न्यायसूत्रार्थवर्णनेन सूत्रोक्तं छललक्षणं दर्शयति—वस्तुतस्त्विति ।

च्छलं चेति । तत्र मुख्यवृत्त्या प्रयुक्तस्य मुख्यवृत्त्यैव यच्छलं तद्वाक्छलम् । उपचारवृत्त्या प्रयुक्तस्योपचारवृत्त्यैव यच्छलं तदुपचारच्छलम् । एतदुभयातिरिक्तं सामान्यच्छलम् । तेनानुक्त एवोक्तत्वम्, उक्ते चानुक्तत्वमारोप्य यत् दूषणं तत्परिगृहीतं भवति । यथा 'शब्दोऽनित्यो जातिमत्त्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वात्' इत्युक्ते प्रत्यवतिष्ठते—'अजातिमत्त्वे सतीत्यनेनोक्तम्; ततोऽसिद्धिः' इति । यथात्रैव प्रयोगे—'बाह्येन्द्रियग्राह्यत्वादित्येतावन्मात्रमनेनोक्तम्; ततोऽनैकान्तिकम्' इति । अन्यथैतत्कुत्रान्तर्भवतु ? न तावज्जातौ, तल्लक्षणाभावात् । नाप्याभासे, अन्यस्यापि छलस्याभासान्तरान्तर्भावप्रसङ्गात् । नाप्यनवसरग्रहणे, अवसरेऽपि तथोक्तेः संभवात् ।

यत् तत् छलमित्यर्थः । उदाहरणं तु विशेषलक्षणे भविष्यति । विभागमाह—**त्रिविधमेतदिति** । त्रैविध्यमेव दर्शयति—**वाक्छलमिति** । तेषां क्रमेण लक्षणमाह—**तत्रेति** । सामान्यच्छलनिरूपणस्य [1]उपचारच्छलनिरूपणाधीननिरूपणत्वात् क्रमप्राप्तं सामान्यच्छलमपहायोपचारच्छलं लक्षयति—**उपचारेति** । सामान्यच्छलं लक्षयति—**एतदुभयेति** । [2]प्रथमस्योदाहरणमाह—**यथेति** । **प्रत्यवतिष्ठते** । प्रतिवादीति शेषः । प्रत्यवस्थानमेवाह—**अजातिमत्त्वे सतीति** । द्वितीयस्योदाहरणमाह—**यथेति** ।**अनैकान्तिकमिति** । घटत्वादाविति शेषः । एवं ब्रुवाणस्य वादिनोऽनैकान्तिको हेतुरित्येव दूषणं वाच्यम् । तदनभ्युपगमे जातावन्तर्भावो वा ? आभासान्तरे वा ? अनवसरग्रहणे वा ? इति विकल्पाद्यं कल्पं निराकरोति—**न तावदिति** । **तल्लक्षणाभावादिति** । जातिलक्षणाक्रान्तत्वाभावादित्यर्थः । न द्वितीय इत्याह—**नापीति** । **अन्यस्यापीति** । वाक्छलादेरित्यर्थः । तृतीयं दूषयति—**नाप्यनवसरेति** ।

1 उपचारच्छलनिरूपणाधीनत्वादिति । वाक्छलव्यतिरिक्तत्वे सति उपचारच्छलभिन्नच्छलत्वमेव सामान्यच्छलत्वमिति वक्ष्यमाणत्वादिति भावः ।

2 प्रथमस्योदाहरणमाहेति । अनुक्ते उक्तत्वारोपपूर्वकदूषणस्योदाहरणमित्यर्थः । द्वितीयस्येति । उक्ते अनुक्तत्वारोपपूर्वकदूषणस्येत्यर्थः ।

केचित्तु—मुख्यवृत्त्या प्रयुक्ते वृत्तिमात्रेण दूषणं वाक्छलम् । उपचारवृत्त्या प्रयुक्ते वृत्तिमात्रेण दूषणमुपचारच्छलम । विशेषाभिप्रायेण प्रयुक्ते सामान्याभिप्रायेण दूषणं सामान्यच्छलमित्याहुः ।

तदिदं प्रतिज्ञादिभेदेन प्रत्येकं पञ्चविधम् । यथा 'गौरियं कम्बलवती, गोत्वात् इतरगोवत्' इति मुख्यवृत्त्या प्रयुक्ते, मुख्यवृत्तिसंचारेणान्यथार्थं वदति—'गौरिति वाक् स्वीकृता' इति । तत्र बाधितः कम्बलयोगः । अतो बाध इति । तथा कम्बलवतीत्यनेनोर्णासूत्रावयवविशेषवत्त्वमभिप्रेतम् । न चैतस्य गोत्वेन सह व्याप्तिरस्तीत्यनैकान्तिकादि । तथा बाह्यादीनामपि गोत्वात् तत्र पञ्चावयवविशेषस्याभावाद्विरोध इति । एव-

वैशेषिकमतं दर्शयति—केचित्त्विति । वाक्छलस्य लक्षणमाह—मुख्यवृत्त्येति । उपचारच्छलस्य लक्षणमाह—उपचारेति । सामान्यच्छलस्य लक्षणमाह—विशेषेति । यद्यपि सर्वमपि छलं वाङ्निमित्तम्, [1]तथाप्यन्यत्र सामान्योपचारयोः प्रधानत्वात्तेन व्यपदेशः । वाक्छलमुदाहृत्य दर्शयति—यथा गौरियमित्यादिना । उपचारच्छलमुदाहृत्य दर्शयति—एवमित्यादिना । एवमित्युक्तप्रकारेणेत्यर्थः । छलमिति पदानुषङ्गः ।

[2]वस्तुतस्तु—अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् । अनेकार्थाभिधायि पदं वाक्यं वात्राविशेषः । तस्यार्थाभिधानाय प्रयोग एवोपचारात् [3]अविशेषाभिहितेऽर्थे इत्युक्तः । तस्मिन् सति वक्तुरभिप्रायादर्थान्तरकल्पना यत्र, तद्वचन-

1 अन्यत्र सामान्योपचारयोः प्रधानत्वादिति । अन्यत्र सामान्यच्छले उपचारच्छले च सामान्यस्य ब्राह्मणत्वादेः उपचारस्य लक्षणायाश्च प्रधानत्वादित्यर्थः । 'प्राधान्येन व्यापदेशा भवन्ति' इति न्यायादिति भावः ।

2 त्रयाणां छलानां लक्षणानि न्यायसूत्रोक्तानि, तेषां प्रत्यवस्थानप्रकारं च भाष्यसरण्या निरूपयति टीकाकारः—वस्तुतस्त्वित्यादिना वयमालोचयाम इति संक्षेप इत्यन्तेन ग्रन्थेन ।

3 अविशेषाभिहितेऽर्थे इत्युक्त इति । एवंच अविशेषाभिहितेऽर्थे इति भागस्य अर्थाभिधानाय अनेकार्थाभिधायिनि पदे वाक्ये वा प्रयुक्ते सतीत्यर्थः । अर्थान्तरकल्पना यत्र वचनविघाते इति । कारणमिति शेषः ।

मुपचारवृत्त्या प्रयुक्तस्योपचारवृत्त्यैव यथा—'गङ्गेयं घोषवासहेतुः गङ्गात्वात्' इति प्रत्युक्ते, गङ्गासंबन्धिमत्स्यादीनामपि गङ्गात्वात् तत्र घोषाभावादनैकान्तिकमिति। तथा 'गङ्गागुणयोगिनी यमुना गङ्गेव, जलमयत्वात्; तत्र च घोषप्रतिभासाभावः' इत्यपि। तथोपचारवृत्त्या प्रयुक्ते मुख्यवृत्त्या दूषणं यथा—'अयं मञ्चः क्रोशनशीलः, एतद्देशस्थितत्वात्, पुरुषान्तरवत्' इति। मञ्चस्याप्राणित्वात्क्रोशनाभाव इति बाधः।

विघाते तद्वाक्छलम् वाङ्निमित्तत्वादित्यर्थः। उदाहरणमभिधीयते—'नवकम्बलोऽयं माणवकः' इत्युक्ते, छलवाद्याह 'कुतोऽस्य नव कम्बलाः?' इति। नूतनकम्बलवत्त्वं विवक्षितम्। प्रतिवादी तु नवसंख्याककम्बलवत्त्वं वक्तुर्विवक्षितमित्यारोप्यासंभवेन दूषयति। तस्य परिहारमाह वादी। अप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यम्, नवः कम्बलो यस्येति वक्तुरभिप्रायापरिज्ञानादिति। [1]अथाभिप्रायं न जानाति, तदुक्तापरिज्ञानादप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यम्; विप्रतिपत्तिर्वा विपरीतज्ञानात्।

[2]संभवतोऽर्थस्यातिव्याप्तिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलम्। अर्थस्य ब्राह्मणादेर्यः चतुर्वेदाभिज्ञत्वादिलक्षणो धर्मः, स प्रायेण संभवतीति संभवच्छब्देनोक्तः। तस्यातिव्याप्तिसामान्यमपि सामान्यम्। तेन योगादसद्भूतार्थकल्पना यत्र वचनविघाते निमित्तं तत्सामान्यनिमित्तत्वात्सामान्यच्छलमित्यर्थः। स यथा—'अहो खल्वयं ब्राह्मणश्चतुर्वेदाभिज्ञः' इत्युक्ते न्यायवाद्याह—'किमत्राश्चर्यम्? संभवति हि ब्राह्मणे चतुर्वेदाभिज्ञत्वम्' इति। अत्र छलवाद्याह—व्रात्येनानैकान्तिकत्वमिति। चतुर्वेदाभिज्ञत्वे ब्राह्मणत्वं लिङ्गं मत्वा अनैकान्तिको दर्शितः। तत्रोत्तरम्। तस्यापि पूर्ववन्निग्रहस्थानमप्रतिपत्तिलक्षणम्, अभिप्रायापरिज्ञानात्, उत्तरापरिज्ञानाद्वा। विप्रतिपत्तिश्च विपरीतस्य हेतुत्वस्य परिज्ञानादिति।

1 अप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यमिति ग्रन्थस्यैव विवरणम्—अथाभिप्रायं न जानातीत्यादिकम्।

2 सामान्यच्छललक्षणसूत्रमाह—संभवतोऽर्थस्येति। 'संभवतोऽर्थस्यातिसामान्ययोगाद-संभूतार्थकल्पना सामान्यच्छलम्' इति सूत्रपाठः समुपलभ्यते। भाष्येऽपि अतिसामान्यपदं विवृतम्। टीकाकृता तु अतिव्याप्तिसामान्ययोगादसद्भूतार्थकल्पनेति पाठः समादृतो दृश्यते।

मुख्यवृत्त्या प्रयुक्ते उपचारेण यथा—'अग्निरयं दाहपाकसमर्थः, अग्नित्वात्' इति प्रयुक्ते 'माणवकोऽप्यग्निः; न च तत्र दाहपाकसामर्थ्यम्' इति। तदिदं पदसंचारात् शक्तिसंचाराच्च। तत्र पदसंचारे यथा—'अजा गर्भवती लोहितनेत्रत्वात्; 'नखप्रसूनाञ्चितकरोऽयम्, नित्यकर्मकरत्वात्; अत्यन्तकामुकत्वात्' इत्यादि। शक्तिसंचारे 'नवकम्बलत्वात्' इत्यादि बहुलमुदाहरणं लोके। उद्देश्यविधेयविपर्यासादपि यथा—'शब्दोऽनित्यः कृतकत्वात्' इत्यभिप्रेतम्। न चानित्यघटादौ शब्दत्वमिति भागबाधितम्। एवमुदाहरणादिष्ववगन्तव्यम्।

इति छलनिरूपणम्

## जातिनिरूपणम्

अथ जातिः। स्वव्याघातकत्वेन जातेरपकृष्टत्वाच्छलानन्तरं जातिनिरूपणम्। तत्र का जातिः? [1]सिद्धं दूषणासमर्थमुत्तरं जातिरिति

नन्विदं कस्मादिति चेत्; ब्राह्मणत्वे सति चतुर्वेदाभिज्ञत्वमाश्चर्यकारणं न भवतीत्यभिप्रायः सुक्षेत्रे शालिसंपत्तिवत्। क्षत्रियादावेवाश्चर्यकारणं विद्याचरणसंपन्नत्वम्; न पुनर्ब्राह्मण इति।

[1]उपचारप्रयोगे मुख्यार्थकल्पनया प्रतिषेध उपचारच्छलम्। यथा—'मञ्चाः क्रोशन्ति' इत्युक्ते छलवाद्याह 'मञ्चस्थाः पुरुषाः क्रोशन्ति; न मञ्चाः, तेषामचेतनत्वात्' इति। क्षेत्रे पक्षिसंरक्षणार्थं कृतकाष्ठसंचयश्चतुःस्तम्भरूपो मञ्चः। एतस्यापि पूर्ववन्निग्रहस्थानत्वम्, उभयथापि मुख्यप्रकारेण गौणप्रकारेणापि लोके शास्त्रे च प्रयोगदर्शनात्। अतो गौणशब्दप्रयोगे परेण कृते मुख्यार्थनिषेधः स्वमनीषिकाकल्पितप्रतिषेधो न परोपालम्भ इति वयमालोचयाम इति संक्षेपः।

इति छलनिरूपणम्।

## जातिनिरूपणम्

छलपदार्थं सप्रपञ्चं निरूप्य क्रमप्राप्तं जातिपदार्थं निरूपयितुं प्रतिजानीते—

अथेति। सिद्धेति। [2]सिद्धानि यानि दूषणानि तत्रासमर्थमित्यर्थः। असदुत्तरस्यापि

1 उपचारच्छललक्षणमाह—उपचारप्रयोग इति।

2 सिद्धानि यानि दूषणानि तत्रासमर्थमित्यर्थ इति। एतच्च सिद्धदूषणासमर्थमुत्तरं

वा ? स्वव्याघातकमुत्तरं वा ? अङ्गवैकल्योपन्यासमन्तरेण प्रमाणदूषणोद्भावनं वा ? असाधकत्वाव्याप्येनासाधकत्वसाधनमुत्तरं वा ?

नाद्यः, अव्याप्तेः । तथाहि—'शब्दोऽनित्यः, कृतकत्वात्' इत्युक्ते 'यदि घटसाधर्म्यात् कृतकत्वादनित्यः शब्दः, हन्त, आकाशसाधर्म्यात् विभुत्वान्नित्य एव किं न स्यात् ?' इत्यादिष्वसिद्धेनापि जातिवादिनः प्रत्यवस्थानदर्शनात् । 'इदमसाधकं नियमानपेक्षप्रतिधर्मप्रतिहतत्वात्' इति जातिवाक्यार्थः । स च तत्र वर्तत एवेति । निय-

छलस्य जातित्वापत्तिरित्यरुचेराह—स्वव्याघातकमिति । व्याघातात्मकवस्तुन्यति-व्याप्तिरित्यत आह—अङ्गवैकल्येति । नन्विदमसंगतम्, असाधकतायां व्यर्थविशेषणत्वादित्यत आह—असाधकत्वेति । अव्याप्तिमेव प्रतिपादयति—तथाहीत्या-

जातिरिति मूलपाठ इत्यभिप्रायेण । परंतु दूषणे सिद्धत्वोक्तिर्विफला । नाद्य इत्यादिना एतत्कल्पदूषणावसरे असिद्धेनापि जातिवादिनः प्रत्यवस्थानदर्शनादिति मूलग्रन्थपर्यालोचनया दूषणे सिद्धत्वान्वयो नास्तीत्येव प्रतीयते । अतः सिद्ध दूषणासमर्थमुत्तरं जातिरिति परिदृश्यमानपाठ एव साधुः । दूषणासमर्थमुत्तरं जातिरित्युक्तौ छलेऽतिव्याप्तिः, तस्यापि दूषणासमर्थत्वात् । अतः सिद्धमिति । चैत्रोऽयं धनी नवकम्बलवत्त्वादित्युक्ते नवसंख्याककम्बलवत्त्वमभिप्रेतमित्यारोप्य छलवादी दूषयति । तत्रासिद्धमादाय दूषणमिति तत् दूषणमसिद्धमुच्यते । सिद्धमिति विशेषणोपादाने छले नातिव्याप्तिः । शब्दः अनित्यः कृतकत्वाद्धटवदित्युक्ते, नित्याकाशसाधर्म्यात् अमूर्तत्वात् शब्दः नित्यः किं न स्यात् इति प्रत्यवस्थानं जातिः । शब्दे अमूर्तत्वं सिद्धमेवेति तमादाय दूषणं सिद्धमुच्यते ।

स्थापनाहेतौ प्रयुक्ते सति जायमानत्वादयं प्रसङ्गो जातिव्यपदेशं लभते । सिद्धे दूषणासमर्थमुत्तरं जातिरिति स्वरसो मूलपाठः । 'प्रयुक्ते स्थापनाहेतौ दूषणाशक्तमुत्तरम् जातिमाहुः' इति कारिकाव्याख्यानावसरे "अत्र सिद्धत्वेऽपि दूषणासामर्थ्यमशक्तिः । ततश्च छलादिव्यवच्छेदसिद्धिः" इति तार्किकरक्षाप्यमुमर्थमुपोद्बलयति । तथाच सिद्धमिति छलव्यावर्तनेन सफलं भवति । असिद्धेनापि जातिवादिनः प्रत्यवस्थानदर्शनादिति उत्तरमूलग्रन्थसंगतिश्च भवतीति बोधम् ।

मूले स्वव्याघातकमुत्तरं वेति । साधर्म्य वैधर्म्याभ्यां प्रत्यवस्थानं जातिः इति सूत्रोक्तस्य लक्षणस्य सदुत्तरेऽतिव्याप्तिः । उत्कर्षसमादिजातौ साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानाभावादव्याप्तिश्च । तस्मात्सूत्रमुपलक्षणपरम् । सर्वासु जातिषु समशब्दप्रयोगात् समशब्दार्थ एवानुगतजातिलक्षणम् । स्वपरसाधनसाम्यं तदर्थः । यथा जात्युत्तरं परसाधनमिव स्वात्मानमपि

[1]मानपेक्षैतद्वृत्तिविभुत्वप्रतिहतत्वादिति यदि प्रतिपक्षं करोति, तथापि जातित्वाव्याकोपात् ।

न द्वितीयः, प्रतिपक्षदशापन्ने निरालम्बनानुमानेऽपि गतत्वात् । यथा—'रजतप्रत्ययः सालम्बनः, प्रत्ययत्वात् घटप्रत्ययवत्' 'रजतप्रत्ययो निरालम्बनः, प्रमेयत्वात् घटवत्' इति प्रतिपक्षानुमाने । तदपि जातिरेवेति चेत्; न । तदा हि जातित्वमस्य स्याद्यदि येन रूपेण परं प्रति दूषणं, तेनैवात्मानमपि व्याप्नोति । किंतु निरालम्बनानुमाने सत्प्रतिपक्षत्वं दोषः । न च तस्य स्वव्याघातकता । स्वव्याघातकत्वं च तस्य वा ? तज्जातीयस्य वा ? नाद्यः, तदसंभवात् । नेतरः । साजात्यं हि साधर्म्यसमत्वादिना वा ? जातित्वेनैव वा ? साधर्म्यसमाद्यन्यतमत्वेन वा ? नाद्यः, अव्यापकत्वात् । न द्वितीयः, स्वाश्रयापत्तेः । नेतरः, व्यर्थविशेषणत्वात्साधर्म्यसमादिलक्षणानामपि जातिलक्षणान्तर्गततयात्माश्रयात् ।

दिना । न द्वितीय इति । स्वव्याघातकमुत्तरमिति पक्ष इत्यर्थः । अतिव्याप्तिमाह—प्रतिपक्षेति । प्रतिपक्षतापन्नं निरालम्बनानुमानं दर्शयति—यथेत्यादिना । शङ्कते—तदपीति । तादृशप्रतिपक्षानुमानमपीत्यर्थः । तदा हीति । येन रूपेण परं प्रति दूषणं तेनैव रूपेणात्मानमपि व्याप्नुयाद्यदि, तदा जातित्वं भवेदिति योजना विपर्यये पर्यवसानं कार्यम् । एवंच तस्याजातित्वादतिव्याप्तिर्युज्यत इति भावः । निरालम्बनानुमानस्य निर्दुष्टत्वं स्यादित्यत आह—किंत्विति । साधर्म्येति । साधर्म्यसमत्वादीत्यादिशब्देन वैधर्म्यसमत्वादिरपि गृह्यते । न केवलं व्यर्थविशेषणत्वम्; किंत्वात्माश्रयोऽपीत्याह—साधर्म्येति । विकल्पासहत्वात् तृतीयः पक्षोऽपि न

व्याप्नोति, अतः स्वपरसाम्यात् सममित्युच्यते । अनेन स्वव्याघातकमुत्तरं जातिरित्युक्तं भवतीत्याशयः । मूले असिद्धेनापीति । शब्दे अविद्यमानेन विभुत्वादिनापीत्यर्थः ।

1. नियमानपेक्षेति व्याप्त्यनपेक्षेत्यर्थः ।

नापि तृतीयः, अङ्गवैकल्योपन्यासो ह्यङ्गवैकल्यतात्पर्यकोपन्यासः? तत्प्रतिपादको वा? नाद्यः, तत्र तात्पर्येऽप्युक्तिदोषेण जातित्वसंभवात्। नेतरः, अधिकोद्भावनादेरपि जातित्वापत्तेः।

नापि चतुर्थः। असाधकत्वव्याप्तेनाप्यसाधकतासाधने उक्तिदोषेण जातित्वसंभवात्। कथमेतत्?

उच्यते—व्याप्तिं पुरस्कृत्यासाधकत्वसाधनाभिप्रायेण प्रयुक्तमुत्तरं जातिः। परं प्रत्यभिधीयमानदूषणत्वप्रयोजकीभूतरूपवदुत्तरं वा। यद्वा वाक्यत्वावान्तरजातिविशेष एव। स च जात्यन्तरवदनुगतबुद्धिवेद्य एव स्वव्याघातकोत्तरादिशब्देनाभिलप्यत इति। असाधकत्वसाधनाज्जातीनामसदुत्तरत्वमभिधीयते।

संभवतीत्याह—नापि तृतीय इति। अधिकोद्भावनादेरपीति। हेतूदाहरणाधिकमधिकम्। तस्योद्भावनादेरपीत्यर्थः।

सिद्धान्तमारभते—उच्यत इति। जातिलक्षणमाह—व्याप्तिमिति।

वस्तुतस्तु—प्रयुक्ते हेतौ [1]समीकरणाभिप्रायेण प्रसङ्गो जातिः; अत्र प्रसङ्गः प्रतिषेधः। स च प्रत्यक्षादावप्यस्ति। न चासौ जातिः। अतः प्रयुक्ते हेताविति पदम्। तथाप्यसिद्धत्वादिप्रसङ्गः प्रयुक्ते हेतौ भवतीति तद्व्यवच्छेदाय समीकरणाभिप्रायेणेति पदम्। असिद्धत्वादिचोदनं तु परपक्षप्रतिषेधाय; न तु स्वपक्षस्य समीकरणाभिप्रायेण। यद्यपि प्राप्त्यप्राप्तिसमादिष्वेतल्लक्षणं नास्ति, तेषां परपक्षेण समीकरणाभिप्रायेण प्रवृत्तेः; तथापि बाहुल्याभिप्रायेणेदं लक्षणं विवक्षितम्। अत एवास्वरसादाह—यद्वेति। तादृशजातिविशेषे प्रमाणाभाव इत्याशङ्क्यानुगतबुद्धिरेव मानमित्याह—स चेति। जातीनामिति। साधर्म्यवैधर्म्योत्कर्षापकर्षविकल्पादीनामित्यर्थः।

1 समीकरणाभिप्रायेण प्रसङ्ग इति। वादिना हेतौ प्रयुक्ते सदुत्तरापरिस्फूर्तौ प्रतिवादिनः साम्यापादनबुद्धिर्भवति। 'असदुक्तेन जात्युत्तरेणायं पर्याकुलितमानसो यदि स्वयमप्यसदुत्तरं स्यात्, तदा ममेवास्यापि निरनुयोज्यानुयोगः स्यात्। निष्प्रतिभश्चेत् पर्यनुयोज्योपेक्षणं भवेदित्युभावपि समौ भविष्यावः' इति साम्यापादनबुद्ध्या जातिवादिनः प्रत्यवस्थानमिति भावः।

तत्र किमिदमसाधकत्वम् ? यत्र क्वचित्साध्यज्ञानाजनकत्वं वा ? पक्षवृत्तिसाध्यज्ञानाजनकत्वं वा ? पक्षवृत्तिसाध्याविसंवादिज्ञानाजनकत्वं वा ? पक्षवृत्तिसाध्यविसंवादिज्ञानजनकत्वं वा ? व्याप्तिपक्षधर्मतान्यतरशून्यत्वं वा ? अनैकान्तिकाद्यन्यतमत्वं वा ?

नाद्यः । 'अनित्यः शब्दः, सामान्यवत्त्वे सति चाक्षुषत्वात्' इत्यस्यासाधकत्वं न स्यात्, घटादौ हेतोः साध्यसाधकत्वात् । न द्वितीयः । धूलीपटले धूमभ्रमात् वह्न्यनुमितौ सत्यां तत्र पक्षवृत्तिसाध्यस्य ज्ञानस्य विद्यमानत्वादसाधकत्वस्यानुमानं न स्यात् । न तृतीयः । तत्रैव यदि वस्तुगत्या वह्निर्भवति, तदा समीचीनज्ञानजनकत्वात् पुनरपि स एव दोषः । धूमांशे तत्र ज्ञानमयथार्थमेवेति चेत्; न । तथापि साध्यांशे यथार्थत्वात् ।

असाधकत्वसाधनाभिप्रायेण प्रयुक्तमुत्तरं जातिरिति लक्षणे, असाधकत्वाज्ञाने तदभिप्रायेण प्रयुक्तत्वमपि ज्ञातुं न शक्यत इत्यसाधकत्वं वक्ष्यन् प्रथमं तदङ्गतया पूर्वपक्षयति—**तत्र किमिदमसाधकत्वमिति** । **यत्र क्वचिदिति** । [1]पक्षावृत्तिसाध्यज्ञानाजनकत्वमित्यर्थः । **पक्षेति** । पक्षवृत्ति यत्साध्यं तद्विषयज्ञानाजनकत्वमित्यर्थः । **पक्षवृत्तिसाध्येति** । पक्षवृत्ति यत्साध्यं, तद्विषयकाविसंवादिज्ञानजनकत्वमित्यर्थः । **पक्षवृत्तीति** । पक्षवृत्ति यत्साध्यं तद्विषयकाविसंवादि यत् ज्ञानम् अयथार्थज्ञानं, तज्जनकतेत्यर्थः । **व्याप्तीति** । व्याप्तिश्च पक्षधर्मता च व्याप्तिपक्षधर्मते । तदन्यतरत्वं तदन्यान्यत्वम् । तच्छून्यत्वमित्यर्थः । **अनैकान्तिकेति** । सव्यभिचाराद्यन्यतमत्वमित्यर्थः । तत्र यथाक्रमं दूषयति—**नाद्य इत्यादिना वदन्तीत्यन्तेन** ग्रन्थेन । पूर्वपक्षमुपसंहरति—**अत इति** ।

1 पक्षावृत्तिसाध्यज्ञानाजनकत्वमिति । पक्षविशेष्यकतदविशेष्यकसाधारणसाध्यज्ञानजनकत्वमित्यर्थः । मूले घटादौ हेतोरिति । सामान्यवत्त्वे सति चाक्षुषत्वस्य पक्षे शब्दे असत्त्वेऽपि घटे सत्त्वेन तद्विशेष्यकानित्यत्वज्ञानजनकत्वादित्यर्थः । तत्रैव यदि वस्तुगत्या वह्निर्भवति इति । धूलीपटले धूमभ्रमाद्वह्नेरनुमितिस्थले इत्यर्थः । स एव दोषः । बाधादसाधकत्वानुमानं न स्यादिति दोषः । लिङ्गोपधानमतस्यैव ग्रन्थकारेण स्वीकृतत्वात् वह्निव्याप्यधूमवान्पर्वतो वह्निमानित्याकारिका अनुमितिः; तस्या धूमांशेऽयथार्थत्वं संभवतीति शङ्कते—धूमांशे तत्रेति ।

अन्यथा समूहालम्बनानुमितौ क्वचिदंशे बाधेऽबाधितेऽप्यंशे तल्लिङ्गता न स्यात् । अपिच यत्र धूमो वस्तुगत्या वर्तते, धूलीपटले तु धूमभ्रमः, तत्र [1]कः प्रतीकारः ? तत्प्रयुक्तसाध्यवत्ताप्रत्ययस्तत्र भ्रान्त एवेति चेत् ; न, तथापि तस्य साध्यांशे सत्यत्वात् । अन्य एव वह्निस्तत्रारोप्यत इति चेत् ; न, प्रमाणाभावात् । एकव्यक्तिसाध्ये च तद्व्यक्त्यन्तरस्यासंभवादारोपानुपपत्तेः । अनुमित्युत्तरकालं तत्रस्थस्यैव वह्नेः प्रत्यभिज्ञानाच्च । अत एव न चतुर्थोऽपि । बाधविरोधयोः साध्याभावज्ञानेन, प्रतिपक्षे च परस्परप्रतिबन्धात्साध्यज्ञानानुपपत्त्या विसंवादिसाध्यज्ञानाभावाच्च । न च पञ्चमः, व्याप्तिपक्षधर्मतासद्भावेऽपि 'शब्दोऽनित्यः, कृतकत्वात्' इत्यादौ श्रावणत्वादिना प्रतिपक्षदर्शनात् । तदा कृतकत्वमसाधकं श्रावणत्वेन प्रतिपक्षितत्वादिति विशेषादर्शनकालेऽसाधकतानुमानं न स्यात् । [2]अन्यत्रापीदमसाधकं व्याप्तिरहितत्वात्पक्षधर्मतारहितत्वादित्यत्र साध्याविशिष्टत्वप्रसङ्गाच्च । नापि षष्ठः । तदेत्थमसाधकतानुमानम्—'इदमनैकान्तिकाद्यन्यतमम्, अनैकान्तिकत्वादसिद्धत्वाद्वा' इत्यादि । [3]तच्च न केवलान्वयिनोऽसाधकतासाधकम्, तत्रात्यन्ताभावस्याप्रसिद्ध्यानैकान्तिकाद्यप्रसिद्धेः । अन्यतमस्यानुपयुक्तत्वादर्थान्तरत्वाच्च । अन्ततः साध्यावैशिष्ट्यमपि वदन्ति । अतः कथमेतत् ?

उच्यते—तत्तदनुमितिप्रतिबन्धकत्वमेवानैकान्तिकादिज्ञानानां तत्र तत्रासाधकत्वम् । तथाहि—इदमनैकान्तिकादिज्ञानमेतत्साध्यवत्तयैतत्प-

सिद्धान्तमारभते—उच्यत इति । असाधकत्वलक्षणमाह—तत्तदनुमितीति । अनुमितितत्करणान्यतरसाक्षात्प्रतिबन्धकत्वमित्यर्थः । अत्रान्यत् दूषणादिकं

1 कः प्रतीकार इति । धूमांशेऽपि भ्रमत्वस्य दुर्वचत्वादिति भावः । सत्यत्वात् । सत्यविषयकत्वात्, अबाधितविषयकत्वात्, प्रमात्वादिति यावत् । बाधप्रतिरोधयोर्विसंवादिसाध्यज्ञानाभावाच्च इति योजना बोध्या ।

2 अन्यत्रापीति । व्याप्तिपक्षधर्मताशून्यस्थलेऽपीत्यर्थः ।

3 तच्च न केवलान्वयिनोऽसाधकतासाधकमिति । केवलान्वयिन्यपि सत्प्रतिपक्षसंभवस्य दर्शितत्वेन तद्दशायामसाधकतानुमानं भवतीति भावः ।

क्षकानुमितिकारणीभूताभावप्रतियोगि, एतदनैकान्तिकादिज्ञानत्वात् संप्रतिपन्नवदिति । न च साध्याप्रसिद्धिः, कदाचित् भ्रमात्तादृशज्ञानस्यापि संभवात् । न च कालान्तरीयतादृशज्ञानप्रतिबन्धकत्वेन सिद्धसाधनम्, एतत्कालीनत्वस्य विवक्षितत्वात् । न च पुरुषान्तरैतत्कालीनैतज्ज्ञानप्रतिबन्धकत्वेन तथात्वम्, पुरुषविशेषस्यापि विवक्षितत्वात् । न च तथा साध्याप्रसिद्धिः । यथा प्रतिबन्धकमन्त्रादेर्न यत्किंचिद्दाहप्रतिबन्धकत्वम्, अपितु तत्तत्पुरुषतत्तत्कालादिसंबन्धिदाहप्रतिबन्धकत्वमेवावधार्यते ; तथात्रापीति न कश्चित् दोषः ।

इदं तु चिन्त्यते—'शब्दोऽनित्यः, कृतकत्वात्' इत्यादौ कृतकत्वाद्यसाधकम्, असिद्धत्वादिति मीमांसकेन प्रयोक्तव्यम् । तत्रासिद्धत्वादिति नैयायिकस्यासिद्धम् । अतस्तद्वारणार्थमन्यतरेति विशेषणीयम् । तच्च व्यर्थम्, व्यभिचारावारकत्वात् । अपिच, अन्यतरासिद्धत्वमन्यतरज्ञानमात्राविषयत्वं वा ? अन्यतरसमीचीनज्ञानाविषयत्वं वा ? अन्यतरासमीचीनज्ञानविषयत्वं वा ? अन्यतरानङ्गीकारमात्रं वा ? न हि शब्द-

सर्वं हेत्वाभाससामान्यलक्षणव्याख्यानसमयेऽभिहितं तत्रैवानुसंधेयमिति नात्र प्रपञ्च्यते । अप्रसिद्धविशेषणः पक्ष इत्याशङ्क्याह—न चेति । ननु कालान्तरीयैतत्साध्यवत्तयैतत्पक्षानुमितिप्रतिबन्धकत्वेन सिद्धसाधनं स्यादित्याशङ्क्याह—न चेति । विवक्षितत्वादिति । विवक्षितसाध्यत्वादित्यर्थः । शब्द इति । [1]वर्णात्मकः शब्द इत्यर्थः । असाधकमिति । अनित्यत्वासाधकमित्यर्थः । तत्र हेतुमाह—असिद्धत्वादिति ।

ननु न्यायमते शब्दे कृतकत्वस्य सत्त्वात्कथमसिद्धत्वमित्यत आह—अन्यतरेति । तच्चेति । अन्यतरेति विशेषणमित्यर्थः । हेतुगतविशेषणस्य व्यभिचारवारकत्वेन सार्थकत्वं वक्तव्यम् ; प्रकृते तदभाव इत्याह—व्यभिचारेति । मतान्तरानुसारेणान्यतरासिद्धेः पुरुषदोषत्वं प्रतिपादयिष्यन् वस्तुदोषत्वाभावमपि वक्ष्यन्नन्यतरासिद्धत्वं विकल्पयति—अपिचेत्यादिना । तदेवं विकल्प्य यथोद्देशं दूषयति—

1 शब्द इति वर्णात्मक शब्द इत्यर्थ इति । अन्यथा ध्वन्यात्मकशब्देऽनित्यत्वस्य सिद्धत्वेन सिद्धसाधनं स्यादिति भावः । मूले तदप्रतीकारादिति । अनङ्गीकाराप्रतीकारादित्यर्थः ।

नित्यतया कृतकत्वे मीमांसकस्य ज्ञानमेव नोत्पद्यते । किंतु तदप्रमारूपमित्यन्यदेतत् । न द्वितीयः, व्याघातात् । न ह्येकमेव वस्तु तेनैव रूपेणैकस्य प्रमाविषयः, अपरस्याप्रमाविषय इति संभवति । अत एव न तृतीयोऽपि । नापि चरमः । साधकप्रमाणोपन्यासेऽपि तदप्रतीकारात् । तस्मादन्यतरासिद्धिर्न वस्तुदोषः । निग्रहस्थानवत् पुरुषदोष इति केचित् ।

अपुरस्कृतनियमसाधर्म्येण प्रतिपक्षोक्तिः साधर्म्यसमः । समशब्दः सर्वजातिदोषतुल्यताबोधनपरः । तदस्य सदुत्तरापरिस्फूर्तिः प्रौढिवादो

नाद्य इति । व्याघातमेव प्रतिपादयति—न ह्येकमेवेति । अत एवेति । व्याघातादेवेत्यर्थः । फलितमर्थमुपसंहरति—तस्मादिति ।

" साधर्म्यवैधर्म्योत्कर्षापकर्षविकल्पसाध्यप्राप्त्यनुत्पत्त्यहेत्वविशेषोपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा जातयः" इति [1]सूत्रोक्तजातिबृन्दमनुक्तचिन्तया वार्त्तिककारोक्तजातिबृन्दं च लक्षणोदाहरणाभ्यां दर्शयति—अपुरस्कृतेति ।

साधर्म्यसमां जातिं विभजते—त्रिविधेयमिति । त्रैविध्यमेव दर्शयति—सिद्धेति । तत्रेति । तासां मध्य इत्यर्थः । सिद्धविषयजातेरुदाहरणमाह—प्रथमेति । असिद्धविषयजातेरुदाहरणमाह—द्वितीयेति । शेषमतिरोहितार्थम् ।

24 सूत्रोक्तजातिबृन्दमिति । सूत्रे द्वन्द्वान्ते श्रूयमाणस्य समशब्दस्य प्रत्येकं संबन्धात् साधर्म्यसमा वैधर्म्यसमा इत्यादयो जातय इति लभ्यते ।

अनुक्तचिन्तया वार्तिककारोक्तमिति । उक्तानुक्तदुरुक्तचिन्तनं वार्त्तिककार्यम् । वर्ण्यसमावर्ण्यसमादीनां सूत्रे अनुक्तत्वात् वार्त्तिककारोक्तास्ता जातयः । तादृशबृन्देन सह सूत्रोक्तजातिबृन्दं निरूपतीत्यर्थः । वस्तुतस्तु चतुर्विंशतिजातयोऽपि सूत्रोक्ता एव । " साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः " इत्येव सूत्रपाठः सर्वत्र ग्रन्थेषु दृश्यत इति बोध्यम् । मूले—अपुरस्कृतनियमसाधर्म्येणेति । न पुरस्कृतो नियमो व्याप्तिर्यत्र, तादृशेन साधर्म्येणेत्यर्थः । अत्रेदं बोध्यम्—जातेः सप्ताङ्गानि । लक्ष्यं , लक्षणम् , उत्थानं , पातनम् , अवसरः , फलं , मूलमिति । तदुक्तम्—'' लक्ष्यं लक्षणमुत्थानं पातनावसरौ फलम् । मूलमित्यङ्गमेतासाम् " इति ।

वावसरः । अप्रयोजकविपक्षान्वयिधर्मदर्शनं कारणम् । हेतुर्दूष्यः । सत्प्रतिपक्षत्वमारोप्यम् । तद्भ्रान्तिः फलम् । यदि मदुक्तो हेतुः, तदा त्वदुक्तस्य प्रतिरोधासाधकत्वम् । न चेत्, विशेषादसाधकत्वमित्युभयथा दूषणत्वम् ।

त्रिविधेयं जातिः—सिद्धविषया, असिद्धविषया, असदुक्तिका चेति । तत्र प्रथमोदाहरणम्—'शब्दोऽनित्यः, कृतकत्वात्, घटवत्' इति स्थापनायां कृतायां, द्वितीयवाद्याह—'यदि घटसाधर्म्यात् कृतकत्वादयमनित्यः, हन्त, आकाशसाधर्म्यात् प्रमेयत्वात् नित्य एव कुतो न भवति' इति । द्वितीयोदाहरणम्—'नित्यः शब्दः श्रावणत्वात्, शब्दत्ववत्' इत्युक्ते 'अनित्यसाधर्म्यात् प्रमेयत्वादनित्य एव कुतो न भवति' इति । तृतीयोदाहरणम्—'शब्दो नित्यः श्रावणत्वात्' इत्यत्रैव 'यदि नित्यसाधर्म्यान्नित्यः, तदा समान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियविषयत्वमनित्यसाधर्म्यमप्यस्तीत्यनित्य एव कुतो न भवति' इति । एतस्य सल्लिङ्गत्वादुक्तिमात्रमेवात्र दुष्टम्, नियमापुरस्कारेणाभिधानात् । दुष्टत्वमूलं तु सर्वजातिषु साधारणं स्वव्याघातकत्वमेव । असाधारणं युक्ताङ्गहीनत्वम्, अयुक्ताङ्गहीनत्वम्, अविषयवृत्तित्वं च ।

इदानीं दुष्टत्वमूलं निरूप्यते—'कृतकत्वमसाधकं, नियमानपेक्षप्रतिधर्मप्रतिहतत्वात्' इति जातिवाक्यार्थः । अयं च जात्युत्तरमपि व्याप्नोति । तथा हि—'नेदमसाधकतासाधकं, नियमानपेक्षप्रतिधर्मप्रतिहतत्वात्' इत्यत्रापि वक्तुं शक्यत एव । नियमानपेक्षप्रतिधर्मप्रतिहतत्वमपि

वैधर्म्यसमां जातिं लक्षयति—अपुरस्कृतनियमवैधर्म्येति । यथा 'यदि नित्याकाशवैधर्म्यात् कृतकत्वादनित्यः शब्द इष्यते, अनित्यघटवैधर्म्यादमूर्तत्वान्नित्यस्तर्हि प्राप्नोति, विशेषाभावात्' इति दिक् ।

वस्तुतस्तु—"साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ" इति । साधर्म्यवैधर्म्याभ्यामन्वयव्यतिरेकाभ्यामुपसंहारे; साध्यस्येति शेषः; तद्धर्मस्य साध्यधर्मस्यानित्यत्वादेः, विपर्ययो नित्यत्वादि, तस्योपपत्तिः सिद्धिः; तदर्थं

तवासाधकम्; मम तु साधकमेवेति वादिनो न व्याघात इति चेत्— सत्यम्। तथापि प्रतिधर्मप्रतिहतत्वमसाधकत्वनियतमुपलभ्यत एवेति प्रत्यवस्थानम्? अन्यथा वा? नाद्यः, व्यभिचारात्; अव्यभिचारे व्याघातात्। द्वितीये स्वदोषोद्भावनमेव कृतमिति। तदिह प्रतिरोधं प्रति समबलत्वस्यानवधारणात् युक्ताङ्गहानिः। साधर्म्यरूपतामात्रस्यायुक्तस्यैव प्रतिरोधाङ्गीकारादयुक्ताङ्गाधिकत्वं वा।

अपुरस्कृतनियमवैधर्म्येण प्रतिपक्षोक्तिर्वैधर्म्यसमः। अप्रयोजकसपक्षवृत्तिधर्मान्तरदर्शनं कारणमस्याः। एतदेव दर्शयितुं तद्भेदेनोपन्यासः। अन्यथा प्रतिधर्ममात्रेण प्रत्यवस्थानादनयोर्जात्योः प्रतिधर्मसम एक एव निर्देशः स्यात्। सर्वमन्यत्साधर्म्यसमवदवगन्तव्यम्।

पक्षेऽसतो धर्मस्य पक्षवृत्तिधर्मसहचरितस्य साहचर्यमात्रपुरस्कारेण पक्षेऽप्यापादनमुत्कर्षसमः।

केचित्पुनः—पक्षेऽनिष्टस्य धर्मस्य परोक्तहेतुव्यापकस्य परोक्तादेव हेतोरापादनमुत्कर्षसम इति वदन्ति। तन्न, अव्यापकत्वादहेतुतोऽप्यापादने पक्षेऽनिष्टोत्कर्षेऽनुत्कर्षसमसंभवात्। उदाहरणं तु—कृतकत्वेन शब्दानित्यत्वस्थापनायाम् 'यदि यथोक्तहेतुमान् घटोऽनित्य इति तद्दृष्टान्तबलेन शब्दोऽनित्यः, तद्वदेव तर्हि रूपादिमता शब्देन भवितव्यमविशेषात्' इति। एवंच विशेषविरोधजात्यभिनिवेशिनो जातिवादिनः। तथाच

तद्धर्मविपर्ययोपपत्तेरिति तादर्थ्ये षष्ठीति ज्ञेयम्। साधर्म्यवैधर्म्याभ्यामेव क्रियमाणौ साधर्म्यवैधर्म्यसमावित्यर्थः। 'अनित्यः शब्दः, कृतकत्वात् घटवत्' इत्युक्ते जातिवाद्याह— 'यद्यनित्यघटसाधर्म्यात् कृतकत्वादनित्यः शब्द इष्यते, नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यस्तर्हि प्राप्नोति'। 'यदि नित्याकाशवैधर्म्यात् कृतकत्वादनित्यः शब्द इष्यते, अनित्यघटवैधर्म्यादमूर्तत्वान्नित्यस्तर्हि प्राप्नोति विशेषाभावात्' इति वयमालोचयामः।

उत्कर्षसमाख्यजातिं लक्षयति—पक्षेऽसत इति।

वैशेषिकमतं दर्शयति—केचित्त्विति। दूषयति—तन्नेति। विशेषणान्तरवैयर्थ्यापत्तेरिति भावः। उदाहरणं त्वित्यादिकमारभ्य शरीरित्वाद्यापादनेऽवगन्त-

विवक्षितविपरीतसाधनाद्विशेषविरुद्धो हेतुरित्यतिपीडया व्यापकानुपलब्धि-बाधितत्वम् । एवमीश्वरानुमाने ईश्वरस्य शरीरित्वाद्यापादनेऽवगन्तव्यम् । तदस्याः पक्षवृत्तिधर्मस्य साध्येन सहचरितत्वदर्शनं कारणम्; हेतुर्दूष्यः; विरुद्धत्वमारोप्यम्; तद्भ्रान्तिः फलम् । विशेषविरुद्धदेशनाभासेयम् ।

द्विविधा चेयम्—सद्विषयासद्विषयत्वभेदात् । दुष्टत्वमूलं तु—स्यादेतत्, यदि साहचर्यमात्रनिबन्धन उपसंहारः स्यात् । किंतु प्रकृतधर्म-व्यापकत्वनिबन्धन इति युक्तः साध्योपसंहारः; न तु रूपादिसत्त्वस्य । तथाहि—यदि कृतकत्वं प्रकृतसाध्यासाधकं दृष्टं, यत्किंचिद्धर्मस्य पक्ष-वृत्तिधर्मसहचरिततया प्रसङ्गपराहतत्वादिति, तदा स्वव्याघातकता । व्यापकत्वस्याङ्गस्य परित्यागात् युक्ताङ्गहीनता ।

सहचरितमात्रधर्मव्यावृत्तिनिबन्धनसहचरितान्तरव्यावृत्त्या परकीया-निष्टप्रत्यवस्थानमपकर्षसमः । यत्तु पक्षे विद्यमानधर्मापनयनेन प्रत्यव-स्थानमपकर्षसम इति परिशिष्टम्; तन्न, उत्कर्षसमप्रपञ्चनापत्तेः । उदा-हरणं यथा—ईश्वरानुमाने शरीरित्वव्यावृत्त्या सकर्तृकत्वव्यावृत्त्यापादनम् ।

व्यमित्यन्तं ग्रन्थबृन्दं स्पष्टार्थकमित्यवगन्तव्यम् । तदस्या इति । यस्मात्कारणादीश्व-रानुमाने ईश्वरस्य शरीराद्यापादने उत्कर्षसमः, तस्मादित्यर्थः । पक्षवृत्तिधर्मस्येति । [1]पक्षवृत्तिधर्मसहचरितस्येत्यर्थः ।

द्वैविध्यमेव प्रतिपादयति—सद्विषयेति ।

अपकर्षसमं लक्षयति—[2]सहचरितेति । लक्षणान्तरं दूषयितुमुपन्यस्यति—यत्त्विति । निषेधति—तन्नेति । उत्कर्षेति । उत्कर्षसमाख्यजातावतिव्याप्त्यापत्ते-रिति भावः । उदाहरणं दर्शयति—उदहारणं यथेति । न्यायविदाह—उत्तर-मिति; अपकर्ष इति । इष्टधर्मनिवृत्तावित्यर्थः । अन्यदिति । उत्तरमित्यर्थः ।

1 पक्षवृत्तिधर्मसहचरितस्येत्यर्थ इति । रूपवत्त्वस्यानित्यत्वेन साहचर्यदर्शनं घटादौ हेतुः । रूपवत्त्वस्य शब्दावृत्तितया पक्षवृत्तिधर्मस्येति मूलं पक्षवृत्तिधर्मसहचरितस्येति व्याख्या-तम् । वस्तुतस्तु—अपक्षवृत्तिधर्मस्येति मूलपाठो दृश्यते । तत्र न काप्यनुपपत्तिः ।

2 सहचरितेतीति । सहचरितमात्रस्य व्यावृत्तिनिबन्धनसहचरितान्तरव्यावृत्त्या परकी-यानिष्टप्रत्यवस्थानमपकर्षसमः इति मूलम् । मात्रशब्देन व्यापकत्वस्य व्यवच्छेदः । कर्तृमत्त्वेन

एवं दृष्टान्तेऽप्यपकर्षोऽवगन्तव्यः। उत्तरम्—न हि सहचरितधर्ममात्रापकर्षेऽपकर्षसमः; किंतु व्यापकस्यापकर्षे। अन्यथा असाधकतानुमानेऽप्येवं प्रसङ्गः। उत्कर्षसमवदन्यदूहनीयम्।

किंचिद्धर्मसामान्येन सपक्षस्यापि पक्षत्वापादानं वर्ण्यसमः। साध्यविकलविरुद्धदेशनाभासेयम्। दुष्टत्वमूलं स्फुटमेव।

एवं किंचिद्धर्मसामान्येन पक्षस्यापि साध्यवत्तया निश्चितत्वापादानमवर्ण्यसमः। सिद्धसाधनदेशनाभासेयम्। दुष्टत्वमूलं स्फुटमेव।

एवं किंचिद्धर्मविकल्पप्रदर्शनेन हेतुमति साध्यविकल्पापादनं विकल्पसमः। उदाहरणं यथा—अत्रैवानुमाने कृतकत्वाविशेषेऽपि विभागजत्वं शब्दस्यैव व्यवस्थितम्; न विभागजत्वं घटस्य; तथा नित्यत्वानित्यत्वयोरप्यस्तु—शब्दस्य नित्यत्वमेव, घटस्यानित्यत्वमेवेति। विकल्पश्च

ऊहनीयमिति। [1]अयमाशयः—प्रमेयत्वादिकं यथा नित्यत्वसाधकं न भवति, तथा सर्वमपि साधर्म्यं वैधर्म्यं च साध्यसाधकं न भवतीत्युच्यते? किं वा कृतकत्ववत् सर्वमपि साधर्म्यं वैधर्म्यं च साध्यसाधकं स्यादिति? आद्ये पक्षे जातेरनुत्थानम्, तस्या अपि साधर्म्याद्वैधर्म्याद्वा समुत्थानादिति। द्वितीयपक्षे परिहारोऽभिधीयते। अविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वाभ्युगमादप्रसङ्गो धूमादिवत्। तथाहि—यथा अग्निमत्साधर्म्यादनग्निमद्वैधर्म्यात् [2]अविनाभूताद्धूमादेवाग्निमत्त्वं सिध्यति, न पुनरग्निमत्साधर्म्यमात्रादग्निमद्वैधर्म्यमात्रात्प्रदेशत्ववृक्षत्वादेरग्निमत्त्वं सिध्यति, तथात्रापि। अविनाभाविन इत्यनेन विशेषाभावोऽसिद्ध इति सूचयतीति।

[3]सूत्रकारेणानभिहितं जातिभेदं दर्शयति—किंचिद्धर्मसामान्येनेति।

घटादौ सहचरितस्य शरीरिकर्तृकत्वस्य पक्षे क्षित्यादिकेऽभावेन कर्तृमत्त्वरूपसहचरितान्तराभावेन प्रत्यवस्थानमित्यर्थः। बाधदेशनाभासा चेयं जातिः।

1 उत्तरं स्पष्टयति—अयमाशय इत्यादिना।

2 अविनाभूतात्। अविनाभावो व्याप्तिः; तद्विशिष्टादित्यर्थः।

3 सूत्रकारेणानभिहितं जातिभेदमिति। यद्यपि साधर्म्यवैधर्म्येत्यादिके जातिविभागोद्देशसूत्रे वर्ण्यावर्ण्यसमावभिहितौ। तथापि टीकाकारधृतसूत्रपाठे तयोरनुपादानमिति बोध्यम्। संदिग्धसाध्यकत्वं दृष्टान्ते। तस्यापादनं वर्ण्यसमः। संदिग्धसाधकत्वाभावः अवर्ण्यत्वं पक्षे तस्यापादनं वर्ण्यसमः

सव्यभिचारः; तदसत्त्वमिति यावत् । स च साध्यधर्मस्य धर्मान्तरं प्रति वा, धर्मान्तरस्य धर्मान्तरं प्रति वा, हेतोर्धर्मान्तरं प्रति वेत्यादिदोषत्वमेवात्र तन्त्रम् । अत एवानैकान्तिकहेत्वाभासदेशनाभासेयम् । उत्तरम्—किंचिद्धर्मविकल्पनात् यदि पक्षः साध्यशून्यः स्यादसाधकतानुमानेऽप्येवमस्तु । अतोऽविषयवृत्तित्वम् ।

अनुमितिवत् तेनैव लिङ्गपरामर्शेन पक्षादिप्रतीतौ साध्यत्वापादनं साध्यसमः । यथायथमात्माश्रयान्योन्याश्रयचक्रकानवस्थाः स्युरिति जातिवादिनोऽभिमानः । असिद्ध्यादिकमारोप्यम् । पक्षसाध्यादयो

विकल्पसमं लक्षयति—**किंचिद्धर्मेति** । उदाहरणं दर्शयति—**उदाहरणं यथेति** । [1]**अत्रैवानुमान इति** । शब्दपक्षकानित्यत्वादिसाध्यककृतकत्वादिहेतुकानुमान इत्यर्थः । न्यायविदाह—**उत्तरमिति** ।

साध्यसमं लक्षयति—**अनुमितिवदेवेति** । [2]वस्तुतस्तु—"साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षविकल्पसाध्यसमाः" इति भगवदक्षपादमुनिनोक्तम् । साध्योऽत्र पक्षो विवक्षितः । पक्षदृष्टान्तयोर्धर्मस्य विकल्पात् वैचित्र्यात् यदोत्कर्षं प्रसञ्जयति तदोत्कर्षसमः । यदा, अपकर्षं प्रसञ्जयति तदापकर्षसमः । यदा साध्यदृष्टान्तयोर्धर्मस्यामूर्तत्वादेर्विकल्पं नित्यत्वानित्यत्वविकल्पं प्रसञ्जयति, तदा विकल्पसमः । यदा च साध्यदृष्टान्तयोर्धर्मविकल्पात् उभयसाध्यत्वमपि प्रसज्यत इत्यभिधाय ततो 'दृष्टान्तस्य साध्यत्वे को हेतुः ? को वा दृष्टान्तः' इति प्रसञ्जयति तदा प्रसङ्गः

1 अत्रैवानुमान इति । यत्किंचिद्धर्मविकल्पप्रदर्शनेन हेतुमति साध्यविकल्पापादनं विकल्पसम इति मूलम् । यत्किंचिद्धर्मविकल्पप्रदर्शनेन । यत्किंचिद्धर्मव्यभिचारप्रदर्शनेन । साध्यधर्मस्य अनित्यत्वस्य । रूपवत्त्वादिधर्मान्तरव्यभिचारस्य, धर्मान्तरस्य द्रव्यत्वस्य उष्णत्वादिधर्मान्तरव्यभिचारस्य वा कृतकत्वहेतोः विभागजत्वरूपधर्मान्तरं प्रति व्यभिचारस्य वा प्रदर्शनेन हेतुमति साध्यविकल्पापादानं साध्याभावापादानं विकल्पसम इत्यर्थः । मूले अविषयवर्तित्वमिति । अव्यभिचारादन्यस्यासाधकत्वाभिधानादिति भावः ।

2 उत्कर्षसमादीनां चतसृणां जातीनां सूत्रोक्तलक्षणानि सूत्रार्थनिरूपणेन सोदाहरणं विशदयति—वस्तुतस्त्वति । साध्यदृष्टान्तयोरित्यादिसूत्रे उत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमा इत्येव पाठः समुपलभ्यते । तत्पाठानुसारेणैव भाष्यादिकं प्रवृत्तम् । परंतु टीकाभिमतसूत्रपाठे वर्ण्यावर्ण्येति नास्ति । अत एव पूर्वमपि सूत्रकारेणानभिहितजातिभेदं दर्शयतीति वर्ण्यसमालक्षणमवतारितं टीकाकारैरिति बोध्यम् ।

दूष्याः । प्रवृत्तिस्तु एतदनुमानाङ्गपक्षादिप्रतीतौ यथैतल्लिङ्गज्ञानमप्रयोजकमनुमितावपि तथा स्यात् । उत्तरं स्फुटमेव । असाधकतानुमानेऽप्यात्माश्रयादि तुल्यमेव । अयुक्ताङ्गाधिकत्वमत्र दुष्टत्वमूलम् । अनुमित्यङ्गानां सिद्धानामेवानुमितिप्रयोजकत्वम्; न त्वेतल्लिङ्गपरामर्शसिद्धानामिति ।

कारणज्ञापकान्यतरस्य कार्यज्ञाप्यान्यतरेण सह प्राप्त्यप्राप्तिविकल्पेन साध्यसिद्धावप्राप्यसाध्यसाधनेऽतिप्रसङ्गमुद्भाव्य प्राप्त्या साधनेऽविशेषेण साधकस्य साध्यत्वापादानं प्राप्तिसमः । कारणज्ञापकान्यतरस्य कार्यज्ञाप्यान्यतरेण सह प्राप्त्यप्राप्तिविकल्पेन साध्यसिद्धौ प्राप्त्या साधनेऽविशेषात् साधकत्वानुपपत्तिमुद्भाव्य, अप्राप्यसाधनेऽतिप्रसङ्गोद्भावनमप्राप्तिसमः ।

साध्यसमः । उभयसाध्यत्वाच्चेति चकारेण हि धर्मविकल्पः समुच्चीयते । हेतुहेतुमद्भावे च संबन्ध इति सूत्रार्थः । अयमत्र विवेकः—पक्षे दृष्टान्तादनिष्टधर्मप्रसङ्ग उत्कर्षसमः । इष्टधर्मनिवृत्तिरपकर्षसम इति । दृष्टान्तसकाशात्पक्षे शब्दादावप्यनिष्टस्याविद्यमानधर्मस्य सावयवत्वादेः प्रसङ्गः परेणापाद्यते उत्कर्षसमे । इष्टधर्मनिवृत्तिरापाद्यतेऽपकर्षसम इति विशेषः । यदि कृतकत्वात् घटवदनित्यः शब्द इष्यते, तदा घटवदेव सावयवः स्यात् । अथ नैवमनित्योऽपि तर्हि न स्यात्, अविशेषात् । अश्रावणश्च घटो दृष्टः; शब्दोऽपि श्रावणो न स्यात्, अविशेषादिति स्पष्टम् । अथ विकल्पसमः—कृतकत्वाविशेषेऽपि यथा मूर्तत्वामूर्तत्वादिधर्मविकल्पस्तथा नित्यत्वानित्यत्वादिधर्मविकल्पोऽपि स्यात्, अविशेषादिति । अथ साध्यसमः—यदि कृतकत्वात् [1]उभयोरनित्यत्वम्, तर्हि साध्यत्वमपि शब्दघटयोरुभयोरपि स्यात्; न वा कस्यचित्, अविशेषादिति । दृष्टान्तस्य साध्यत्वे को हेतुः? को वा दृष्टान्तः? इति प्रसङ्गः साध्यसम इति दिक् । न्यायविदुत्तरमाह—उत्तरमिति । स्फुटमेवेति । [2]अयमाशयः—“ किंचित्साधर्म्यादुपसंहार-

1 उभयोरनित्यत्वमिति । शब्दघटयोरनित्यत्वमित्यर्थः ।

2 निरुक्तजातीनां प्रयोगे सूत्रकारोक्तमुत्तरं सूत्रार्थविवरणद्वारा निरूपयति—अयमाशय इत्यादिना ।

तदनयोर्विकल्पोपक्रमे युगपदुद्भवार्हता । अत एवानयोरेकदैव लक्षणं दर्शितम् । प्राप्तिरत्र समसमयत्वपुरस्कारेण संयोगादिरूपा । उभयोरपि कृतिज्ञप्त्यन्वितत्वम् । तत्र कृतौ तावत् लिङ्गमनुमितौ कारणम् । तच्च न कार्यमप्राप्य जनकम्, अतिप्रसङ्गात् । अतः प्राप्तं कारणं वक्तव्यम् । न चासता कार्येण कारणस्य प्राप्तिरस्ति । सत्त्वे च कार्यस्य निष्फलं कारणमिति । ज्ञप्तावपि लिङ्गं ज्ञातमेव ज्ञापकम् । न च तादृशेन सह लिङ्गिनः प्राप्तिः संयोगादिरूपा संभवति । विषयत्वलक्षणायामत्र प्राप्तौ लिङ्गज्ञान एव लिङ्गिनोऽवभासनादलमनुमानेन । अप्राप्तिसमायामपि प्राप्य कृतिज्ञप्ती न संभवतः । अप्राप्तावतिप्रसङ्ग इत्यापादनीयम् । उभयोरपि विशेषणासिद्धदेशनाभासत्वम्, प्राप्तिसमायाः कारणतोचितपूर्वकालतापरित्यागात् ; अप्राप्तिसमायाः प्राप्तिलक्षणस्य विशेषणस्य परित्यागात् । उत्तरम्—कृति

सिद्धेर्वैधर्म्यादप्रतिषेधः" इथि । किंचित्साधर्म्यात् ईषत्साधर्म्यात् उपसंह्रियते यस्मिन् स उपसंहारो दृष्टान्तः । तस्य सिद्धेर्वैधर्म्यात् सर्वसाधर्म्यादापाद्यमानादप्रतिषेधः, साध्यस्येति शेषः । [1]अथवा किंचित्साधर्म्यादविनाभूतात् कृतकत्वादिलक्षणात् उपसंह्रियत इत्युपसंहारः साध्यम् । तस्यैव सिद्धेः वैधर्म्यादविनाभावशून्यात् अप्रतिषेधः साध्यस्य ।

वस्तुतस्तु—किंचित्साधर्म्यात् धूमवत्त्वादिलक्षणात् साध्यदृष्टान्तयोर्धर्मविकल्पेऽपि वह्निमत्त्वसिद्धिरूपा व्यवस्था दृष्टा । तदपलापे लोकादिविरोधः सर्वानुमानाप्रामाण्यप्रसङ्गश्चेति संक्षेप इति । तदनयोरिति । प्राप्त्यप्राप्तिसमयोरित्यर्थः ।

[2]वस्तुतस्तु—" प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्यविशिष्टत्वादप्राप्त्यासाधकत्वाच्च प्राप्त्यप्राप्तिसमौ " इति । साध्यं ज्ञाप्यं शब्दानित्यत्वादि । कार्यं च तद्विषयं ज्ञानम् । हेतोरित्यस्यानन्तरं साधनत्वमङ्गीक्रियत इत्यध्याहारः । विकल्पस्त्वयं जात्युत्थाननिदाननिरूपणार्थः । प्राप्त्यविशिष्टत्वादप्राप्त्या असाधकत्वाच्चेति । अत्र हेतुर-

1 वैधर्म्यादित्यस्य सर्वसाधर्म्यादिति व्याख्यानेऽरुचिं मनसि निधाय प्रकारान्तरेण व्याचष्टे—अथवेति ।

2 प्राप्त्यप्राप्तिसमयोः लक्षणे सूत्रार्थवर्णनेन सोदाहरणं दर्शयति—वस्तुतस्त्विति । पदार्थ-

पक्षे फलेन सह कारणस्य प्राप्तिरनङ्गमेव । अन्यथा, असाधकतानुमानेऽप्ययं दोषः । अत एवायुक्ताङ्गाधिकत्वं फलप्राप्तेरयुक्ताया एवाङ्गत्वेनाङ्गीकारात् । ज्ञाप्तिपक्षे लिङ्गज्ञानस्य लिङ्गिविषयत्वमङ्गीक्रियत एव । किंतु सामान्येन रूपेण ; न तु विशेषेण पक्षवृत्त्यादिना । अत एवायुक्ताङ्गाधिकत्वमविषयवृत्तित्वं वा । एवमप्राप्तिसमायामपि फलाप्राप्तस्य कारणस्य कारणत्वमिष्यत एवेत्यविषयवृत्तित्वम् । अन्यथा तवापि प्रसङ्गः ।

साधक इति । सूत्रस्यायमर्थः—यद्ययं हेतुः साध्यं प्राप्य साधयेत्, उभयोः प्राप्त्यविशिष्टत्वादङ्गुल्योरिव किं कस्य साधनं साध्यं वेति द्वयोस्तुल्यकार्यत्वादिति । प्राप्तिः संयोगरूपा । तस्या अविशिष्टत्वं साधारणत्वम् । तया वा अविशिष्टत्वं प्रतियोगितया विद्यमानत्वम्; तस्मात् । अप्राप्य साधकं नास्ति, काष्ठाग्निवदिति । न हि काष्ठमप्राप्य वह्निर्दहति प्रकाशयति चेत्यर्थः । [1]अत्र वदन्ति—"घटादिनिष्पत्तिदर्शनात्पीडने चाभिचारादप्रतिषेध" इति । निष्पत्तिरुत्पत्तिर्ज्ञप्तिश्च । पीडन इति निमित्तसप्तमी । अभिचारदर्शनादित्यर्थः । प्राप्त्यविशेषेऽपि कुलालादिभिर्मृत्पिण्ड एव घटः क्रियमाणः प्रदीपादिना च प्रकाश्यमानो दृश्यत इति न विपर्ययः। तथात्रापीत्यर्थः । तथा प्राप्त्यविशेषेऽप्यभिचारकर्म पीडनं शत्रोः कुर्वत् दृश्यते, न विपर्ययः । तस्मादुभयथापि हेतुत्वोपपत्तेरयुक्तः प्रतिषेध इति सूत्रभाष्यवार्तिककारा इति ।

वयं तु ब्रूमः—प्राप्त्यप्राप्त्यविशेषेऽपि प्रतिनियतार्थवृत्तय एवैते साध्यसाधनत्वादयो धर्मा दृष्टाः । ते निराकर्तुमशक्याः, सर्वप्रमाणविरोधात् । अपिचायं प्रसङ्गः हेतुं प्राप्तः प्रतिषेधति, अप्राप्तो वेत्यादिदोषः समानः । ततः स्वत एव स्वस्य दुष्टत्वे हेतुरदुष्ट एवेति । एवमुक्तरीत्या परिहारे सत्यपि ग्रन्थकारः प्रकारान्तरेण समाधत्ते—उत्तरमिति । अन्यथेति । प्राप्तेरङ्गत्व इत्यर्थः । तवापीति । जाति-

मुक्त्वा सूत्रतात्पर्यार्थमाह—सूत्रस्यायमर्थ इति । मूले प्राप्तिसमायाः कारणतोचितपूर्वकालतापरित्यागादिति । साध्यस्य पूर्वं सिद्धिः हेतोर्विशेषणं तच्चात्र नास्तीति विशेषणासिद्धिरारोप्येति भावः ।

1 प्राप्त्यप्राप्तिसमयोः सूत्रोक्तमुत्तरं सूत्रार्थवर्णनेन निरूपयति—अत्र वदन्तीति । न्यायविद इति शेषः । मूले न ज्ञातत्वमपि ज्ञातमेव प्रयोजकं येनानवस्था स्यात् इति । व्यभिचारवारकानां लिङ्गविशेषणानामेवावश्यज्ञेयत्वं, न तु लिङ्गसहकारिमात्रत्वेनोपयुक्तानामपीति भावः ।

अनवस्थाभासप्रसञ्जनं प्रसङ्गसमः। इयमपि कृतिज्ञप्तिसाधारणी। कृतौ लिङ्गज्ञानमनुमितौ कारणम्। तत्रापि किं कारणम्? तत्रापि किं कारणम्? इत्यनवस्था। ज्ञप्तौ प्रमाणे किं प्रमाणम्? इति। एवं दृष्टान्तेऽपि को दृष्टान्तः? इत्यादि। लिङ्गविशेषणं ज्ञातमेव प्रयोजकम्। ज्ञातत्वं च लिङ्गविशेषणम्। अतस्तदपि ज्ञातव्यमित्यभिमान उत्थानबीजम्। विशेषणासिद्धदेशनाभासा चेयम्, ज्ञातत्वस्य तद्विशेषणस्याज्ञातत्वात्।

यत्तु—'इह भूतले घटो नास्ति' इत्यप्राप्तप्रतिषेधेऽतिप्रसङ्गः। प्राप्तप्रतिषेधे च भूतले घटप्राप्तिरिति प्रसङ्गसमेति केनचिदुक्तम्; तन्न, प्राप्तिसमायामेवान्तर्भावात् एतल्लक्षणानाक्रान्तेश्च। उत्तरम्—न ज्ञातत्वमपि ज्ञातमेव प्रयोजकं, येनानवस्था स्यात्। अतोऽयुक्ताङ्गाधिकत्वम्।

प्रतिदृष्टान्तदर्शनमात्रेणापुरस्कृतहेत्वङ्गभावस्य प्रत्यवस्थानं प्रतिदृष्टान्तसमः। प्रवृत्तिक्रमस्तु—'यदि घटदृष्टान्तबलेतानित्यः शब्दः, हन्ताकाशदृष्टान्तबलेन नित्यो भवतु, तुल्यत्वात्' इति। उत्थानबीजं यथा दृष्टान्ते

वादिनोऽपीत्यर्थः। [1]वार्तिककारोक्तं प्रतिदृष्टान्तसमं दर्शयति—प्रतिदृष्टान्तेति।

अनुत्पत्तिसमं लक्षयति—उत्पत्तेः पूर्वमिति। [2]प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसम इति पर्यवसन्नोऽर्थः। स यथा—'अनित्यः शब्दः, कार्यत्वात्' इत्युक्ते प्रागुत्पत्तेरनित्यत्वकारणं नास्तीति नित्यः प्रसक्तः। तस्योत्पत्तिरनुपपन्नेत्यनुपत्त्या प्रत्यवस्थानमनुत्पत्तिसम इति वयमालोचयामः। तथाभावादुत्पन्नस्य कारणोपपत्तेरप्रतिषेध- इति। उत्पन्नस्य शब्दस्य तथाभावात् उत्पत्तिसद्भावात् कारणोपपत्तेः अनित्यत्व-

1 वार्तिककारोक्तं प्रतिदृष्टान्तसमं दर्शयतीति। टीकारकारसंमतसूत्रपाठे प्रसङ्गसमप्रतिदृष्टान्तसमयोरनुक्तत्वादित्थमुक्तिः। मूले 'अत एव प्रतिधर्मतोऽस्य भेद इति। प्रतिधर्मतः—प्रतिधर्मसमातः। साधर्म्यवैधर्म्ये प्रतिधर्म समाया अवान्तरभेदाविति उदयनाचार्यमतम्। तन्मतमवलम्ब्यात्र ग्रन्थकृता साधर्म्यसमा प्रतिधर्मशब्देन व्यवहृतेति ध्येयम्।

2 सूत्रभाष्यारूढम् अनुत्पत्तिसमलक्षणं सोदाहरणं निरूपयति—प्रागुत्पत्तेरिति। "प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः" इति न्यायसूत्रम्।

अनुत्पत्तिसमजातिप्रयोगस्योत्तरबोधकं तथाभावादुत्पन्नस्य कारणोपपत्तेरप्रतिषेधः' इति सूत्रम्। सूत्रार्थमाह—उत्पन्नस्येत्यादिना।

दृष्टं तथोपसंहर्तुमुचितम् । न च दृष्टान्ते हेतोर्हेतुत्वमनेन दृष्टं पुरस्कृतम् । अतोऽनङ्गत्वमेव हेतोः । तथा ममापि प्रतिदृष्टान्तोऽस्तीति विपरीतमेव किं न भवतीति । अत एव प्रतिधर्मतोऽस्य भेदः । तत्र हेतुत्वं पुरस्कृत्यैव मम विपरीतसाधको हेतुरस्तीत्युच्यते । इह तु प्रतिदृष्टान्तमात्रमेवेति । प्रतिरोधदेशनाभासा चेयम् । परिशिष्टे तु बाधदेशनाभासा चेयमित्युक्तम् । तन्न, युक्तेरसंभवात् । न हि प्रतिदृष्टान्तमात्रेणाधिकबलत्वम् । उत्तरं व्याप्यव्यापकवतोर्दृष्टान्तत्वम् । न च तथा प्रतिदृष्टान्त इति हीनबलता । अत एव युक्ताङ्गहीनता, हेतोरनपेक्षणात् ।

उत्पत्तेः पूर्वं यत्किंचिदनुमित्यङ्गस्यासंभवेन प्रत्यवस्थानमनुत्पत्तिसमः । उत्पत्तिसामान्यमात्रविषया चेयं जातिः, तत्र पक्षादीनामङ्गानां स्वोत्पत्तेः पूर्वमसत्त्वात् । यथायथमाश्रयासिद्धदेशनाभासा चेयम् । प्रवृत्तिक्रमस्तु, ‘हीरकं पृथिवी, पाकजरूपवत्त्वात्, घटवत्’ इत्यत्र स्वोत्पत्तेः पूर्वं हीरकमसिद्धमित्याश्रयासिद्धिः । क्षणमगुणो भाव इति भागासिद्धः । एवं दृष्टान्तस्यापि । उत्थानबीजं चोत्पन्नानुत्पन्नसाधारणं पक्षादिकमनेनोक्तमित्यभिमानः । उत्तरम्—न ममानुत्पन्नं पक्षादित्वेनाभिमतम्; किंतूत्पन्नम् । न च तत्रायं दोषः । अन्यथा पाकजरूपादीनामप्यसाधकत्वसाधने तत्राप्ययं दोषः स्यादित्यविषयवृत्तित्वम्, तथाविधानामपक्षादित्वात् ।

साधकहेतूपपत्तेरप्रतिषेध इति । अन्यथा प्रतिवादिवचनात् प्रागदुष्टो हेतुः । अदुष्टे च दूषणानुत्पत्तिरिति जातिप्रयोगव्याघातः । किंचानुत्पन्न एव शब्दे नास्तिकस्य [1]नित्यत्वादिधर्मश्चिन्त्यत इत्येवमादिपरिहारे सत्येव परिहारान्तरमाह—उत्तरमित्यादिना । संशयसमाख्यजातिं लक्षयति—यत्किंचित्संशयेति । समाधत्ते—उत्तरमित्यादिना ।

1 नित्यत्वादिधर्म इति । नित्यत्वदिर्धर्मो यस्येति व्युत्पत्त्या नित्यत्वादिधर्मवानित्यर्थः । अहेतुसमलक्षणसूत्रं व्याचष्टे त्रैकाल्यासिद्धेरित्यादिना ।

यत्किंचित्संशयकारणात् संशयेन प्रत्यवस्थानं संशयसमः । प्रवृत्तिस्तु—'निर्णयकारणात् कृतकत्वात् यदि निर्णयेन भवितव्यम्, संशयकारणात् कुतो न भवति संशयः? तुल्यत्वात्' इति । विशेषणासिद्ध्याभासेयम् । संशयकारणे ह्यसति निर्णायकत्वमित्यभिमानात् । उत्थानबीजं कारणमात्रे सामग्र्यभिमानः । उत्तरम्—सामग्रीतः संशयः, न तु कारणमात्रात्, निर्णयस्य साग्र्येत्रात । न हि संशयकारणमात्रेण निर्णयप्रतिबन्धः, असाधकतानुमानेऽपि तथा प्रसङ्गात् । अतोऽयुक्ताङ्गाधिकत्वम् । संशयकारणमात्रविरहस्य निर्णयं प्रति कारणत्वाङ्गीकारात् ।

यत्किंचिद्धर्ममात्रेण बाधाभिधानं प्रकरणसमः । परिशिष्टे "स्थापनाहेतौ प्रयुक्तोऽनधिकबलेन" इति । तन्न, अहेतावपि प्रकरणसमेन प्रत्यवस्थानसंभवादतिव्याप्तिश्चेति केचित् । बाधदेशनाभासा चेयम् । उत्थानबीजं धर्ममात्रे प्रमाणत्वाभिमानः, दोषाणां वैचित्र्यात् । प्रवृत्तिक्रमस्तु 'यदि त्वदुक्तात् सिद्धिः, मदुक्ताद्बाध एव किं न स्यात्? अविशेषात्' इति । उत्तरम्—न हि धर्ममात्रदर्शनाद्बाधः । तथा सति त्वदुक्तोऽपि हेतुर्बाधितः स्यात् । अत एव युक्ताङ्गहीनत्वम् । बाधं प्रत्यधिकबलत्वस्य युक्तस्यैव त्यागात् ।

कालत्रयेऽपि साधनत्वानुपपत्त्या हेतोरसाधनत्वापादनमहेतुसमः । कृतिज्ञप्तिसाधारणीयम् । तदिह तुल्यकालत्वेऽविशेषादेव किं कस्य कारणं

प्रकरणसमं लक्षयति—**यत्किंचिद्धर्ममात्रेणेति** । दूषयति—**तन्नेति** । न्यायवित् समाधत्ते—**उत्तरमिति** । प्रतिबन्द्या परिहरति—**तथा सतीति** ।

अहेतुसमं लक्षयति—**कालत्रय इति** । "त्रैकाल्यासिद्धेर्हेतोरहेतुसमः" इति गौतममुनिः सूत्रं प्राणैषीत् । त्रैकाल्ये असिद्धिस्त्रैकाल्यासिद्धिः । एतदेवास्माभिः प्रपञ्च्यते—यदि पूर्वं साधनम्, असति साध्ये कस्य साधनम्? अथ पश्चात्, साध्यकालेऽविद्यमानं कथं साधनम्? अथ युगपत्, तथापि किं कस्य साधनं साध्यम्? अङ्गयोरेकैककालत्वादिति दिक् ।

ज्ञापकं वा ? भिन्नकालत्वेन साध्यसाधनयोर्विशेषणविशेष्यभावः, उपल क्षणत्वे वातिप्रसक्तेरिति जातिवादिनोऽभिमानादस्योत्पत्तिः । विशेषणा-सिद्धिप्रतिकूलतर्कान्यतरदेशनाभासेयम् ।

कथं पुनरियं प्राप्त्यप्राप्तिसमाभ्यां भिद्यते ? तत्र परिशिष्टम्—"तयोः स्वरूपतः संनिकर्षचिन्ता । इह कालतः । ते अर्थद्वारिके । इयं शब्दद्वारिका । ते द्विविकल्पोपक्रमे । इयं त्रिविकल्पोपक्रमा" इत्यादि । तन्न, तत्रापि कालसंनिकर्षचिन्तासंभवात् । अत्राप्यर्थद्वारकत्वद्वित्रिकल्पोपक्रमत्वसंभवाच्चेत्याद्यूह्यम् ।

तस्मादिदमत्र वाच्यम्—प्रत्यवस्थानप्रकारभेदादस्यास्ताभ्यां भेदः । तत्र हि प्राप्त्यप्राप्ती पुरस्कृत्य प्रत्यवस्थानम् । इह तु सहभावासहभावौ । एते च परस्परभिन्ने एवेति न विवादः । उत्तरम्—कृतौ तावत्, सर्वत्र पूर्वापरकालवृत्तितयैव साध्यसाधनभावः । ज्ञप्तौ च लिङ्गलिङ्गिनोस्तुल्यकालतायामपि न दोषः । अन्यथा तत्राप्यसाधकतानुमानेऽप्ययं दोषः । तदिदमविषयवृत्तित्वं स्फुटमेव ।

[1]उत्तरम्—न हेतुतः साध्यसिद्धेः । तथाहि—साध्यस्य कार्यस्य ज्ञाप्यस्य च हेतुत एव सिद्धेरुत्पत्तेर्ज्ञप्तेश्च लोके दर्शनान्न युक्तः प्रतिषेधः । यदि पुनर्न हेतुतः साध्यसिद्धिरङ्गीक्रियते, तदोत्पादप्रवृत्तिनिवृत्तिभ्यामपि कस्यचिदर्थस्य साधनात्तयोर्वैयर्थ्यप्रसङ्गः । अत एव प्रवृत्त्यादिविरोधः सूत्रार्थ इति । इतोऽपि ज्ञापकहेतुप्रतिषेधो नोपपद्यते, [2]प्रतिषेधानुपपत्तिस्तत्र सिद्धेरिति । योऽयं प्रतिषेधः परेण क्रियते, स किं प्रतिषेध्यात्पूर्वम् ? उत पश्चात् ? अथ युगपत् ? यदि पूर्वं, तदा त्वसति प्रतिषेध्ये कस्यायं प्रतिषेधः स्यात् ? अथ पश्चात्, असति प्रतिषेधे कथं प्रतिषेध्यम् ? अथ युगपत्, सव्येतरगोविषाणयोरिव किं कस्य प्रतिषेध्यं प्रतिषेधकं वा स्यात् ? एककालत्वाविशेषादिति परिहरति—उत्तरमित्यादिना ।

1 सूत्रोक्तमुत्तरमाह—उत्तरमिति । न हेतुतः साध्यसिद्धेः त्रैकाल्यासिद्धिः इति सूत्रपाठ समुपलभ्यते ग्रन्थेषु ।

2 टीकायां प्रतिषेधानुपपत्तिस्तत्र सिद्धेः इति सूत्रं लिखितम् । "प्रतिषेधानुपपत्तेः प्रतिषेद्धव्याप्रतिषेधः" इति न्यायसूत्रपाठः समुपलभ्यते ।

अर्थापत्त्याभासात् प्रत्यवस्थानमर्थापत्तिसमः । 'शब्दोऽनित्यः कृतकत्वात्, घटवत्' इत्युक्ते अर्थादापन्नं नाकाशसाधर्म्यान्नित्य इति; बाधप्रतिरोधौ अनित्यौ इत्युक्ते अर्थादापन्नं कृतक इत्यसिद्धिः । 'शब्दो नित्यः' इत्युक्तेऽर्थादापन्नं न घटादिरनित्य इत्यतो दृष्टान्तासिद्धिः । तदिहानुक्ताक्षेपोद्धारं प्रमाणं दूष्यम् । असिद्धादिकमारोप्यम् । सर्वदोषदेशनाभासेयम् । उत्तरम्—नानुक्तमात्रमर्थादापद्यते, किंतु प्रकृतोपपादकम् । अन्यथा त्वदनुमानेऽप्ययं दोषः । अत एव युक्ताङ्गत्यागः, व्याप्तेरनवधारणात् ।

ननु छलात् कथमस्या जातेर्भेदः ? वाद्यभिप्रायवर्णनस्यात्रापि तुल्यत्वात् । शब्दार्थविकल्पाभावान्नैवमिति चेत्, तात्पर्यविकल्पादपि छलत्वसंभवात् । मैवम् । नात्राभिप्रायवर्णनम्; किंतु विशेषविधिनिषेधयोः शेषनिषेधविधिपर्यवसायित्वं स्यादित्येतदवतारः ।

यत्किंचिद्धर्मदर्शनाद्यत्र क्वचिदविशेषापादनमविशेषसमः । प्रवृत्तिस्तु

अर्थापत्तिसमं लक्षयति—अर्थापत्त्याभासादिति । तमुदाहरति—स यथेति ।

अविशेषसमं लक्षयति—यत्किंचिद्धर्मदर्शनादिति । "[1]एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः" इति भावः । ननूत्कर्षसमादिभ्यः कथं भिद्यत इत्याशङ्क्याह—न चेति । [2]समाधत्ते—उत्तरमित्यादिना । अयमाशयः—तत्रेदमुच्यते, सर्वथाप्यविशेषे प्रत्यक्षादिविरोधः । अनित्यत्वेनाविशेषेऽनुमानागमविरोधः । केनचिदविशेषे प्रमेयत्वादिना सिद्धसाधनम् । सर्वथाप्यविशेषे प्रतिषेधानुपपत्तिश्च । आत्मादिर्नित्यः, अनादिवस्तुत्वात् । यन्नित्यं न भवति, तदनादि वस्त्वपि न भवति । यथा घटादि' इत्यनुमानम् । "अविनाशी वा अरेऽयमात्मा" इत्यादिरागमः । [3]ताभ्यां विरोध इति भावः ।

1 एकधर्मोपपत्तेरित्यादिकं न्यायसूत्रम् ।

2 समाधत्ते उत्तरमित्यादिनेति । अविशेषसमजातिवादिनः समाधानमाहेत्यर्थः ।

3 ताभ्यां विरोध इति भाव इति । अनित्यत्वेनाविशेषे अनुमानागमविरोध इति पूर्वमयमुक्तस्य बाध इत्यर्थः ।

'यदि कृतकत्वदर्शनाविशेषात् शब्दघटयोरनित्यत्वेनाविशेषः, तदा प्रमेयत्वाविशेषाद्विश्वस्यैवाविशेषो भवेत् । ततश्च सर्वस्य सर्वप्रकाराभेदे पक्षहेतुदृष्टान्तादिभेदो न स्यादिति सर्वदोषदेशनाभासेयम् । न चोत्कर्षसमाद्यभेदः । न हि सर्वत्र सर्वप्रकाराभेदस्तत्रापाद्यते । किंतु किंचिद्धर्मसंबन्धमात्रं पक्ष एव । तदस्याः किंचिद्धर्मं प्रति कस्यचिद्धर्मस्य सामानाधिकरण्यदर्शनमेव बीजम् । उत्तरम्—न हि धर्ममात्रात् धर्मान्तरस्यापत्तिः । किंतु व्याप्यात् व्यापकस्य । अन्यथा त्वदनुमानेऽप्येवं प्रसङ्गः । अत एव युक्ताङ्गहीनत्वम्, व्याप्तेः परित्यागात् ।

यत्किंचिद्धर्मदर्शनेन यत्किंचिद्दूषणापादनमुपपत्तिसमः । वस्तुतस्त्वितरजातिलक्षणानाक्रान्तजातित्वमेवैतल्लक्षणम् । प्रवृत्तिस्तु—'मत्पक्षेऽपि यत्किंचित्प्रमाणं भविष्यति, त्वत्पक्षवत् । त्वत्पक्षेऽपि किंचित् दूषणं भविष्यति, मत्पक्षवत् पक्षत्वात् त्वत्पक्षमत्पक्षान्यतरत्वात् ज्ञेयत्वाद्वा' इत्यादि । आपाततो बाधप्रतिरोधाभासेयमतिपीडया सकलदूषणाभासा । यथाकथंचित् साधनदूषणदर्शनमेव बीजमस्याः । अत एव 'यदि मदुक्तो व्यभिचरिष्यति, तदा त्वदुक्तोऽपि व्यभिचरिष्यति' इत्येवमस्याः प्रवृत्तिः ।

ननु कथमेतस्या उक्तिसंभवः? उन्मत्तकेलिप्रसङ्गात् । परमेकान्तपराजयात्संदेहोऽपि श्रेयानिति वासनया कथासंचारः । यद्वा दोषवैचित्र्यात् कस्यचिद् बुद्धिरुत्पद्यते । यदाहुः—"प्रत्यक्षदृष्टो न चेदुपाधिरिहातीन्द्रियस्तर्हि भवतु । अतीन्द्रियोऽपि न निश्चितश्चेत् शङ्कितो भवतु । शंकितोऽपि न चेदस्ति पिशाचायमानो भवत्विति, कदापि केनापि क्वाप्युपाधिरिह द्रक्ष्यत इत्येवमादीनामपि वचसां संदर्शनात्" इति । उत्तरम्—न हि यतः कुतश्चिदेव साधनदूषणे भवतः । किंतु प्रतिनियता-

उपपत्तिसमं लक्षयति—यत्किंचिद्धर्मदर्शनेनेति । साधर्म्यसमादावतिप्रसक्तमिदं लक्षणमित्यरुचेराह—वस्तुतस्त्वित्ति । समाधत्ते—उत्तरमित्यादिना ।

देव । अन्यथा त्वदुक्तानुमानेऽप्येवंविधवाचाटवचसोऽवकाशप्रसङ्गः । तदिद युक्ताङ्गहीनम्, युक्तस्य व्याप्तेरङ्गस्य परित्यागात् । तथाहीदम-साधकम्, सर्वथानुपलभ्यमानोपाधिग्रस्तत्वादित्यस्यानेन प्रतिबन्धात् । इयमेव जातिः प्रायो वेदान्तिनां सर्वस्वम् ।

अवधारणविकल्पानुपपत्त्या प्रत्यवस्थानमुपलब्धिसमः । कृतिज्ञप्ति-साधारणीयम् । कृतौ—एतल्लिङ्गपरामर्शसाध्यमनुमितिज्ञानम् ? न वा ? नाद्यः, तदन्तरेणाप्यनुमित्यन्तरोत्पादात् । न द्वितीयः, न हि यत्सामा-न्येन यस्य कारणत्वम्, तद्विशेषे तस्य कारणत्वं युज्यते, अतिप्रसङ्गात् । एवमन्यत्रापि । तथाहि—तृणाभावेऽपि वह्निरुपलभ्यत इति कथमस्य कारणत्वम्? ज्ञप्तौ—'पर्वतोऽयं वह्निमान् धूमवत्त्वात्' इत्यत्रान्ययोगा-योगव्यवच्छेदाभ्यां किं पर्वतोऽग्निमानेव? उत पर्वते वह्निमत्त्वाभावा-द्भागे बाधः? । द्वितीये तु महानसादीनामग्निमत्त्वाभावे साध्यविकलो दृष्टान्तः । एवं धूमवत्त्वादावववगन्तव्यम् । तदिहावधारणविकल्पानुपपत्ति-रुत्थानबीजम् । सकलदोषदेशनाभासेयम् । उत्तरम्—न हि सर्वत्रा-न्ययोगव्यवच्छेदनियतः संबन्धः । अन्यथा त्वदुक्तानुमानेऽप्ययं प्रसङ्गः ।

उपलब्धिसमं लक्षयति—**अवधारणेति** । भगवदक्षपादसूत्रसंवादोऽपि "निर्दि-ष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः" इति । [1]पृथिव्यादिकार्यत्वोपपत्तये निर्दिष्टस्य सावयवत्वस्याभावेऽपि बुद्ध्यादौ कार्यत्वमुपलब्धमिति । अतोऽप्रयोजकोऽयं हेतुरित्युप-लब्ध्या प्रत्यवस्थानमुपलब्धिसम इत्यर्थः । परिहरति—**उत्तरमित्यादिना** । कथं तर्हि बुद्ध्यादेः कार्यत्वसिद्धिरिति चेत्; न, "कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः" इति गौतमसूत्रम् । [2]प्रमाणान्तरादपि कार्यत्वसिद्धिरिति सूत्रार्थः । यथा धूमाभावेऽप्यङ्गा-

1 उपलब्धिसमलक्षणसूत्रं स्वीयोदाहरणप्रदर्शनेन व्याचष्टे—पृथिव्यादिकार्यत्वोपपत्तये इत्यादिना । उपलब्धिसमजातिवादिन उत्तरबोधकं सूत्रं 'कारणान्तरादपि तद्धर्मोपपत्ते-रप्रतिषेधः' इति ।

2 प्रमाणान्तरादपि कार्यत्वसिद्धिरिति सूत्रार्थ इति । तथाच सूत्रे कारणान्तरादित्यस्य प्रमाणान्तरादित्यर्थः । तद्धर्मोपपत्तेरित्यस्य तस्य धर्मस्य साध्यस्य उपपत्तेः उपलब्धेः सिद्धे-

ननु छलमेवेदमनवधारणाभिप्रायेणोक्तस्याभिप्रायवर्णनादिति । मैवम् । सर्वत्रैव व्युत्पत्तिरीदृशी यदयोगान्ययोगव्यवच्छेदेनैव विशेषणस्य प्रवृत्तिरित्यभिप्रायेणैव जातिवादिनः प्रवृत्तिः । न तु वाद्यभिप्रायोऽन्यथा वर्णनीय इति ।

यत्किंचिदेतत्प्रतियोगिविषयत्वस्य स्ववृत्तिविकल्पेन या जातिः सानुपलब्धिसमा । उपलब्धिसमानामसांकर्यभयादनुपलब्धिसमानाम्नीयम् । प्रवृत्तिक्रमस्तूपलभ्यमानं कृतकत्वाद्यनुमितिसाधनम् । तत्रोपलब्धावुपलब्धिविषयत्वं वर्तते वा ? न वा ? आद्ये उपलब्धेरुपलब्धत्वात् अनुपलब्धित्वम् । तदा कृतकत्वादीनां नोपलब्धत्वम्, उपलब्धेरभावात् । द्वितीये तूपलब्धत्वानुपलब्धित्वविषयत्वाभावात् अनुपलब्धिविषयत्वमस्ति । तदा चोपलब्धेरभावात्कृतकत्वादीनामनुपलभ्यमानत्वादलिङ्गत्वमिति । एवमनुपलब्धावपि । अनुपलब्धेरनुपलब्धिविषयत्वमस्ति वा ? न वा ? आद्ये तदनुपलब्धेरनुपलब्धिरूपत्वाभावः । द्वितीये, अनुपलब्धिविषयत्वाभावादनुपलब्धेरुपलब्धिविषयत्वं प्राप्तम् । तथाचोपलब्धिरूपत्वादभाव एव तस्याः । एवमिष्टानिष्टसंदिग्धादावप्यवगन्तव्यम् । अभेदे विषयविषयिभावभ्रमो बीजमस्याः ।

रादौ प्रमाणान्तरादग्निसिद्धिस्तथेत्यर्थः । प्रमाणान्तरमुच्यते—'बुद्ध्यादिकं कार्यम्, अनुपलब्धिकारणेष्वसत्सु प्रागूर्ध्वं वानुपलभ्यमानत्वात् घटादिवत्,' इति येष्वावरणादिषु सत्सु बुद्ध्यादयो विद्यमाना अपि नोपलभ्यन्ते, तान्यनुपलब्धिकारणानीत्युच्यन्त इति संक्षेपः ।

अनुपलब्धिसमं लक्षयति—यत्किंचिदेतत्प्रतियोगिकेति । भगवदक्षपादसूत्रम्—"तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः" इति । तद्विपरीतोपपत्तेरसदादिसिद्धो हेतुरिति प्रतिषेध इत्यध्याहार्यम् । तस्य बुद्ध्यादिकार्यस्यानुपलब्धेरनुपलम्भादभावसिद्धावनुपलब्धिविपरीतोपलब्ध्युपपत्तेः प्रागूर्ध्वमपि बुद्ध्यादेः

रित्यर्थः । बुद्धौ कार्यत्वसाधकस्य सावयवत्वस्याभावेऽपि, अनुपलब्धिकारणेष्वसत्सु प्रागूर्ध्वं चानुपलभ्यमानत्वरूपेणानुमानान्तरेण बुद्धौ कार्यत्वरूपसाध्यसिद्धिरिति सूत्रतात्पर्यार्थः

असिद्धत्वमारोप्यम् । विशेषणासिद्धिदेशनाभासेयम् । उत्तरम्—उपलब्धिविषयत्वमुपलब्धेरस्तीत्यत्र न विवादः । किंतु नैतावतैव ज्ञानत्वव्यतिरेकः, व्याघातात् । अन्यथा त्वत्साधनेऽप्ययं दोषः । तदिदमविषयवृत्तित्वमात्मनो विधेयत्वेन निषेध्यत्वेन वा ज्ञानस्य विषयत्वात् । तदनयोः कीर्तेरपि वचनं व्यामोहनकृतम् । यदाह—"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति" इति ।

साध्यवत्साधर्म्येण पक्षे साध्यवत्तासिद्धिवत् साध्यवद्वैधर्म्येण विपक्षेऽपि साध्यवत्त्वापादनमनित्यसमः । यथा—यद्यग्निमत्साधर्म्यात्प-

सद्भावः सेत्स्यतीत्यभिप्राय इत्यनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमः । उपलभ्यमानत्वे चोपलब्धिरेव स्यात्, नानुपलब्धिरिति भावः । समाधत्ते—उत्तरमित्यादिना ।

अयमाशयः—"अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः" इति । अनुपलब्धेरनुपलम्भात्मकत्वात् अनुपलब्धिरूपेण प्रतीयमानत्वात् अनुपलब्धिरहेतुः बुद्ध्याद्यनुपलब्ध्या अभावस्याधिकानुपलब्धिः स्वयमविद्यमानत्वादित्यर्थः । अयमेवार्थोऽभिधीयते—नास्तीति ज्ञानमनुपलब्धिः । सा च तत्स्वभावतया प्रत्यात्मसंवेद्या । अतस्तदनुपलब्धिरसिद्धेत्यभिप्राय इति । यदाप्युपलब्ध्यभावोऽनुपलब्धिः, तदापि तस्याः प्रत्यात्मवेद्यत्वादनुपलब्धेरनुपलब्धिरसिद्धा । तथाहि—'शास्त्रज्ञानं मम पूर्वं नास्ति । इदानीं श्रुतशास्त्रज्ञानं मयि नोपलभ्यते' इत्यनुपलम्भरूपेण ज्ञायत एव । एतेनोपलभ्यमानत्वादुपलब्धिः स्यादित्येतत्प्रत्युक्तम् । विरोधिमुखेनोपलब्धिर्यथा प्रतीयते तथानुपलब्धेः प्रतीयमानत्वात् । किंच परवचनस्य स्वरूपाप्रतिषेधकत्वे हेतुरप्रतिषिद्धः स्यात् । स्वरूपप्रतिषेधकत्वेन स्वयमेव न स्यादित्यलमिति ।

[1]नित्यसमाख्यजातौ बहु वक्तव्यमस्तीति तामुपेक्ष्य प्रथमं सूचीकटाहन्यायेनानित्यसमां जातिं लक्षयति—साध्यवत्साधर्म्येणेति । तामुदाहरति—यथेति । तत्र

1 सूत्रे नित्यानित्यकार्यसमा इति नित्यसमानन्तरमेव अनित्यसमोद्देशात् कथमत्र नित्यसमलक्षणनिरूपणात्पूर्वमनित्यसमनिरूपणं संगच्छते. इत्याशङ्कायामाह—नित्यसमाख्यजाताविति । मूले अनित्यत्वस्यानुपयुक्तत्वात् साध्यधर्मसामानामेयमिति । 'साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः' इति न्यायसूत्रे सर्वत्रानित्यत्वप्रसङ्गादनित्यसम

क्षोऽग्निमान्, हन्ताग्निमद्वैधर्म्यात् ह्रदादेरपि विपक्षस्याग्निमत्त्वमस्तु, अविशेषात्। न हि महानससाधर्म्यात्पर्वतेऽग्निना भवितव्यम्, न तु तद्वैधर्म्यात् ह्रदेऽग्निना न भवितव्यमिति कश्चिदस्ति विशेषः।

नन्वविशेषसमातः कथमयं भिद्यते? अत्र परिशिष्टम्—"पक्षादेरविशेषमात्रापादनं तत्र। इह तु विपक्षस्य सपक्षत्वापादनमिति विशेषः इति" तन्न। तन्मतेऽविशेषसमायामेतदन्तर्भावः स्यात्। अस्मन्मते तु तत्र साधर्म्यादविशेषापादनम्। इह तु वैधर्म्यापादनमिति स्फुट एव विशेषः। उक्तिसंभवस्तु साधर्म्यवत् वैधर्म्यस्यापि साध्यसाधनत्वमिति। प्रतिकूलतर्कदेशनाभासेयम्। अनित्यत्वस्यानुपयुक्तत्वात् साध्यधर्मसमा नामेयमित्यवगन्तव्यम्। उत्तरम्—साधर्म्यादपि नियतादेव साध्यसिद्धिः। किं पुनर्वैधर्म्यादनियतादिति। तदिदं युक्ताङ्गहीनत्वम्, नियमस्यानपेक्षणात्। अयुक्ताङ्गाधिकत्वं वा, वैधर्म्यस्याङ्गत्वेनाङ्गीकारात्।

प्रकृतोपयुक्तधर्मस्य स्ववृत्त्यवृत्तिविकल्पानुपपत्तिजनितं जातिसामान्यलक्षणवद्वाक्यं नित्यसमः। यथा—'शब्दोऽनित्यः' इत्यत्र जातिवाद्याह—अनित्यत्वमत्र साध्यम्। तत्किं नित्यम्? अनित्यं वा? आद्ये धर्मस्य नित्यत्वाद्धर्मिणोऽपि नित्यत्वमिति शब्दस्य नित्यत्वप्रसङ्गः। न हि धर्मिरहितस्य धर्मस्यैवावस्थानमुचितम्। द्वितीये त्वनित्यत्वाभावे नित्यत्वं

हेतुमाह—अविशेषादिति। नन्वविशेषसमजातेः कथमनित्यसमा जातिर्भिद्यत इत्याशङ्कते—नन्विति। अनयोर्महानेव विशेषोऽस्तीति परिहरति—अत्रेति। समाधत्ते—उत्तरमित्यादिना।

नित्यसमां जातिं लक्षयति—प्रकृतोपयुक्तेति। 'अनित्यः शब्दः, कृतकत्वात् घटवत्' इत्यस्मिन् प्रयोगे जातिं दर्शयति—यथेति। धर्मिणो नित्यत्वाभावेऽपि धर्मस्य नित्यत्वमस्त्वित्याशङ्क्याह—न हीति। वक्तव्यमेवेति। एकतरनिषेधस्यान्यतर-

इत्युक्तेः अनित्यत्वापादन एव अनित्यसम इति नाङ्गीकरणीयम्। तथा सति विपक्षादौ वह्निरूपसाध्यवत्त्वप्रसङ्गस्थले जात्यन्तरत्वापत्तेः। अतः तत्रानित्यत्वमविवक्षितम्, साध्यधर्मप्रसङ्गो विवक्षितः। तथा च साध्यधर्मसमेतिनाम अन्वर्थं भवतीति भावः।

वक्तव्यमेव शब्दस्य । एवं पक्षत्वावच्छेदकं शब्दत्वम् । तदपि किं नित्यमनित्यं वेत्यादि हेतुदृष्टान्तादावप्यूहनीयम् । एवं येन प्रमाणेन हेत्वादिकमवगन्तव्यं, तत्किं स्वविषये प्रमाणम्? अन्यत्र वा? आद्ये, आत्माश्रयः । द्वितीये, व्याघात इत्यादि । योऽयं धर्मधर्मिणोर्भावः, स किं भिन्नयोः? अभिन्नयोर्वा? आद्येऽतिप्रसङ्गः । [1]द्वितीये, साध्यं प्रागेवावगन्तव्यमिति खण्डनोक्तिज्ञानमूहनीयम् । तदियं सर्वदूषणाभासा । धर्मधर्मिणोरभेदभ्रम एव बीजम् । अनित्यत्वस्यानुपयुक्तत्वादुपरञ्जकधर्मसमानामेयमिति । उत्तरम्—न हि धर्मिणि सत्येव धर्मावस्थानमिति नियमः; नापि तत्प्रमाणविषय एव तत्प्रमाणत्वम्; नाप्यभेदे धर्मधर्मिभाव इत्यादि । अन्यथा तवासाधकतानुमाने एतादृशजातिविकल्पजालप्रसङ्गः । तदिदमविषयवृत्तित्वमयुक्ताङ्गाधिकत्वं च स्फुटमेव । तदेतज्जातिप्रसङ्गात् एकदण्डिसमुत्थानम् ।

विधिनान्तरीयकत्वादिति भावः । उक्तन्यायमन्यत्राप्यतिदिशति—**एवं पक्षत्वावच्छेदकमिति**। उक्तविकल्पो हेत्वादावपि तुल्य इत्याह—**एवमिति**। **खण्डनोक्तज्ञानमिति**। **महाखण्डनकारोक्त**जातिविषयकज्ञानमित्यर्थः । अत एवोक्तं **गौतममुनिना**—"नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः" इति । अनित्यत्वस्य धर्मस्य, नित्यं सर्वदा सद्भावाद्धर्मिणोऽपि शब्दस्य सर्वदा सद्भावः । अथानित्यत्वं सर्वदा नास्ति, तथाप्यनित्यत्वाभावान्नित्यः शब्द इति धर्मिणोऽपि शब्दस्य सर्वदा सद्भावः । धर्मिणमन्तरेण धर्मस्यावस्थानाभावान्नित्यत्वस्य प्रसङ्गो नित्यसम इति न्यायभाष्यकारः । समाधत्ते—**उत्तरमित्यादिना** । अयमाशयः—अनित्यत्वस्य सर्वदाप्यभ्युपगमे नित्यत्वविरोधः । अनभ्युपगमे चासिद्धो हेतुः । नित्यम्, अनित्यत्वस्य सर्वदा सद्भावादित्ययमसिद्ध इति । यत्तु धर्मस्यावस्थानाद्धर्मिणोऽप्यवस्थानप्रसङ्ग इति; तत्र दूषणम्—प्रध्वंसश्चानित्यत्वम् । न तस्मिन् सति शब्दसद्भाव इति । भावात्मको

1 मूले द्वितीये साध्यं प्रागेवावगन्तव्यमिति । पर्वतो वह्निमान् इति साध्यते । तत्र वह्निपर्वतयोर्धर्मधर्मिभावः स यदि अभेदे स्वीक्रियते, तदा वह्नेः धर्मस्य धर्मिणा पर्वतेनाभेदात् अनुमितेः पूर्वमेव पर्वतवत् ज्ञानं स्यादिति भावः ।

अनुगतस्य संबन्धिभेदादननुगमापादनेन प्रत्यवस्थानं कार्यसमः । अत एव वदन्ति—

"वस्तुभेदे प्रसिद्धेऽपि शब्दसाम्यादभेदिनः ।
न युक्तानुमितिः पाण्डुद्रव्यादिव हुताशने ॥"

इति । [1]बौद्धोऽप्याह—

"साध्येनानुगमात्कार्यसामान्येनापि साधने ।
संबन्धिभेदाद्भेदोक्तिर्दोषः कार्यसमो मतः ॥"

इति ।

एवं प्रवर्तते—'शब्दोऽनित्यः कार्यत्वात्' इत्यत्र जातिवाद्याह—मृद्दण्डादिपूर्वकं कार्यत्वमन्यत् घटस्य । कण्ठताल्वादिपूर्वकं कार्यत्वमन्यदेव शब्दस्येति कथं कार्यत्वहेतुरिति । अत्र परिशिष्टे दूषणमुक्तम्—"मृद्दण्डादिव्यापकव्यावृत्तिरिति जातिवाद्याह, तदा चापकर्षसमः" इति । तन्न । संबन्धिभेदात्कार्यत्वं भिन्नमित्येव जातिवादिनोऽभिमतम् । न तु व्यापक-

हि धर्मो निराश्रयो न संभवति, न त्वभावात्मक इति । [2]वस्तुतस्तु भावात्मकोऽपि घटत्वादिर्जगदाधारताप्रयोजकलक्षणसंबन्धेन काले वर्तत इत्युक्ते बाधकाभावादित्यास्तां विस्तरः ।

कार्यसमं लक्षयति—**अनुगतस्येति** । अपकर्षसमादियं जातिर्भिद्यते, भेदस्य जागरूकत्वादिति परिहरति—**तन्नेति** । **अत एवेति** । संबन्धिभेदात्कार्यभेदाभ्युपगमादेवेत्यर्थः । न्यायविदुत्तरयति—**उत्तरमित्यादिना** ।

1 मूले बौद्धोऽप्याहेति । धर्मकीर्तिराहेत्यर्थः । साध्येनानुगमादित्यादि । साध्येनानित्यत्वेन अनुगमात् व्याप्तत्वात् कार्यसामान्येन कार्यत्वेन साधने अनित्यत्वसाधने, संबन्धिभेदात् कार्यत्वाश्रयघटशब्दादिभेदात् भेदोक्तिः कार्यत्वस्य भेदोक्तिः कार्यसम इति श्लोकार्थः । कार्यत्वं साधनीयमिति । शब्दे पक्षे अनित्यत्वसाधकत्वेनोपन्यस्तं कार्यत्वं साधनीयमित्यर्थः । स चानैकान्तिक इति । प्रयत्नानन्तरमुपलब्धिरूपो हेतुः कार्यत्वव्यभिचारीत्यर्थः । व्यभिचारमेव दर्शयति-नित्यस्यापीति ।

2 न ध्वंसस्वरूपमनित्यत्वम्; अपितु ध्वंसप्रतियोगित्वम् । तच्च भावरूपमेव । तच्च कथमाश्रयं विना तिष्ठेदित्याशङ्कायामाह—वस्तुतस्त्विति

व्यावृत्त्या व्याप्यव्यावृत्तिरित्ति नापकर्षसम इति । अत एवावर्ण्यसमोऽपि न । यत्तु—त्रयमुदाहरणं दर्शितम्; प्रयत्नानन्तरमुपलब्ध्या कार्यत्वं साधनीयम् । सा चानैकान्तिकी, नित्यस्यापि तदनन्तरोपलम्भादिति । तदपि न । एतावता ह्यसिद्धिमुद्भावयति । तच्च सद्दूषणमिति । अथानवस्थोद्भावनमिदम्, तदा प्रसङ्गसम एव । तदस्या धर्मिभेदाद्धर्मभेद इति भ्रमो बीजम् । व्याप्यत्वासिद्धिरारोप्या । उत्तरम्—न हि संबन्धिभेदादभिमतधर्मभेदः । तथा सति न किंचित् क्वचिदनुगतं भवेदिति स्वव्याघातः । तदिदमविषये वृत्तित्वमनुगतेऽननुगतत्वाध्यारोपात् ।

ये त्वन्ये जातिभेदास्ते सर्वेऽप्युपपत्तिसमप्रपञ्चा द्रष्टव्याः । अतश्चतुर्विंशतित्वनिर्वाहान्न विभागभङ्गप्रसङ्गः । षट्पक्षी त्वत्र न चिन्तिता, सप्तपक्ष्यादेरपि संभवात् । एतच्च [1]नयचिन्तामणिप्रपञ्चे प्रपञ्चितमस्माभिः ।

इति जातिनिरूपणम्

ननु सूत्रकारेणोक्तानामनुक्तानां च जातीनामन्यासां विद्यमानानामिह कस्मादनभिधानमित्याशङ्क्याह— ये त्वन्ये जातिभेदा इति ।

नन्वनन्यसमा जातिः [2]प्रसिद्धास्त्याकरग्रन्थादौ । तथाहि —यदिदमन्यदित्युच्यते, तत किं स्वरूपादन्यत्? उतानन्यत्? यदि स्वरूपादन्यत, तदात्महानादसदेव स्यात् । अथानन्यत्, तथाप्यन्यत्वाभावादन्यन्न भवतीत्यन्यताया अभाव इति । तत् कथमियं निराकृतेति चेत्; न । "निमित्तान्तरात्संज्ञान्तरे योज्यमानेऽर्थतथाभावस्य निराकर्तुमशक्यत्वात्" इति भगवदक्षपादमुनिसूत्रात् । निमित्तान्तरात्स्वरूपापेक्षया भेदाभावलक्षणात् संज्ञान्तरेऽनन्यशब्दे योज्यमाने परेणापेक्ष्यमाणे विद्यमानेऽप्यर्थतथाभावस्य वस्त्वन्तरापेक्षयान्यशब्दवाच्यत्वस्य निराकर्तुमशक्यत्वात् । यद्वा, घटादौ

1 न्यायचिन्तामणौ प्रपञ्चेन प्रपञ्चितमस्माभिः, इति A, B कोशयोः पाठः

2 प्रसिद्धास्त्याकरग्रन्थादाविति । शब्दानित्यत्वप्रकरणे 'अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यतराभावः' इति सूत्रे तद्भाष्यादौ चेत्यर्थः । अनन्यसमजातेः समाधानबोधकं सूत्रं प्रकारान्तरेण योजयति—यद्वेति ।

## निग्रहस्थाननिरूपणम्

जातिनिरूपणानन्तरं निग्रहस्थाननिरूपणं स्थानलक्षणसंगत्या। तत्र निग्रहोन्नायकत्वं निग्रहस्थानत्वम्। निग्रह एव कः? न तावदप्रतिपत्तिः; नापि विप्रतिपत्तिः; नाप्येतद्द्वयान्यतरत्वम्; यत्र हि सभाक्षोभादिना सम्यक् जानन्नेव न किंचिद्वदति तत्राननुभाषणेऽव्याप्तेः। नापि कथाकारणीभूतज्ञानविरहः; तस्याप्यव्याप्तेः। अर्थान्तरादौ कथाकारणीभूतज्ञानस्यापि विद्यमानत्वात्। नापि समीचीनकथाकारणीभूतज्ञानाभावः। कथायाः समीचीनत्वं किं समीचीनज्ञानजन्यत्वं वा? निग्रहस्थानशून्यत्वं वा? नाद्यः, सम्यग्ज्ञानवतोऽप्यननुभाषणस्य प्रदर्शितत्वात्। नापरः, आत्माश्रयात्। तत्कथमेतत्?

निमित्तान्तरात्पदार्थान्तरापेक्षया भेदलक्षणात्संज्ञान्तरेऽन्यशब्दे योज्यमाने प्रयुज्यमानेऽर्थतथाभावस्य स्वरूपापेक्षया भेदशून्यत्वस्य निराकर्तुमशक्यत्वात्पुत्रादिवदिति सूत्रार्थः।

ननु तथापि **न्यायरत्ने** मूले **मणिकण्ठ**विदुषा जात्यन्तराणि सर्वाणि कस्मान्नोक्तानीति चेत्; न। आनन्त्यात्सर्वाणि जात्यन्तराण्युदाहर्तुं न शक्यन्त इति। ननु सूत्रे चतुर्विंशतेरेवाभिधानादानन्त्यमसिद्धमिति चेत्, सूत्राणामप्युदाहरणार्थत्वादिति न्यायभाष्यकारः। सूत्राणामुदाहरणार्थत्वं च चतुर्विंशतिजातिव्यतिरिक्तजात्यन्तरेणानन्यसमादिना स्थानान्तरे सूत्रकारेण प्रत्यवस्थानदर्शनाद्विज्ञायत इत्यास्तां विस्तरः।

इति जातिनिरूपणम्

## निग्रहस्थाननिरूपणम्

जातिपदार्थं सलक्षणोदाहरणं निरूप्य [1]क्रमप्राप्तं निग्रहस्थानं निरूपयितुमारभते—**जातिनिरूपणानन्तरमिति**। **अप्रतिपत्तिरिति**। अप्रतिपत्तिलक्षणं निग्रहस्थानमित्यर्थः। वक्तुस्तात्पर्यपरिज्ञानाभावादिति भावः। **विप्रतिपत्तिरिति**। विप्रतिपत्तिलक्षणं निग्रहस्थानमित्यर्थः। विपरीतार्थपरिज्ञानादिति भावः। **एतदिति**। अप्रतिपत्तिविप्रतिपत्तिरूपोभयान्यतरत्वमित्यर्थः। **अननुभाषण इति**। [2]विज्ञातस्य परिषदा

1 क्रमप्राप्तमिति। स्थानलक्षणसंगत्येति मूलविवरणभूतमिदम्। स्थानं क्रम इत्यनर्थान्तरमिति भावः।

2 सूत्राक्षरैरेव अननुभाषणं व्याचष्टे—विज्ञातस्य परिषदेति।

उच्यते—कथाजनकसमीचीनज्ञानविरह एव निग्रहः । जनकत्वं च कारणत्वम् । तच्चायोगव्यवच्छेदेन संबन्धित्वम् । समीचीनत्वं च पुरस्कृतसमयनिर्वाहः । तद्विरहोऽननुभाषणादावप्यस्ति, अवश्यं कथा कर्तव्येति समयस्य मूकीभावेनानिर्वाहात् । एवंविधनिग्रहलिङ्गत्वं निग्रहस्थानत्वमिति संक्षेपः ।

तद्विशेषाः प्रतिज्ञाहान्यादयः । तत्र परोक्तदूषणपरिजिहीर्षाजन्योक्तपरित्यागोक्तिः प्रतिज्ञाहानिः । उदाहरणम्—'शब्दो गुणः श्रावण-

त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्, तस्मिन्नित्यर्थः । अव्याप्तेरिति । उक्तलक्षणानां तत्राभावादिति भावः । लक्षणान्तरमाशङ्क्याह—नापीति । तस्यापीति । तादृशज्ञानस्यापीत्यर्थः । अननुभाषण इत्यनुषङ्गः । एवं च तत्राव्याप्तिरिति भावः । लक्षणान्तरमाशङ्क्याह—नापि समीचीनेति । प्रदर्शितत्वादिति । अननुभाषणेऽव्याप्तेर्दर्शितत्वादिति भावः । आत्माश्रयादिति । निग्रहस्थानलक्षणे निग्रहस्थानपदप्रवेशादिति भावः ; तदिति । निग्रहस्थानं न कथंचिन्निर्वक्तुं शक्यमित्यर्थः ।

सिद्धान्तं वक्तुं प्रतिजानीते—उच्यत इति । कथाजनकेति । वीतरागविजिगीषुकथान्यतरजनकेत्यर्थः । समीचीनज्ञानजन्यत्वादिविकल्पावकाशः कथं परिहृतः स्यादित्याशङ्क्याह—पुरस्कृतेति । पराजयनिमित्तत्वं निग्रहस्थानत्वम् ; प्रमाणादिजात्यन्तपदार्थभिन्नत्वे सति [1]पराजयनिमित्तत्वं वेत्यादि लक्षणं मनसि निधायाह—संक्षेप इति ।

यद्यप्यप्रतिपत्तिविप्रतिपत्त्योर्विकल्पानन्त्यान्निग्रहस्थानान्यसंख्यातानि भवन्ति, तथापि "प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थकमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि" इति सूत्रोक्तद्वाविंशतिनिग्रहस्थानानि लक्षणोदाहरणाभ्यां स्वातन्त्र्येण प्रदर्श्यन्त इत्याह—तद्विशेषा इति । निग्रहस्थानविशेषा इत्यर्थः । तानेव विशेषानाह—प्रतिज्ञाहान्यादय इति । सूत्रक्रमेण लक्षणमाह—तत्रेति । तेषु निग्रहस्थानेष्वित्यर्थः ।

1 मूले संक्षेपपदेन सूचितं निग्रहस्थानस्य लक्षणान्तरमाह—पराजयनिमित्तमिति ।

त्वात्' [1]इत्यस्यानैकान्तिकत्वे नैयायिकेन दर्शिते, परिजिहीर्षया 'मा भूत् गुणत्वस्य साध्यत्वं, नित्यत्वं साध्यमस्तु ; नात्र श्रावणत्वमनैकान्तिकम्' इत्याह प्राभाकरः ।

नन्वत्र कस्य दूषणत्वम्? किं पूर्वसाध्यहानेः? अथवा परसाध्यपरिग्रहस्य? उत, तदुभयस्य वा? नाद्यद्वितीयौ, विनिगमनाविरहात् । न तृतीयः, एकेनैवाशक्तेरुन्नयनादपरस्य व्यर्थत्वात् ।

उच्यते— उपजीव्यत्वाद्धानेरेव दुष्टत्वोन्नायकत्वम् । न हि पूर्वसाध्यमत्यक्त्वा साध्यान्तरस्योक्तिसंभवः । द्वितीयमपि साध्यमस्तीति संभवत्येवोक्तिरिति चेत्, न, अनैकान्तिकत्वस्य तदवस्थत्वात् ।

ननु प्रतीज्ञासंन्यासात्कथमस्य भेद इति चेत्—न, तस्योक्तस्यानङ्गीकाररूपत्वात् । हानौ तूक्तमङ्गीकृत्यैव पश्चात् परित्यागात् । तथाप्यङ्गीकारानङ्गीकारयोर्विरुद्धत्वात् विरुद्ध एवान्तर्भाव इति चेत् ; न, 'प्रागुक्तम् ;

परोक्तेति । परोक्तं नैयायिकोक्तं यद् दूषणं, तत्परिजिहीर्षया परिहर्तुमिच्छया जन्यः योऽयमुक्तस्य परित्यागो गुणत्वपरित्यागः, तदुक्तिरित्यर्थः । उदाहरति—उदाहरणमिति ।

नन्वेवं प्रतिज्ञासंन्यासात्प्रतिज्ञाहानेः कथं भेदः संगच्छत इत्याशङ्कते—नन्विति । परिहरति—नेति । तस्येति । प्रतिज्ञासंन्यासस्येत्यर्थः । प्रतिज्ञाविरोध एवान्तर्भावः प्रतिज्ञाहानेरस्त्विति शङ्कते—तथापीति । प्रतिज्ञासंन्यासानन्तर्भूतत्वेऽपीत्यर्थः । परिहरति—नेति ।

[2]वस्तुतस्तु—साध्ये प्रतिदृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानिः । 'यदि कृतकत्वाद् घटादिवदनित्यः शब्द इष्यते, तर्ह्याकाशादिवदमूर्तत्वान्नित्यः किं नेष्यते' इति प्रति-

1 मूले अनैकान्तिकत्व इति । गुणत्वाभाववति शब्दत्वे शब्दाभावे च श्रावणत्वादिति भावः । नात्र श्रावणत्वमनैकान्तिकमिति । शब्दभिन्ने अनित्ये श्रावणत्वस्यासत्त्वादिति भावः । अनैकान्तिकत्वस्य तदवस्थत्वादिति । श्रावणत्वहेतोः गुणत्वसाधकस्यापरित्यागेन शब्दत्वादौ व्यभिचारतादवस्थ्यादित्यर्थः ।

2 सूत्रानुसारेण प्रतिज्ञाहानिं सोदाहरणं निरूपयति—वस्तुतस्त्विति । साध्ये पक्षे अनित्यत्वेन शब्दस्य साध्यत्वात् । प्रतिदृष्टान्तस्य आकाशस्य, धर्मानुज्ञा नित्यत्वानुज्ञा इत्यर्थः ।

इदानीं नोक्तम्" इति को विरोधः? त्यागस्योपजीव्यत्वाच्च। न तु त्यागमनुद्भाव्य विरोधोऽपि देशयितुं शक्यते । प्रतिज्ञापदमुपलक्षणम् । एवं पक्षहेतुदृष्टान्ततद्विशेषणादिहानयोऽप्यूह्याः । सेयं सद्विषया असद्विषया च । प्रत्युत्तरकक्ष्यापातिनी तदुत्तरकक्ष्योद्भाव्या। आपन्नदोषपरिजिहीर्षाहेतुकत्वात् सा सद्भावौ पर्यनुयोज्योपेक्षणसहचारिणी । वादकथायामुद्भाव्या, तत्त्वप्रतिपत्त्यनुकूलत्वात् ।

वादिनोक्ते, वाद्याह 'भवतु ; किं नो बाध्यते ?' इति । तत्र तस्य नित्यत्वाभ्युपगमेनानित्यत्वप्रतिज्ञा हीयते । अतः प्रतिज्ञाहानिर्नाम निग्रहस्थानं भवतीति वयमालोचयामः । ऊह्या इति । 'अनित्ये वाङ्मनसे, कार्यत्वात्' इत्यस्य [1]भागासिद्ध्या प्रतिषेधे 'वागेव तर्हि पक्षीक्रियते' इति वदतः पक्षहानिर्नाम निग्रहस्थानं भवति । तथा 'अनित्यः शब्दः, प्रमेयत्वात्' इत्यस्य हेतोरनैकान्तिकत्वेन प्रतिषेधे 'कृतकत्वात्' इति ब्रुवतो हेतुहानिः । तथा 'अनित्यः शब्दः, कृतकत्वात्, गगनवत्' इत्यस्य दृष्टान्तस्य साध्यसाधनवैकल्येन प्रतिषेधे 'घटवत्' इति वदतो दृष्टान्तहानिः । एवं प्रतिज्ञाविशेषणहान्यादयोऽप्यूह्या इति भावः । अवान्तरभेदमाह—सेयमिति ।

प्रतिज्ञान्तरं लक्षयति—तद्विशेषणेति । तदुदाहरति—यथेति । [2]'प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्' इति । 'सर्वमनित्यं सत्त्वात्; इत्यस्य दृष्टान्ताभावेन प्रतिषेधे कृते, धर्मो विवादास्पदीभूतत्वलक्षणस्तस्य विकल्पः प्रतिज्ञातार्थे विशेषणत्वेन योजनम् । तदर्थ इति पदं प्रतिषेधनिवृत्त्यर्थकम् । यथा 'मशकार्थो धूमः' इति निर्देशः । 'विवादास्पदीभूतं सर्वमनित्यम्' इत्येतत्प्रतिज्ञान्तरं निग्रहस्थानमित्युदाहरणप्रदर्शनद्वारेण लक्षणार्थोऽपि कथित इति ।

प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः इति सूत्रपाठः ग्रन्थेषूपलभ्यते ।

1 भागासिद्धया प्रतिषेधे इति । पक्षैकदेशे मनसि कार्यत्वहेतोरभावादिति भावः। मूले प्रतिज्ञापदमुपलक्षणमिति । तथाच उक्तहानिरिति अन्वर्थसंज्ञा । प्रतिज्ञाहानिरिति उपलक्षणनामेति भावः । अत्र निर्वाह्यमेव वदेत् , उक्तं च निर्वहेदिति रहस्यम् ।

2 प्रतिज्ञान्तरलक्षणसूत्रं सोदाहरणं व्याचष्टे प्रतिज्ञातार्थप्रतिषेध इति । यथा मशकार्थो धूम इति । तथा च सूत्रे तदर्थनिर्देश इत्यत्रार्थशब्दो निवृत्तिवाची विवक्षितः । तदर्थः निर्देश इत्यर्थः । तच्छब्देन प्रतिज्ञातार्थप्रतिषेधः परामृश्यते इति भावः । तदर्थनिर्देशः तदर्थस्यः प्रतिज्ञातार्थस्य निर्देश इति व्याख्यानन्तु स्वरसं बोध्यम् ।

तद्विशेषणशून्येऽभिहिते परोद्भावितदूषणनिराकरणेच्छाजन्यतद्विशेषणाभिधानं प्रतिज्ञान्तरम् । यथा—'जलं रसानधिकरणं रूपवत्त्वात्' [1]इत्यत्रानैकान्तिके उद्भाविते 'अस्तु तर्हि, अपाकजरसानधिकरणत्वं साध्यम्' इति । अत्र ह्यपाकजविशेषणाभिधानम् । एवं पक्षहेतुदृष्टान्ततद्विशेषणादयोऽप्यूहनीयाः ।

ननु प्रागुक्तस्य निर्विशेषणस्य परित्यागात् प्रतिज्ञाहानेः कथमस्य विशेषः ? मैवम् । न हि विशेषणाभाववत्तया साध्यमनेनोक्तम्, येन तत्परित्यागात्तथा स्यात् । किंतु न विशेषणवत्तया, नापि विशेषणाभाववत्तया । स्वरूपमात्रं साध्यमभिधाय पश्चाद्विशेषयतीति भवति निग्रहस्थानान्तरत्वम् । हेत्वन्तरं तु न प्रतिज्ञान्तरात् पृथक् ।

साध्यसाधनभेदविवक्षया तु भेद इति यत् परिशिष्टं, तत् दुष्टमेव, हान्यादीनामपि तथात्वप्रसङ्गात् । पूर्वोक्तं दूषणमङ्गीकुर्वाणः कश्चित् त्यजेदेव पूर्वप्रतिज्ञाम्, न तु प्रतिज्ञान्तरं हेत्वन्तरमवयवान्तरं वा वदेत् । अपरस्तु पूर्वोक्तं विशेषयेत् । तत्र यथाक्रमं हानिः, प्रतिज्ञान्तरं, हेत्वन्तरमिति भेद इति कश्चित् । परिकरसिद्धिस्तु प्रतिज्ञाहानिवदवगन्तव्या ।

ननु निर्विशेषप्रतिज्ञायाः प्रहाणात् प्रतिज्ञाहानितोऽस्य को विशेष इति शङ्कते—**नन्विति** । स्वरूपमात्रापरित्यागात्तस्यैव विशेषणान्तरेण समर्थयितुं प्रवृत्तत्वादिति परिहरति—**मैवमिति** । **हेत्वन्तरमिति** । अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरमित्यर्थः । सूत्रविरोधात्कथमनयोरभेद इत्यत्र साध्यसाधनभेदविवक्षणादनयोर्भेद इति कस्यचित् समाधानमाशङ्क्याह—**साध्येत्यादिना दुष्टमेवेत्यन्तेन** ग्रन्थेन । वस्तुतस्तु—प्रतिज्ञान्तरहेत्वन्तरयोर्लक्षणभेदादुदाहरणभेदात् सूत्रकारेण पृथक् निर्देशाच्च भेद इति वयमालोचयामः ।

प्रतिज्ञाविरोधं लक्षयति—**सहानवस्थितयोरिति** । सहानवस्थानमेककालतया या ? एकदेशतया वा ? एकप्रकारतया वा ? प्रतियोगितावच्छेदकधर्मेण

1 मूले अनैकान्तिके उद्भाविते इति । पृथिव्यामित्यादिः । हान्यादीनामपि तथात्वप्रसङ्गादिति । प्रतिज्ञाहान्यादीनामपि प्रतिज्ञान्तरत्वप्रसङ्गादित्यर्थः । अत्र कक्ष्यान्तरे न विशेषणी-

सहानवस्थितयोरेकत्र वाक्ये एकनिष्ठतयैकेनाभिधानं प्रतिज्ञाविरोधः । सहानवस्थानं च कस्यचिदेककालतया ; कस्यचिदेकदेशतया, कस्यचिदेकप्रकारतया ; कस्यचित्प्रतियोगितावच्छेदकधर्मद्वारा । आद्यः प्रागभावप्रध्वंसयोरन्योन्यं प्रतियोगिना सह । द्वितीयोऽत्यन्ताभावस्य प्रतियोगिना सह । तृतीयः संयोगादेः स्वात्यन्ताभावेन सह । चतुर्थोऽन्योन्याभावस्य प्रतियोगिना सह । अन्येषां विश्ववृत्तिधर्माणामेतदन्तर्भावेनैव । तथापि विरोधलक्षणे नाननुगमदोषः; साधारणोक्तित्वात् , यथार्थत्वकारणत्वादिवत् ।

ननु विरोधात्कथमपसिद्धान्तस्य भेदः? तत्र कश्चित्—यद्यप्यपसिद्धान्ते विरोधोऽस्ति, तथापि शास्त्रकारवाक्यविरोधमनुद्भाव्य स्ववाक्यविरोध उद्भावयितुं न शक्यत इत्युपजीव्यत्वेन तस्यैव दूषणत्वमिति । अन्यस्तु कथान्तर्भूतवाक्ययोर्विरोधः प्रतिज्ञाविरोधः । कथाबहिर्भूतशास्त्रार्थाभ्युपगमवाक्येन तदन्तर्भूतवाक्यविरोधोऽपसिद्धान्त इति ।

तथापि [1]विरुद्धनामनिग्रहस्थानस्य कथमस्माद्भेदः ? तत्र विपरीत-

वा ? इति संदेहे निर्णयमाह—सहानवस्थानं चेति । एककालतया सहानवस्थानं दर्शयति—आद्य इति । एकदेशतया सहानवस्थानं दर्शयति—द्वितीय इति । एकप्रकारतया सहानवस्थानं दर्शयति—तृतीय इति । प्रतियोगितावच्छेदकधर्मेण सहानवस्थानं दर्शयति—चतुर्थ इति ।

अन्ये तु—प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः । यथा 'गुणव्यतिरिक्तं द्रव्यं, भेदेनानुपलम्भात्' इति । ननु विरुद्धहेत्वाभास एवायम्; अतो न पृथग्वक्तव्यमिति चेत् ; न । व्याप्तिस्मरणवशाद्विरुद्धहेत्वाभासे विरोधावगमः । इह तु प्रतिज्ञाहेतुवचनश्रवणमात्रादिति । इयता भेदेन पृथगभिधानमित्यप्याहुः ।

नन्वपसिद्धान्तात्कथं भेदः स्यादिति शङ्कते—नन्विति । अपसिद्धान्त-

यमिति तत्त्वम् । हेत्वन्तरलक्षणसूत्रेणैव हेत्वन्तरपदं विवृणोति अविशेषोक्त इति । भाष्योक्तोदाहरणप्रदर्शनेन सूत्रोक्तं प्रतिज्ञाविरोधस्य लक्षणं विरुद्धहेत्वाभासाद्वैलक्षण्यं च निरूपयति—अन्ये त्विति ।

1 मूले विरुद्धनामनिग्रहस्थानस्येति । हेत्वाभासानां निग्रहस्थानत्वात् हेत्वाभासस्य विरुद्धस्य

व्याप्त्युपदर्शनम् । इह तु न तथेति परिशिष्टम् । तन्न । विरुद्धोऽपि साध्यासामानाधिकरण्यमात्रोपदर्शनमेव ; न त्वभावव्याप्यतोपदर्शनमपि, व्यर्थत्वात् । उपदर्शनेऽपि वा विरोधस्य तदवस्थत्वात् । तस्मादिदमत्र वाच्यम्—अहेतुविषयत्वाद्विरोधः । तस्मात्पृथगिति सिद्धमेव । सोऽप्येतस्मात्साध्यासमानाधिकरणहेतुमात्रेण पृथगिष्यते । यद्वा विरुद्धस्य विरोधान्तर्भावेऽपि न निग्रहस्थानविभागक्षतिः, हेत्वाभासत्वेन विभागकरणात् । न तु विरुद्धत्वेन । यद्यपि विरोधेऽवश्यं केनापि हेत्वाभासेन भवितव्यम् ; तथाप्युपजीव्यत्वादस्यैवोद्भावनम् । तदेवं प्रतिज्ञापदयोः क्वचित् । यथा—'आत्मा अनात्मा' इति शाब्दः । अनयोरेव क्वचिदार्थः । यथा 'श्रमणागर्भिणी' इति । क्वचित्पक्षार्थकपदयोः । यथा—'सावयवः परमाणुः क्रियावान्, मूर्तत्वात्' इति । क्वचित्पक्षहेत्वोः । यथा—'ईश्वरो न भोगी, अकर्तृत्वात्' इति । क्वचित् साध्यहेत्वोः । यथा—'घटः प्रागभावप्रतियोगी, सकलकालवृत्तित्वात्' इत्यादि ।

परोक्तदूषणोद्दिधीर्षया स्वोक्तापलापः प्रतिज्ञासंन्यासः । तदयं पञ्चधा—क एवमाहेति वा, परपक्षोऽयं मयोक्त इति वा, स्वोक्त एव

स्येति । सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गरूपस्येत्यर्थः । तथापीति । विरोधसाम्येऽपीत्यर्थः । उपजीव्यत्वेनेति । विरोधज्ञानमन्तरापसिद्धान्तोद्भावनं न संगच्छत इत्युपजीव्यत्वेनोत्यर्थः । तस्यैवेति । प्रतिज्ञाविरोधाख्यनिग्रहस्थानस्यैवेत्यर्थः । दूषणत्वमिति । पृथगित्यनुषङ्गः । अन्यस्त्वित्यादिग्रन्थः स्पष्टार्थः ।

प्रतिज्ञासंन्यासं लक्षयति—परोक्तदूषणोद्दिधीर्षयेति । उद्धर्तुमिच्छा उद्दिधीर्षा । दूषणानामुद्दिधीर्षा ; तयेत्यर्थः ।

निग्रहस्थानत्वमिति भावः । उपपादयतः कस्यचिन्मतं शङ्कते तत्र विपरितव्याप्त्युपदर्शनमिति । विरुद्धस्य हेत्वाभासस्य । विरोधान्तर्भावेऽपि, प्रतिज्ञाविरोधान्तर्भावेऽपि । हेत्वाभासत्वेन विभागकरणादिति । तथाच विरुद्धस्यैकस्य हेत्वाभासस्य प्रतिज्ञाविरोधान्तर्भावेऽपि विरुद्धातिरिक्तानैकान्तिकदीनां सत्त्वात् न द्वाविंशतिनिग्रहस्थानोक्तिविरोध इति भावः । श्रमणा गर्भिणीति । श्रमणा ब्रह्मचारिणी । न च तस्या गर्भिणीत्वं संभवतीत्यनयोरर्थद्वारा विरोधः । अतं मिथो व्याहतं न वदेदिति तत्त्वम् ।

त्वयेदमुक्तमिति वा, परोक्त एव मयेदमुक्तमिति वा, अनुक्त एव मयेदमुक्त-मित्यादि । शेषं प्रतिज्ञाहान्यादिवत् ।

[1]वस्तुतस्तु—पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः । 'अनुष्णोऽयमग्निः' इत्यस्य प्रतिषेधे वाद्याह—'अहो मध्यस्थैरुक्तं भवेत्; नाहमग्निमनुष्णं ब्रवीमीत्यनुक्तोपालम्भोऽयम्' इति । एतच्च प्रतिज्ञासंन्यासलक्षणं निग्रहस्थानं भवति । अत्र पक्षप्रतिज्ञाशब्दयोरुपलक्षणपरत्वाद्धेत्वादिसंन्यासा अपि निग्रहहेतवो वेदितव्याः । यथा 'नित्यः शब्दः, प्रमेयत्वात्' इत्यस्यानैकान्तिकत्वेन प्रतिषेधे, 'नाहं नित्यत्वे प्रमेयत्वं हेतुं ब्रवीमि' इति ब्रुवाणस्य हेतुसंन्यास इत्यादि वयमालोचयामः ।

"अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्" इति । विशिष्यते येनासौ विशेषो विशेषणम् । न विद्यते विशेषो यस्यासावविशेषः । स चासावुक्तश्चेत्यविशेषोक्तः । तस्मिन् । हेतुशब्दः परार्थानुमानवाक्यगतसाधनभागोपलम्भकवचनः । तस्मिन्नादावविशिष्टं साधनमभिधाय तद्दूषणे च परेणोद्भाविते, पश्चाद्विशिष्टं तमभिदधतो वचनं हेत्वन्तरमित्यर्थः । अस्योदाहरणम्—'न पौरुषेया वेदाः, अस्मर्यमाणकर्तृकत्वात्' इत्यस्य जीर्णकूपारामादिभिरनैकान्तिकत्वेन प्रतिषेधे, 'संप्रदायाविच्छेदे सति' इति विशेषणमिच्छतो हेत्वन्तरं निग्रहस्थानं भवति, पूर्वस्य साधनस्य विशेषणेनोपादानात् ।

[2]ननु प्रतिज्ञाहान्या हेतुहान्यादीनामुपलक्षणवत्प्रतिज्ञान्तरेण हेत्वन्तरस्याप्युपलक्षणं भविष्यति । किमस्य पृथगुपादानेन? अन्यथोदाहरणान्तरादीनामपि पृथगभिधानप्रसङ्गः । यथा—'गुणः शब्दः, सामान्यवत्त्वात् स्पर्शवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात् रूपादिवत्' इत्यत्र रूपमात्रस्यास्मदादिप्रत्यक्षत्वाभावात्साधनविकलत्वेन दृष्टान्ते दूषिते, 'घटरूपवत्' इति वदत उदाहरणान्तरम् । तथोपनयान्तरं निगमनान्तरमप्युदाहरणीयमिति चेत्; अत्र ब्रूमः—परार्थानुमानवाक्यस्य साध्यसाधन-

1 सोदाहरणं सूत्रोक्तं प्रतिज्ञासंन्यासलक्षणं निरूपयति—वस्तुतस्त्विति । प्रतिज्ञातार्थापलपनं प्रतिज्ञातार्थापलापः । अत्र प्राश्निकाद्यवगतं नापलपेदिति रहस्यम् ।

2 हेतुहान्यादिदृष्टान्तेन हेत्वन्तरस्यापि प्रतिज्ञान्तरान्तर्भावोऽस्त्विति शङ्कते—ननु प्रतिज्ञाहान्या इति । न्यायप्रयोग एव निग्रहस्थानं वक्तव्यम् । न्यायस्य द्वे भागौ । एकः साध्यभागः,

प्रकृतानुपयुक्तमर्थान्तरमिति लक्षयन्ति । तत्र किं प्रकृतम् ? किं तत्तत्साध्यमात्रं वा ? तत्तत्पक्षमात्रं वा ? तत्तत्पक्षसाध्यवैशिष्ट्यं वा ? नाद्यौ द्वौ, अतिप्रसङ्गात् । नेतरः, अप्रसिद्धेः । अनुपयुक्तत्वमपि तद्विशिष्टप्रतीत्य-विषयत्वं वा ? तद्विशिष्टप्रतीत्यजनकत्वं वा ? उभयथापि विशिष्टप्रतीतेर-प्रसिद्धेरसिद्धिः । इतरनिग्रहस्थानानामत्रैवान्तर्भावप्रसङ्गश्च । स्तोत्रपाठादी-नामदृष्टद्वारा विशिष्टप्रतीतिजनकत्वादर्थान्तरत्वानुपपत्तिश्च । न च स्तोत्र-पाठादीनामधिकेऽन्तर्भावः संभवति, अकृतकर्तव्यत्वात् । नाप्यपार्थकादौ, असंभवात् ।

उच्यते । तत्तत्समयानुसारेण मध्यस्थावगमविषयत्वमेव प्रकृतत्वम् । अनुपयुक्तत्वं वाक्यानङ्गत्वमेव । स्तोत्रपाठादीनामपि तथात्वमस्त्येव । न हि तेषां पदत्वेन वाक्याङ्गत्वम् । किं त्वदृष्टद्वारा कारणत्वमात्रम् । नापीतरेषामत्रैवान्तर्भावः, वाक्यार्थप्रतीतिसाधनताया अत्र विद्यमानत्वात् । प्रतीतिस्तु यत्र नोत्पद्यते, तत्र प्रतिबन्धकसद्भावादिति । विशिष्टप्रतीति-प्रसिद्धिस्तु, आरोपरूपविशिष्टप्रतीत्यापि संभवति ।

भागरूपतया तद्भेदविवक्षयात्र पृथगभिधानात् । तेनात्र प्रतिज्ञान्तरं निगमनान्तरं च प्रतिज्ञान्तरशब्देन गृह्यते । हेत्वन्तरमुदाहरणान्तरमुपनयान्तरं च हेत्वन्तरग्रहणेन गृह्यत इति ।

अर्थान्तरं लक्षयति—प्रकृतानुपयुक्तमिति । प्रकृतशब्दार्थस्यानुपयुक्त-शब्दार्थस्य च दुर्निरूपत्वेन तद्घटितमपि लक्षणं दुर्निरूपमिति शङ्कते—तत्रेति । अनु-पयुक्तत्वमपि दूषयितुं विकल्पयति—अनुपयुक्तत्वमपीत्यादिना । तद्विशिष्टेति । साध्यविशिष्टेत्यर्थः । अत्रैवेति । अर्थान्तर एवेत्यर्थः ।

निरुक्तविकल्पानुपपत्तिपरिहारपूर्वकं स्वाभिमतं प्रकृतत्वमनुपयुक्तत्वं च वक्तुं प्रतिजानीते—उच्यत इति । यच्चोक्तमितरनिग्रहस्थानानामर्थान्तरेऽन्तर्भाव इति, तन्निरस्यति—नापीति । हेत्वाभासान्तर्भावस्येति । आश्रयासिद्धान्तर्भावस्येत्यर्थः ।

अपरः साधनभागः । एकैकभागमधिकृत्यैकैकं निग्रहस्थानमुक्तं सूत्रकारेणेति स्वाशयं प्रतिपाद-यति—अत्र ब्रूम इति ।

इह केचित् सिद्धसाधनमर्थान्तरेऽन्तर्भावयन्ति । तन्न । हेत्वाभासान्तर्भावस्य प्रागेव प्रदर्शितत्वात् । अनैकान्तिकत्वाद्यसाधकत्वव्याप्तिसाधने तदभावाच्च । अपिच किं सिद्धस्यापि साधनम्? उत, सिद्धस्यैव साधनम्? अथवा विप्रतिपत्तिविषयसिद्धिनान्तरीयकसिद्ध्यन्यस्य साधनं सिद्धसाधनम्? नाद्यः, सार्वत्रिकत्वात् । न द्वितीयः, सिद्धसाधनेऽपि तदभावात् । नेतरः । अभावाज्ञाने भावज्ञानस्यावश्यकत्वात्, भावसाधने सिद्धसाधनं स्यात् । यद्यप्यनुवादानन्तरमेव निग्रहस्थानानामुद्भावनं, तथापि न्यूनापेक्षयार्थान्तरस्यैवोद्भावनमुच्यमानग्राह्यत्वात् ।

नन्वर्थान्तरमर्थान्तरेणैव परिहरतः कथं कथाविच्छेदः स्यात्? मूकीभावादेव । न चाप्रतिभा तदा स्यात् । अर्थान्तरवादिनोऽर्थान्तरेण निगृहीतोऽयमिति मध्यस्थावगमविषयत्वात् ।

उभयवाद्यभ्युपगतवृत्त्यतिरिक्तवृत्त्या पदप्रयोगो निरर्थकम् । न

प्रागेवेति । हेत्वाभासग्रन्थ एवेत्यर्थः । न चाप्रतिभेति । कथामभ्युपगम्य तूष्णींभावोऽप्रतिभेत्यर्थः । अन्यस्तु ग्रन्थः स्पष्टार्थः ।

[1]वस्तुतस्तु—“प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम्” । अन्यदित्यध्याहार्यम् । अर्थान्तरमिति लक्ष्यपदमेव वा लक्षणेऽप्यावृत्त्या संबन्धनीयम् । तेन प्रकृतात्प्रस्तुतार्थात्साध्यसाधनात्तद्दूषणाद्वा यदर्थान्तरं प्रकृतेनासंबद्धार्थमनुपयोगि तदर्थान्तरं नाम निग्रहस्थानमिति सूत्रार्थः । तदेव सोदाहरणमुच्यते—यथा ‘नित्यः शब्दः, अस्पर्शवत्त्वात्’ इति । हेतुर्नाम हिनोतेर्धातोस्तुन्प्रत्यये कृते कृदन्तं पदमित्यादि प्रसक्तानुप्रसक्त्या प्रकृतानुपयोगि शास्त्रान्तरमुपदिशतोऽर्थान्तरं नाम निग्रहस्थानं भवतीति दिक् ।

निरर्थकाख्यनिग्रहस्थानं लक्षयति—उभयवाद्यभ्युपगतेति । पराभिमत-

1 भाष्योक्तोदाहरणं प्रदर्शयिष्यन् अर्थान्तरलक्षणसूत्रं व्याख्यातुमारभते—वस्तुतस्त्विति । प्रकृतादर्थादित्यस्याप्रतिसंबद्धार्थमित्यनेनान्वये प्रकृतार्थेनेति भाव्यम् । अतः पञ्चम्यन्तान्वयायान्यदित्याध्याहारमाह—अन्यदिति । अश्रुतपदाध्याहारमपेक्ष्य श्रुतपदस्यैवानुसंधाने लाघवादाह-अर्थान्तरमिति । प्रकृतादर्थादिति ल्यब्लोपे पञ्चमी । प्रकृतमर्थमुपेक्ष्येत्यर्थः । अध्याहारादिकं न कर्तव्यमित्यपि वदन्ति । अत्र प्रकृतोपयुक्तमेव ब्रूयादिति रहस्यम् ।

त्ववाचकपदप्रयोगो निरर्थकमिति लक्षणम् । लोकप्रसिद्धिनिरूढलक्षणादिना पदप्रयोगेऽतिव्याप्तेः । प्रयोगस्तु क्वचिदवाचक एव वाचक इत्यभिमानात् । यथा संस्कृतमभ्युपगम्यापभ्रंशवचनम्, तत्रापि पदार्थप्रतीतेरक्षतत्वात् ।

अन्यतरवाद्यप्रसिद्धपदप्रयोगोऽविज्ञातार्थः । ननु निरर्थकात्कथमस्य भेदः ? अत्र हि वादिद्वयाभ्युपगतवृत्तिप्रयोगेऽपि श्लेषादिकुसृष्ट्या परसंमोहनार्थं तथा पदं प्रयुङ्क्ते । यथा—'श्वेतो धावति' इति । अत्र न झटित्यर्थप्रतीतिः । यथागमितयोगमनपेक्षितरूढिकम् । यथा—'[1]कश्यपतनयाधृतिहेतुरयं, त्रिनयनतनययानसमाननामधेयवान्, तत्केतुमत्त्वात् ।

लक्षणं निरस्यति—न त्विति । अपरे तु "वर्णक्रमनिर्देशवन्निरर्थकम् । यथा 'नित्यः शब्दः, कपचटतयानां जबगडदत्वात्, भघढधषवत्' इति । वर्णक्रमनिर्देशो वर्णानां पाठक्रमः । अ आ इ ई इत्यादि । स इव तद्वत् । सादृश्यं चात्रार्थशून्यत्वम् । यत्र पदार्थोऽपि नास्ति तन्निरर्थकम् । वर्णक्रमनिर्देश एवास्ति, न पुनरर्थो यस्य तद्वर्णक्रमनिर्देशवदिति मत्वर्थीयो वेत्यप्याहुः ।

अविज्ञातार्थाख्यनिग्रहस्थानं लक्षयति—अन्यतरेति । कश्यपतनयेति । कश्यपतनयाप्रभृतिहेतुः कश्यपतनयामारभ्य कारणमित्यर्थः । अयं कश्यपब्रह्मा पक्षः । अत्रिनयनेति । अत्रिनयनः समुद्रः । 'उदन्वानुदधिः सिन्धुरत्रिनेत्रः पयोनिधिः' इति शब्दार्णवे । तस्य तनया च तनयश्च "पुमांस्त्रिया" इत्येकशेषः । लक्ष्मीः चन्द्रश्चेत्यर्थः । यद्वा—अत्रिः कश्चन ऋषिः, तस्य नयनं नेत्रम्, तस्य तनयश्चन्द्र इत्यर्थः । तस्य यानम् आधारश्चन्द्रधरः । तेन समानं हर्तृत्वादिना तुल्यं नामधेयं नाम यस्य, तद्वान् वह्निमानिति साध्यम् । हेतुतमत्वादिति । कारणतमत्वादित्यर्थः । रसवतीवदिति । रसो गुणः, 'गुणे रागे द्रवे रसः' इत्यभिधानादमृतादिः, सोऽस्या

1 कश्यपतनयेत्यादि । कश्यपतनयाधृतिहेतुरयं त्रिनयनतनययानसमाननामधेयवान् तत्केतुमत्त्वादिति मूलपाठः M कोशे । कश्यपतनया भूः । तस्या धृतिहेतुः भूधरः पर्वतः । त्रिनयनतनयो गुहः । तस्य यानं वाहनं शिखी । तत्समाननामधेयोऽग्निः । तद्वान् । तत्केतुः अग्निकेतुर्धूमः । तद्वत्त्वादित्यर्थः ।

रसवतीवत्' इति । एवं सामान्येनोभयाभ्युपगतं विशेषतोऽप्रसिद्धसमयम् । यथा कटाटङ्कजाटीरादिपदम् । यत्तु बौद्धस्य पञ्चस्कन्धादि, मीमांसकस्य चात्वालादि, तन्निरर्थक एवान्तर्भवति, एकेनैवाभ्युपगतसमयत्वात् । तत्सर्वथाविज्ञातार्था दुरवधारणा परं प्रत्यसिद्धा च । कथाकाल इति चेत्; न, मध्यस्थबोधावधिविरहे कथाकालावधिनियमाभावात् ।

अविज्ञातार्थोद्भावनानन्तरं तस्यैवावोधे का कथा? उच्यते—कथासीमानियमानुसारेणोद्भावनस्य शक्यत्वात् । यत्तु त्रिरभिहितमविज्ञातार्थमिति लक्षणम्; तन्मन्दमेव, त्रिरभिधानस्यानुपयुक्तत्वात् ।

उभयाभ्युपगतसमयप्रसिद्धार्थानन्वितानाकाङ्क्षितासंनिधिमदभिधानमपार्थकम् । उभयाभ्युपेतसमयत्वेन निरर्थकादुभयप्रसिद्धार्थत्वेनाविज्ञातार्थादनन्वितार्थत्वेनार्थान्तरादनाकाङ्क्षितासत्तिमात्रेण विरोधादस्य भेदः । विरोधे ह्ययोग्यता प्रयोजिका । इहाकाङ्क्षासत्तिव्यतिरेकमात्रम् । निरर्थकाविज्ञातार्थयोः पदार्थप्रतीतिरेव नोत्पद्यते । इह तूत्पन्नायामपि पदार्थप्रतीतावाकाङ्क्षादिव्यतिरेकेण वाक्यार्थप्रतीतिव्यतिरेकः । अर्थान्तरे पदार्थानामन्योन्यमन्वितप्रतीतिरुत्पद्यते । इह तु तस्या एव व्यतिरेकः ।

अस्तीति रसवती काचिदङ्गना । तया तुल्यं रसवतीवदित्यर्थः । "तेन तुल्यं क्रिया चेद्वतिः" । अत एवात्र दृष्टान्ते साध्यं संगच्छत इति नाप्रसिद्धविशेषणः पक्षः । नापि साध्यविकलो दृष्टान्त इति सर्वं सुस्थमिति दिक् ।

न्यायैकदेशिनोक्तं लक्षणं दूषयितुमुपन्यस्यति—**यत्त्विति** । परिषत्प्रतिवादिभ्यामिति शेषः । यद्वाक्यं विद्यमानार्थकं वादिना त्रिरभिहितमप्यप्रसिद्धप्रयोगातिद्रुतोच्चारणादिनिमित्तेन परिषत्प्रतिवादिभ्यां न ज्ञायते, तत् [1]अज्ञानसंवरणायोक्तमविज्ञातार्थं नाम निग्रहस्थानं भवतीत्यर्थः । दूषयति—**तन्मन्दमिति** ।

अपार्थकाख्यनिग्रहस्थानं दर्शयति—**उभयेति** । निरर्थकादिभ्यः कथमस्य भेद इत्यत आह—**उभयाभ्युपेतेति** । **विरोधे हीति** । प्रतिज्ञाविरोधे हीत्यर्थः । **इहेति** । अपार्थकाख्यनिग्रहस्थान इत्यर्थः । **संसर्गेति** । श्रोतरि तदुच्चारणजन्यसंसर्गावगमप्रागभाव इत्यर्थः ।

1 अज्ञानसंवरणायेति । अज्ञानाच्छादनायेत्यर्थः ।

नन्वेवमत्राशक्तत्वानुमानम्—'अयं पुमानिदानीमेतद्वाक्यार्थप्रतीतिशून्यः, अनाकाङ्क्षितासत्तिमत्पदकदम्बकप्रयोक्तृत्वात् पुरुषान्तरवत्' इति। इदं च न सम्यक्, एतद्वाक्यार्थप्रतीतेरेवासिद्धेः। न ह्यपार्थकोद्भावयितुरियं प्रतीतिः सिद्धा। सा च वादिवाक्याद्वा भवेत्? कारणान्तराद्वा? नाद्यः। 'गच्छति पयसाश्वेन भुक्त्वा देवदत्तः' इत्यादिवाक्यानामन्वितप्रतीत्यजनकत्वं द्वितीयवादिनोऽनुमतमेव। अन्यथा बाधः स्यात्। न द्वितीयः, तस्याभावात्। इति साध्याप्रसिद्धिर्बाधो वा। एवं हेतुविशेषणमप्यसिद्धम्। अनाकाङ्क्षितत्वमाकाङ्क्षानिरूपणायत्तम्। सा किं जिज्ञासा? संसर्गावगमप्रागभावो वा? नाद्यः। न हि [1]गच्छतीत्यादौ जिज्ञासैव नोत्पद्यते। नेतरः, अवगमप्रागभावस्य तदानीं दुर्ज्ञेयत्वात्। सोऽपि किं स्वकीयः? परकीयो वा? यत्किंचित्संसर्गावगमस्य वा? प्रकृतसंसर्गावगमस्य वा? इत्यादिदूषणग्रस्तत्वात्कथमपार्थकोद्भावनमिति।

उच्यते—पदान्येव पक्षीकृत्य पदार्थान्तरसंसर्गज्ञानाजन्यत्वं साधनीयम्। अतो न साध्याप्रसिद्धिः, बाधो वा। आकाङ्क्षाव्यतिरेकस्य स्वात्मनि प्रत्यक्षेणैव गृहीतत्वान्न हेत्वसिद्धिः।

इदं तु चिन्त्यते—अप्राप्तकालादेः कथमस्य भेदः? यद्याकाङ्क्षक्रमेणाभिधानं तदा वाक्यार्थप्रतीतिः। यदि व्युत्क्रमेणाभिधानं, तदा त्वत्राप्राप्तकालता। अनभिधाने न्यूनत्वम्। अतिरिक्ताभिधाने चाधिकत्वम्, आसत्तेर्व्यतिरेकादिति। तन्न, दूरस्थस्यापि संबन्धावगमात् '[2]यस्य येनाभिसंबन्धः' इति न्यायात्। अतो नाकाङ्क्षितासत्तिरित्यभिधातव्यम्।

सिद्धान्तं वक्तुं प्रतिजानीते—उच्यत इति। शङ्कते—इदं त्विति। अस्येति। अपार्थकस्येत्यर्थः। व्यतिक्रमेणेति। आकाङ्क्षाव्यतिक्रमेणेत्यर्थः। अत्रेति। अपार्थक इत्यर्थः। दूषयति—तन्नेति।

1 गच्छतीत्यादाविति। गच्छति पयसाश्वेन भुङ्क्त इत्यादावित्यर्थः।

2 "यस्य येनाभिसंबन्धो दूरस्थेनापि तस्य सः।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्॥"

इति न्यायाकारः।

तत्र चोक्तमेव। तत्कथमेतत्? उच्यते—यथा 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यत्र क्रमिकसंपूर्णाभिधानेऽप्याकाङ्क्षाविगमः, तथात्रापि द्रष्टव्यमिति। व्यर्थविशेषणमत्र केचिदन्तर्भावयन्ति। तन्न, हेत्वाभासान्तर्भावात्। विशिष्टप्रतीतिस्तत्र नोत्पद्यत इति यत्किंचिदेतत्।

सिद्धान्ताभ्युपेताभिधानक्रमव्यतिरेकेणाभिधानमप्राप्तकालम्। न चापसिद्धान्ताभेदः, तस्य सिद्धान्तविपरीताभिधानरूपत्वात्। अत्र सिद्धान्तमत्यक्त्वैवाभिधानमिति महान् विशेषः। व्यतिक्रमेणाप्यर्थप्रतीतिरित्यभिमानादुत्थानमस्य। आकाङ्क्षितः क्रमोऽङ्गमेवेति दुष्टताबीजम्।

वाक्यार्थप्रतीत्यङ्गतया स्वशास्त्राङ्गीकृतवाक्यैकदेशाभिधानं न्यूनम्। अत एव सौगतस्य द्व्यवयवं प्रयुञ्जतो न न्यूनम्। तदुपेक्षणे च न पर्यनुयोज्योपेक्षणमपरस्य। एवं नैयायिकस्य पञ्चावयवं प्रयुञ्जतो नाधिकमिति।

अप्राप्तकालाख्यनिग्रहस्थानं दर्शयति—सिद्धान्तेति। स्वसिद्धान्तेत्यर्थः। अपसिद्धान्तेऽन्तर्भावोऽस्त्वप्राप्तकालस्येत्यत आह—न चेति। तस्येति। अपसिद्धान्तस्येत्यर्थः।

[1]वस्तुतस्तु—"अवयवविपर्यासवचनमप्राप्तकालम्" इति लक्षणम्। विपर्यासेन व्यत्यासेन वचनं विपर्यासवचनम्। अवयवानां विपर्यासवचनम्। प्रतिज्ञादीनामर्थवशात् क्रमः। तेषां विपर्यासेनाभिधानं निग्रहस्थानमिति सूत्रतात्पर्यार्थः। यथा 'कृतकत्वात् घटवदनित्यः शब्द इष्यते' इत्यादि। एतच्च नियमकथायां निग्रहस्थानम्। अनियमकथायां तु न निग्रहस्थानमिति बोध्यम्।

न्यूनाख्यनिग्रहस्थानं दर्शयति—वाक्यार्थेति। अपरे तु—'हीनमन्यतमेनाप्यवयवेन न्यूनम्" इति लक्षयन्ति। साधनाभावे साध्यसिद्धेरयोगादिति व्यक्तमेतत्। अत एवेति। शास्त्राङ्गीकृतवाक्यैकदेशाभिधानादेवेत्यर्थः। द्व्यवयवमिति। उपनयोदाहरणरूपमवयवद्वयमित्यर्थः। नाधिकमिति। नाधिकाख्यनिग्रहस्थानमित्यर्थः। नन्वपसिद्धान्तात्कथमस्य भेद इत्यत आह—न चेति। निगदव्याख्यातमन्यत्।

1 सूत्रोक्तमप्राप्तकाललक्षणं निरूपयति—वस्तुतस्त्विति। अत्राकाङ्क्षाक्रमेण वक्तव्यमिति तत्त्वम्।

न चापसिद्धान्त एवास्यान्तर्भावः । तस्य सिद्धान्तविपरीताभिधानरूपत्वात्, अस्यैकदेशाभिधानरूपत्वात् । एतदुन्नेयत्वेन तस्य जन्यत्वाच्च । यद्वा, न हि न्यूनस्यानेन गमकत्वमङ्गीकृतम्, येनापसिद्धान्तात् भेदो न स्यात् । किंतु सभाक्षोभादिना यदेकदेशं नाभिधत्ते, तदन्यदेव किंचित् ।

यस्मिन्ननुक्तेऽपि तदुक्तिप्रयोजनसिद्धिः, तदभिधानमधिकम् । यथा—'वह्निमानयं धूमवत्त्वात् आलोकवत्त्वाच्च' इति । अत्र ह्यालोकवत्त्वमन्वितमेव । अतोऽपार्थकाद्भेदः । न शब्दगतया नाप्यर्थगतया प्राक् प्रतिपन्नमिति पुनरुक्तात् । प्रकृतसंगतत्वेनार्थान्तरात् । न च पुनरुक्तेऽन्तर्भाव इति वाच्यम्, अकृतकर्तव्यस्यापि श्रुत्या पुनरुक्तिसंभवात् । व्यर्थविशेषणमधिकेऽन्तर्भवतीति केचित् । तन्न । 'घटोऽनित्यः प्रमेयत्वे सति कृतकत्वात्' इत्यत्र न प्रमेयत्वमधिकम्; प्राथमिकत्वेनाकृतकर्तव्यत्वात् । नापि कृतकत्वमधिकम्, व्यभिचारवारणेन फलवत्त्वनियमात् । हेत्वाभासेऽन्तर्भावस्य दर्शितत्वात् ।

तस्यैवार्थस्य विना प्रयोजनमुक्तिः पुनरुक्तम् । तदेतद्बहुविधम् ।

अधिकाख्यनिग्रहस्थानं लक्षयति—**यस्मिन्निति** । उदाहरति—**यथेति** ।

[1]वस्तुतस्तु—"हेतूदाहरणाधिकमधिकम्" । हेतूदाहरणग्रहणं सर्वस्याधिकस्योपलक्षणम् । अस्य निग्रहस्थानत्वे कारणमुच्यते—एकेन कृतार्थत्वादितरानर्थक्यम् । नियमपूर्विकायामेतद् दूषणम् । न सर्वत्र । एतच्च न्यूनाधिकलक्षणद्वयं स्वस्वमताभ्युपगमापेक्षया न्यूनत्वेऽधिकत्वे च दूषणं विज्ञेयमिति, वयमालोचयामः ।

ननु पुनरुक्ताख्यनिग्रहस्थानेऽन्तर्भावोऽस्त्वित्याशङ्क्याह—**न च पुनरुक्त इति** । स्पष्टार्थमन्यत् ।

पुनरुक्ताख्यनिग्रहस्थानं दर्शयति—**तस्यैवेति** । परे तु शब्दार्थयोः पुनर्वचनं पुनरुक्तमनुवादादन्यत्र । यथा—'नित्यः शब्दो नित्यः शब्दः' इत्याहुः । पुनरुक्तं विभजते—**तदेतद्बहुविधमिति** । उदाहरति—**यथेत्यादिना** ।

1 सूत्रोक्तमधिकलक्षणमाह—वस्तुतस्त्विति । नियमपूर्विकायामिति । कथायामिति शेषः । अकृतकरमेव वदेदिति तत्त्वम् ।

तेनैव शब्देन ; यथा, 'पिकः पिकः'। तत्पर्यायेण ; यथा, 'पिकः कोकिलः'। मुख्यामुख्यवृत्त्या ; यथा, 'गङ्गायां घोषः, तीरे घोषः'। एवं गौण्यापि । यत्तु परिशिष्टम्—आक्षेपात्पुनरुक्तं यथा 'बहिरस्ति देवदत्तः' इत्युक्ते 'गृहे नास्ति' इति । 'जीवन् गृहे नास्ति' इत्युक्ते 'बहिरस्ति' इति । तन्न । यदि शब्दस्यैव तावति दूरे तात्पर्यं, न तदाक्षेपः । अथाविनाभावलभ्यत्वाद्व्यापकस्य पुनरुक्तितेत्यभिधीयते, तदा 'धूमवत्त्वात् वह्निमान्' इत्यत्रापि पौनरुक्त्यप्रसङ्गः ।

संपूर्णानुवादसहितदूषणविधानव्यतिरेकोऽननुभाषणम् । तदपि

वयं तु ब्रूमः—असाधकं पुनरभिधानं पुनरुक्तम् । 'नित्यः शब्दो नित्यः शब्दः' इति शब्दपुनरुक्तम् । 'नित्यो ध्वनिरविनाशी' इत्यर्थपुनरुक्तम् । तथा 'गौर्गौः कामदुघा' इत्यादि पुनरुक्तान्तरम् । "अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम्" । यथा साधर्म्योदाहरणेऽभिहिते वैधर्म्योदाहरणम् । व्याप्तिख्यापनार्थमुदाहरणमुच्यते । तच्चैकेनाप्युदाहरणेन कृतमिति व्यर्थमुभयाभिधानम् । यथा—'यत्कृतकं तदनित्यं यथा घटः' इत्यभिधाय, 'यदनित्यं न भवति, तत्कृतकमपि न भवति, यथा गगनम्' इति । न चान्वयव्यतिरेकिज्ञापनार्थं दृष्टान्तद्वयाभिधानमिति वाच्यम्, वादसमये तज्ज्ञापने प्रयोजनाभावात् ; व्याप्तिप्रतीत्यैवानुमानसिद्धेश्च कथावसानविरोधित्वात् एकेन चरितार्थत्वादितरानर्थक्यम् । उक्तस्यापि पुनरभिधानेऽनवस्था ; वैयर्थ्यं च । एतदपि नियमकथायामेव निग्रहस्थानम् । अनियमकथायां तु साक्षिप्रतिवादिनोरपेक्षायां सत्यां स्पष्टार्थम्, पुनरभिधानेऽपि विरोधाभावात् । त्रिरभिधाने नियमत्वे नातिप्रसङ्गः ।

नन्वधिकाख्यनिग्रहस्थानान्नेदं भिद्यत इति चेत् ; सत्यं पुनरुक्तरूपमधिकं दर्शितमेव । अधिकं तु कियता भेदेन पुनरुक्तात् पृथगुक्तं शिष्यव्युत्पादनार्थमित्यदोष इति दिक् ।

अननुभाषणं नाम निग्रहस्थानं लक्षयति—संपूर्णानुवादेति । [1]वस्तुतस्तु

1 सूत्रोक्तमननुभाषणलक्षणं निरूपयति—वस्तुतस्त्विति । सर्वनाम्ना तदादिशब्देनानुवादेऽपि अनुभाषणमित्युदयनमतं निराकरोति मूले—न तु सर्वनाम्नानुवादेनेति । स्तम्भे संकीर्णमेवेति । उत्तरस्फूर्तिमतोऽपि सभाक्षोभादिना स्तम्भेनानुवादाभावसंभवादज्ञानाभावादिति भावः

चतुर्धा—एकदेशानुवादेन, विपरीतानुवादेन, केवलदूषणोक्त्या, स्तम्भेन वेति। न तु सर्वनाम्नानुवादेन, तस्यादूषणत्वात्। यद्यप्येकदेशानुवादेऽज्ञान-संकीर्णम्, तथापि स्तम्भेऽसंकीर्णमेव। तथापि न न्यूनम्, असंपूर्णानभिधानात्। न हि विक्षेपः, व्याजादिना कथाविच्छेदाभावात्। नाज्ञानम्, अप्रतिभा वा, ज्ञाते दूष्ये स्फुरदुत्तरस्यापि सभाक्षोभादिना स्तम्भ-संभवात्।

स्वीयविपर्ययज्ञानाविष्करणमज्ञानम्। यथा—'भ्रान्तोऽहमस्मिन् विषये; विपरीतं मे ज्ञानम्' इत्यादि। न त्वन्यथाविष्करणमात्रम्। तथा सत्यप्रतिभातोऽस्य भेदो न स्यादित्यग्रे दर्शयिष्यते। अननुभाषणाद्य-संकरस्तु स्फुट एव।

"विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्"। प्रतिवादिनो निग्रह-स्थानम्। उपलक्षणमेतत्। प्रतिवादिना प्रतिपादितदूषणाभिधानस्याननुवादे वादि-नोऽपि निग्रहसंभवात्। कथमेतन्निग्रहस्थानमिति चेत्; न, अप्रत्युच्चारयन् किमाश्रयः परपक्षप्रतिषेधं कुर्यात्? एवंच दूष्यमात्रानुवादेऽप्यसमर्थस्य दूषणं ज्ञेयम्। न पुनः सर्वोऽनुवादः कर्तव्य इति वयमालोचयामः। अननुभाषणं विभजते—तदपीति। तानेव चतुरः प्रकारान् दर्शयति—एकदेशानुवादेनेत्यादिना।

अस्तु तर्ह्यज्ञानाप्रतिभयोरेतस्यान्तर्भाव इत्यत आह—नाज्ञानमिति।

अज्ञानाख्यं निगहस्थानं लक्षयति—स्वीयेति। तदुदाहरति—यथेति। स्वीयविपर्ययपदस्य प्रयोजनमाह—तत्रेत्यादिना। तर्ह्यननुभाषणादभेदः स्यादित्यत आह—अननुभाषणेति। [1]यद्वा "अविज्ञातार्थं चाज्ञानम्"। चकारेण पूर्वसूत्राद्वि-ज्ञातस्य परिषदा वा त्रिरभिहितस्यापीत्येतदनुकृष्यते। यदा वाक्यं परिषदा त्रिरभिहि तमपि परिषदावगतार्थं प्रतिवादी प्रत्युच्चारयन्नपि नार्थतः समधिगच्छति, तदज्ञानं नाम प्रतिवादिनो निग्रहस्थानमिति। अत्रापि प्रतिवादिग्रहणमुपलक्षणमिति तात्पर्यार्थ इति संक्षेपः।

1 सूत्रोक्तमज्ञाननिग्रहस्थानलक्षणमाह—यद्वाविज्ञातार्थं चाज्ञानमिति। परंतु 'अविज्ञातं चाज्ञानम्' इति सूत्रपाठ उपलभ्यते। भावे क्तः। अज्ञानमित्यर्थः।

स्वीयसंदेहाविष्करणमप्रतिभा । यथा 'संदेहोऽस्मिन् विषयेऽस्माकम्' इति । [1]न नूत्तरस्याप्रतिपत्तिरप्रतिभा । सा हि केशसमारचनाकाशसूचनादिनावसीयते ; राजवार्ताकथनावतारेण वा ; नाद्यः, स्तम्भरूपाननुभाषणान्तर्भावात् । न च वाच्यम्—तत्रानुवादे स्तम्भः, अत्रोत्तर इति ; [2]व्यक्तिभेदस्यानुपयुक्तत्वात् । अन्यथा तद्विशेषचिन्तायां निग्रहस्थानानन्त्यं स्यात् । न द्वितीयः, राजवार्तादीनां प्रकृतानुपयुक्तत्वेनार्थान्तरत्वात् ।

ननु भवतामपि सम्यग्ज्ञानविरहस्याज्ञानाप्रतिभयोरविशेषादेकनिग्रहस्थानापत्तिः । मैवम् । अप्रकृष्टत्वभेदात् ; एकत्र विपर्यायः; अन्यत्र संदेह इति । संदेहे एककोटावपीष्टांशोऽस्ति । विपर्यये तु न सर्वथेति महान्विशेषः । अन्यथा सम्यग्ज्ञानाभावोन्नायकत्वात्सर्वेषामेव निग्रहस्थानानामैक्यं स्यात् ।

परोक्तानवबोधाहंकरणमज्ञानम् । परोक्तानवबोधाविष्करणमप्रतिभेति केचित् ।

अप्रतिभाख्यनिग्रहस्थानं दर्शयति—**स्वीयसंदेहाविष्करणमिति** । उदाहरति—**यथेति** ।

अज्ञानाप्रतिभयोरभेदमाशङ्कते—**नन्विति** । परिहरति—**मैवमिति** । विपर्ययसंदेहाभ्यां तयोर्भेद इति भावः । विपक्षे बाधकमाह—**अन्यथेति** । **निग्रहस्थानानामिति** । सूत्रोक्तद्वाविंशतिनिग्रहस्थानानामित्यर्थः ।

न्यायैकदेशिनोक्तं लक्षणं दर्शयति—**परोक्तानवबोधाविष्करणमिति** । अपरे तु—कथामभ्युपगम्य तूष्णींभावोऽप्रतिभा वादिप्रतिवादिनोर्निग्रहस्थानम् । अननुभाषणे तु न तूष्णीमास्ते ; प्रत्युच्चारयन्नपि न दूषणादिकमभिदधाति । अतो [3]नानयोरभेद इत्यप्याहुः ।

1 मूले सूत्रोक्तमप्रतिभालक्षणं दूषयति—न तूत्तरस्याप्रतिपत्तिरप्रतिभेति । तत्रानुवाद इति । अनुवादे स्तम्भः । अनुवादाभावे अननुभाषणमित्यर्थः ।

2 व्यक्तिभेदस्यानुपयुक्तत्वादिति । अनुवादोत्तररूपस्तम्भविषयव्यक्तिभेदस्य निग्रहस्थानान्तरत्वेऽप्रयोजकत्वादित्यर्थः ।

3 नानयोरभेद इति । अप्रतिभाननुभाषणयोरभेद इत्यर्थः ।

आवश्यकप्राणिधर्मातिरिक्तव्यासङ्गेन कथाविच्छेदो विक्षेपः । यथा—'अस्मद्गृहे कन्याविवाहो वर्तते । तस्मिन्नवसिते दिनान्तरे पुन रागत्य कथां करिष्यामः' इति । अनुवादात्पूर्वमप्यस्यावसर इत्यननुभाषणाद्भेदः ।

दूषणबुद्ध्या असत्प्रसङ्गो मतानुज्ञा । असत्त्वं प्रसङ्गस्य प्रशिथिलमूलत्वं विपर्ययापर्यवसितत्वमिष्टापादनत्वमननुगुणत्वं मिथो विरुद्धत्वं चेति । उदाहरणममीषां तर्कप्रकरणे दर्शितम् । न त्वनिष्टभ्रमेणेष्टप्रसञ्जनमिति लक्षणम्, अव्याप्तेः । न च तर्काभासस्य हेत्वाभासेऽन्तर्भाव इति वाच्यम्, तर्काभासमनुद्भाव्य तत्र हेत्वाभासस्य दर्शयितुमशक्यत्वात् ।

विक्षेपाख्यं निग्रहस्थानं दर्शयति—आवश्यकेति । उदाहरति—यथेति । [1]अन्ये तु कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः । कथामभ्युपगम्य सभ्येषु मिलितेषु ब्रवीति—'अद्य मे महत् प्रयोजनमस्ति । तस्मिन्नवसिते पश्चात् कथयिष्यामि' इति । यदि पुनस्तदानीमेव महत् प्रयोजनं सभ्या अभ्युपगच्छन्ति, तद्बाधकवशेन कथाविच्छेदेऽपि न पराजयः । न चेदमर्थान्तरेऽन्तर्भवतीति वाच्यम् । हेतुप्रयोगानन्तरं तदनुपयोगि वचनमर्थान्तरम् । अत्र हेतूपन्यासमपि पश्चात्कथयिष्यामीति वदति । अतोऽस्ति भेद इत्युद्द्योतकरादय आहुः ।

मतानुज्ञात्मकं निग्रहस्थानं लक्षयति—दूषणबुद्ध्येति । दर्शितमिति । तत्रैवानुसंधेयमिति भावः ।

[2]वस्तुतस्तु—स्वसिद्धान्ते दोषाभ्युपगमात्परसिद्धान्ते दोषप्रसङ्गो मतानुज्ञा । अभ्युपगमोऽपरिहरणम् । तेन सिद्धान्ते परोक्तं दूषणमपरिहृत्य परसिद्धान्ते दोषप्रसञ्जनं मतानुज्ञेत्यर्थः । यः स्वपक्षे मनागपि दोषं न परिहरति, केवलं परपक्षे दोषं प्रसञ्जयति, 'भवान् चोरः' इत्युक्ते, 'त्वमपि चोरः' इति, तस्येदं निग्रहस्थानम् । स्वदोषाभ्युपगमात् 'परघाती वीरः' इति न्यायेनेति तात्पर्यमिति दिक् ।

तर्काभासहेत्वाभासयोरन्तर्भावो भवत्वस्येत्यत आह—न च तर्काभासेति ।

1 सूत्रोक्तविक्षेपलक्षणमर्थान्तरेऽनन्तर्भावं च दर्शयति—अन्ये त्वित्यादिना ।

2 सूत्रोक्तं मतानुज्ञालक्षणं सोदाहरणं प्रदर्शयति—वस्तुतस्त्विति ।

ननु मतानुज्ञा जात्युत्तरमेव । तथाहि—'त्वं चोरः पुरुषत्वात्' इत्युक्ते प्रतिवादिना वक्तव्यम्—'पुरुषत्वादहं चेच्चोरः, भवानपि तत एव चोरः' इति स्वव्याघातकम् ।

तत्र परिशिष्टम्—"तृतीयकक्ष्यास्थितसाधनवाद्येवमस्य जातित्वमुद्भावयेत्—'चौरत्वे पुरुषत्वमनैकान्तिकम्, अप्रयोजकं वा; तत् कथमेतस्मादहं चोरः स्याम्' इति । तदा स्वोक्तमप्यनेन दूषितं स्यात् । ततः स्वरूपतो जातितोऽपि प्रत्युत्तरे जात्युत्तरं न संभवतीति जातित्वं सदप्यसत्कल्पमेव" इति । तन्न । जातित्वमेवास्य न संभवति, स्वव्याघातकत्वाभावात् । तथाहि—'पुरुषत्वं चोरत्वासाधकं, त्वय्यपि चोरत्वापादकत्वात् प्रमेयत्वादिवत्' इति प्रतिवादी वदति । अत्र न स्वव्याघातः । न चानैकान्तिकोद्भावनमिदम्, आपादनरूपत्वात् । स्वचोरत्वमङ्गीकृत्य वादिना परिहृतत्वाच्च ।

न चोत्कर्षसमविशेषसमनित्यसमानामत्रैवान्तर्भावः स्यादिति वाच्यम् । प्रसञ्जतीयस्याभ्युपगमे हि मतानुज्ञोद्भावनमिष्यते । अन्यथानिष्टप्रसङ्गेनोत्तरनिर्वाहे तदुद्भावकस्य निरुत्तरत्वप्रसङ्गात् । न चोत्कर्षसमादौ तथा । न हि 'यदि कार्यत्वात् क्षित्यादि सकर्तृकम्, तदा शरीरपूर्वकमस्तु' इत्युक्ते 'काममस्तु' इत्युत्तरमुचितम्, अपसिद्धान्तात् । एवमविशेषानित्यसमयोरपि बोद्धव्यम् । तस्मादसमर्थोत्तरत्वाविशेषेऽपि यत्र मतानुज्ञोद्भावनप्रसङ्गाभ्युपगमः, तदभ्युपगमेऽपसिद्धान्तो वा, तत्र जातित्वमेवोद्भाव्यम् । यत्र जातित्वोद्भावनमात्मानमपि व्याप्नोतीति, प्रसञ्जिताभ्युपगमो निर्दोषः, तत्र मतानुज्ञेति ।

तदियं पञ्चधा—प्रशिथिलमूलः, विपर्ययापर्यवसितम्, इष्टापादनम्, अनुगुणः, मिथो विरोधश्चेति । एवमात्माश्रयान्योन्याश्रयचक्रकानवस्थाभासा अप्यन्तर्भवन्तीति दिक् ।

उत्कर्षसमाख्यजातावन्तर्भावोऽस्त्वित्यत आह—न चोत्कर्षेति । विपक्षे बाधकमाह—अन्यथेति । मतानुज्ञां विभजते—तदियमिति ।

उद्भावनार्हस्य परकीयनिग्रहस्थानस्यानुद्भावनं पर्यनुयोज्योपेक्षणम् । न वाद्युद्भाव्यत्वमस्य । अपितु मध्यस्थेनोद्भाव्यत्वम् । तेन न स्वकौपीनोद्घाटनदोषः ।

नन्वप्रतिभायाः कथमस्य भेदः ? प्रतिज्ञासंन्यासादौ तदुपेक्ष्य सदुत्तरेणापि प्रतिज्ञानेऽस्यात्रकाशसत्त्वादप्रतिभायास्तत्र बाधात् ।

" [1]ननु सदुत्तरं वदन् प्रौढतया क्षुद्रस्खलितानि यद्युपेक्षितवान् , किमेतावतैव निग्रहमर्हति ? अर्हत्येव, कथायां प्रतिज्ञासंन्यासादीनामवश्योद्भाव्यत्वात् । अन्यथा पूर्वोपात्तं दुष्टं त्यजन् अपह्नुवानो यद्युपेक्षितः, कथमपि कथाप्रतानविच्छेदो न स्यात् ' इति परिशिष्टम् । तन्न, निग्रहस्थानान्तरैरविशेषात् । न हि प्रतिज्ञासंन्यासाद्युपेक्षणनिग्रहस्थानान्तरोपेक्षणयोः कश्चिदस्ति विशेषः । तस्मात् स्तम्भोपेक्षणेऽस्यापि पृथग्भावोऽवगन्तव्यः ।

विभ्रमान्निग्रहस्थानोद्भावनं निरनुयोज्यानुयोगः । तदयं द्वेधा भवति—अनिग्रहस्थाने निग्रहस्थानोद्भावनात् , अन्यनिग्रहस्थानेऽन्यनिग्रहस्थानोद्भावनाद्वा । अनुयोगानर्हानुयोगत्वं लक्षणम् । तदयं [2]छलजात्या-

पर्यनुयोज्योपेक्षणं लक्षयति—उद्भावनार्हेति । निग्रहं प्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणमिति तात्पर्यार्थः । निगदव्याख्यातमन्यत् ।

नन्वप्रतिभायामेतस्यान्तर्भावोऽस्त्विति शङ्कते—नन्विति । कथायामिति । वादिप्रतिवादिसभापतिप्राश्निकानां कथायामित्यर्थः ।

" अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः " इति । अदोषे दोषो-

1 निग्रहस्थानोद्भावनस्यावश्यकत्वात् तदनुद्भावने पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानमावश्यकमिति परिशिष्टोक्तमनुवदति—नन्वित्यादिना परिशिष्टमित्यन्तेन ग्रन्थेन ।

2 छलजातीत्यादि । स्वं स्वमवसरमप्राप्यातिक्रम्य वा निग्रहस्थानानामुद्भावनमनवसरग्रहणम् । निग्रहस्थानोद्भावनस्य कालो नियतः । अज्ञानादिकं वादिवचनेनैव ग्राह्यम् । वादिन उक्तिमन्तरेणापि जातमात्रमेव ग्राह्यं हेत्वन्तरादिकम् । जायमानावस्थायामेव ग्राह्यमपशब्दादि ।

तदुक्तम्—" उक्तग्राह्याः केचिदन्येऽनुक्तग्राह्यास्तथा परे ।
उच्यमानदशाग्राह्या इति कालस्त्रिधा स्थितः ॥ "

इति । उच्यमानग्राह्यमपशब्दादिकमुत्तरकालमुद्भावयतो निग्रहस्थानं भवतीति द्रष्टव्यम् ।

भासानवसरग्रहणाविषयवृत्तित्वादिभेदाद्बहुविधः । अविषयवृत्तित्वमाभास एवान्तर्भवतीति चेत्; न, परिगणनबहिर्भावात् । छलजाती दर्शिते । आभासस्त्वनैकान्तिकाद्यभावे तदनुयोगात् । यथा—विरुद्धेऽनैकान्तिकादीति ।

तत्कथानुकूलतयाभ्युपगततत्तच्छास्त्रविरोधाङ्गीकारोऽपसिद्धान्तः । न हि शास्त्राश्रया वादा भवन्तीति नापसिद्धान्तो निग्रहस्थानमिति सौगताः । ननु शास्त्रमन्तरेण कथायामतिप्रसङ्गः । तथाहि—अस्फूर्तिमता नैयायिकेन

द्भावनमित्यर्थः । यथा—'पृथिवी कार्या, सावयवत्वात् जलवत्' इति नैयायिकेनोक्ते, परो ब्रूयात्—'अप्रयोजकोऽयं हेत्वाभासः' इति । तस्येदं मिथ्याभियोगलक्षणं नाम निग्रहस्थानमिति । द्रव्यत्वे सति द्रव्याश्रितत्वं सावयवत्वम् । न चास्य कार्यत्वसाधनेऽसिद्धत्वाद्यन्यतमं दूषणमस्ति । बुद्ध्यादौ सावयवत्वाभावेऽपि कार्यत्वोपलम्भात् व्याप्त्यभावेनाप्रयोजकत्वमिति चेत्; न, कार्यत्वकादाचित्कत्वयोः पर्यायत्वप्रसङ्गात् । अथ सपक्षव्यापकहेत्वन्तरसद्भावेप्यव्यापकस्याप्रयोजकत्वं नाव्यापकमात्रधूमादेः; अत्र तु कादाचित्कत्वं सकलकार्यव्यापकं, न सावयवत्वमिति चेत्; मैवम्, कार्यत्वकादाचित्कत्वयोः पर्यायत्वात् । किंच व्यापकस्येवाव्यापकस्याप्यसिद्ध्यादिदोषरहितत्वेन प्रयोजकत्वं धूमादेः केन वार्यत इति संक्षेपः ।

[1]सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तः । यथा मीमांसकमतमभ्युपगम्य 'अग्निहोत्रं स्वर्गसाधनम्' इत्याह भाट्टवादी । कथं पुनरग्निहोत्रक्रिया ध्वस्ता सती स्वर्गस्य साधिका भवति ? इत्यनुयुक्तः स एव प्राह—'क्रिययाराधितः परमेश्वरः फलं ददाति, राजादिवत्' इति । तस्येश्वरानभ्युपगमादपसिद्धान्तो निग्रहस्थानमिति ।

[2]न्यायैकदेशिनस्तु—सिद्धान्तमभ्युपेत्य, कंचिदर्थं प्रतिज्ञाय विरोधेन कथाप्रसङ्गः कथाकरणमपसिद्धान्त इत्याहुः । तच्चिन्त्यम् । प्रतिज्ञातार्थविपर्ययस्तु प्रतिज्ञाहानिर्नापसिद्धान्त इति ।

1 अपसिद्धान्तलक्षणसूत्रं सोदाहरणमाह—सिद्धान्तमभ्युपेत्येति । भाट्टवादी । कुमारिलभट्टानुयायी वादी । अनुयुक्तः स एव मीमांसकः प्राह । तस्य मीमांसकस्य ।

2 दूषयितुमन्येषां नैयायाकिनामपसिद्धान्तलक्षणसूत्रव्याख्यानमुपन्यस्यति—न्यायैकदेशिन-

क्षणभङ्गसाधने प्रयुक्ते यदि सिद्धसाधनमुद्भाव्य सौगतो निगृह्येत, तदा किं कुर्यात् ? आद्यविप्रतिपत्तिविरोधमुद्भावयेदिति चेत्, एवं तर्हि तदनुगुणप्रमेयान्तरव्यतिक्रममुद्भावयेत्, अविशेषात् । न हि पुरुषार्थानुकूलाङ्गाङ्गिव्युत्पादनादन्यच्छास्त्रं नाम । तस्मात्क्षणिकत्वस्वीकारे समस्तापोहस्वीकारः । तदेकपरिहारे वा समस्ततदनुगुणपरिहार इति बलादङ्गीकर्तव्यम् । न च तावत्पदार्थजातस्य कथारम्भकाले स्वशब्देनाभिधानं शक्यमित्यकामेनापि शास्त्रमादरणीयमिति । तन्न । यदभ्युपेत्य वादिनौ कथां प्रवर्तयतः, तयोस्तद्विपरिताभिधानं भवत्यभ्युपेतार्थविरोधि । तदनुगुणव्यतिक्रमस्तु कथं तथा ? न हि तदभ्युपगम आवश्यकः, प्रमाणाभावात् । कथमुपेयाभ्युपगम उपायाभ्युपगममन्तरेति चेत्; न, उपायत्वापरिचयेऽप्यविरोधात् । ननु सामान्यतस्तदुपेयाभ्युपगमे तदुपायाभ्युपगमो वर्तत इति चेत्; न, नियमाभावात् । न घटाभ्युपगमो दण्डाभ्युपगमनियतः । किंतु घटो दण्डनियतः । नापि किंचिदनुगुणाङ्गीकारेऽपि शास्त्राङ्गीकरणम् । न हि शास्त्रे सर्वे पदार्थाः परस्परानुकूलाः । प्रसङ्गतोऽपि केषांचिन्निरूपणादि ।

उच्यते—न हि कंचित्पदार्थमनङ्गीकृत्य कथा संभवति । तत्र यदि पुरुषान्तराभ्युपेतमन्योन्यानुकूलमननुकूलं वाङ्गीकृत्य कथाप्रवृत्तौ सत्यां तद्विपरीताङ्गीकारः, तदा त्ववश्यमपसिद्धान्तः । अथ स्वसंमतविपरीताभ्युपगमः, तदा विरोधः; परसंमतेरनुपजीव्यत्वादिति सर्वमवदातम् ।

ननु यदि पुरुषान्तराभ्युपगमविपरीताभ्युपगमोऽपसिद्धान्तः, तदागमविरोधोऽप्यत्रैवान्तर्भवेत् । अथोभयवादिसिद्धप्रमाणभावेन हि स स्यात्; अयं तु स्वाभ्युपगममात्रविषयेणेति विशेष इत्युच्यते; तर्हि नैयायिकवैशेषिकयोः कथायां क्षित्याद्यकर्तृकताङ्गीकारेऽप्यपसिद्धान्तो न स्यात् । आगम-

वस्तुतस्तु अपसिद्धान्तप्रतिज्ञाहान्योरुपाधेययोः संकरेऽप्यपसिद्धान्तप्रतिज्ञाहानित्वयोरुपाध्योरसंकरादुक्तार्थस्वीकारेऽपि न दोष इति दिक् । शेषमतिरोहितार्थम् ।

स्त्विति । अपसिद्धान्तप्रतिज्ञाहानित्वयोः । अपसिद्धान्तत्वप्रतिज्ञाहानित्वयोरित्यर्थः । मूले अपसिद्धान्तो न निग्रहस्थानमिति वदतां बौद्धानां मतमुपन्यस्यति—न हि शास्त्राश्रया वादा इति ।

विरोध एव स इति चेत् ; न, अपसिद्धान्तलक्षणस्याभावादिति । मैवम् ; स्वाभ्युपगममात्रविषयप्रामाण्येनेत्यपसिद्धान्तलक्षणे विशेषणादस्यादूषणत्वात् । यद्वा, आगमबाधस्य क्वचित्संकीर्णतायामपि समबलत्वाङ्गीकारेऽपसिद्धान्तस्य पृथग्भावात् ।

ननु यदापसिद्धान्तो न दूषणमिति नैयायिको वदति, तदा किं वक्तव्यम् ? अपसिद्धान्तान्तरमिति चेत् ; न, अनवस्थानात् । व्याघातश्चेज्जितं तर्हि सौगतैरपसिद्धान्तस्यादूषणत्वमिति । मैवम् । किं तदा नैयायिकस्य गौतममताभ्युपगन्तुस्तदभ्युपगमविरोध एव नास्ति ? भवन्नपि बाधो वा न दोषाय ? नाद्यः , विपरीताङ्गीकारात् । न द्वितीयः । तदभ्युपगमविरोधो न दोषायेति सुष्ठु भाषितम् । अनवस्था तु समवाये समवायवदर्थान्तरेऽर्थान्तरवद्वा परिहरणीया । यद्वा, अपसिद्धान्तेऽपसिद्धान्तराङ्गीकारेऽपि नाननवस्था , व्यासङ्गादिनापि कथाविच्छेदसंभवादित्यलमतिसंप्लवेन ।

हेत्वाभासप्रतिपादकं वचनं हेत्वाभासाख्यं निग्रहस्थानम् । अत्र परिशिष्टम्—"हेत्वाभासाश्च यथोक्ता—इति सूत्रे चकारोऽनुक्तसमुच्चयार्थः । विरोधादिनिग्रहस्थानोत्तीर्णस्य हि साधनप्रयोगस्य चतुर्धा दुष्टत्वं भवति । हेतुतो यथा—अनैकान्तिकत्वादि । दृष्टान्ततो यथा—साधनविकलत्वादि । तर्कतो यथा—आत्मश्रयत्वादि । उक्तितो यथा—अनुपदर्शितान्व-

क्रमप्राप्तं हेत्वाभासाख्यं निग्रहस्थानं लक्षयति—हेत्वाभासप्रतिपादकमिति । अनुमितितत्करणान्यतरसाक्षात्प्रतिबन्धकत्वप्रतिपादकवचनमित्यर्थः । हेत्वाभाश्च यथोक्ता इति । यथा येन प्रकारेण हेत्वाभासा उक्ताः, तेन प्रकारेण तत्तद्धेत्वाभासलक्षणलक्षितत्वेन हेत्वाभासा निग्रहस्थानानि । [1]न पुनः प्रमाणस्य प्रमेयत्ववल्लक्षणान्तरेणेत्यर्थः । चकारोऽनुक्तसमुच्चयार्थ इति । दृष्टान्ताभासानन्वयविपरीतान्वयादिसमुच्चय इत्यर्थः । तमेवार्थं दर्शयति— विरोधादीत्यादिना ।

1 हेत्वाभासाश्च यथोक्ता इति न्यायदर्शनस्य चरमं सूत्रम् । यथाशब्देन विवक्षितमर्थं विवृणोति—न पुनः प्रमाणस्येति ।

यित्वं विपरीतोपदर्शितान्वयित्वं वा । तत्र स्वशब्देन प्रथमदशायामुपात्ताया-मनुक्तत्रयमपि निग्रहस्थानत्वेन व्यवहर्तव्यमिति त्रयमपि चकारार्थः । तत्र साधनविकले दृष्टान्तेऽसाधारणो हेतुः । साध्यविकले विरुद्धः । उभयविकले व्याप्यत्वासिद्धः । तथाश्रयासिद्धोऽपि । साध्याव्यावृत्तेरसाधारण्यम् । साधनाव्यावृत्तेर्विरोधः । उभयाव्यावृत्तेर्व्यतिरेकव्याप्तेरसिद्धिः । आश्रयासिद्धेऽपि तथा आत्माश्रये परस्पराश्रये चक्रकवृत्तौ त्वसिद्धिः । अनवस्थायामसिद्धिः, अनैकान्तिकत्वं, कालात्ययापदेशो वा । अनिष्टप्रसङ्गे व्याप्त्यसिद्धिः । तथानुकूलतर्काभावेऽपि । दुरुक्तौ तु वस्तुतोऽर्थस्य हेतोः शोभनत्वेऽप्युक्तानुसारेण दुष्टत्वमेव । अनुपदर्शितस्य सतो हेतुस्वरूपस्यागमकत्वात् । यथावचनं च तस्य रूपस्याप्रतीतेः" इति । तन्न, न हि दृष्टान्तस्य साधनविकलतामात्रेण हेतुरसाधारणो भवति । किंतु सकलसपक्षव्यावृत्त्या । अन्यथा धूमवत्त्वादेरपि तथात्वप्रसङ्गः । तत्रापि यदा दृष्टान्तत्वेनायोगोलकोऽभ्युपगम्यते, तदा भवत्येव साधनविकलता । न त्वसाधारण्यम् । तस्मात्प्रमाणान्तराभासानुकर्षणार्थश्चकार इत्यवगन्तव्यम् ।

इति निग्रहस्थाननिरूपणम् ।

## महाविद्यानिरूपणम्

अथ विजिगीषुप्रसङ्गेन प्रयोज्यव्युत्पाद्यबुद्धिवैशद्यार्थं [1]महाविद्यादि-

उद्द्योतकरवार्तिककारोक्तप्रणाड्या दृष्टान्ताभासाख्यनिगहस्थानं दर्शयति—तत्रेति । दृष्टान्ताभासानन्वयादिष्वित्यर्थः । षण्णां साधर्म्योदाहरणाभासानां, षण्णां वैधर्म्योदाहरणाभासानां चोदाहरणान्यवयवग्रन्थे उदाहरणरूपावयवव्याख्याने प्रसङ्गान्मयोक्तानि द्रष्टव्यानि । गन्थविस्तरभयान्नेहाभिधीयन्ते ।

इति निग्रहस्थानानि ।

## महाविद्यानिरूपणम्

अथेति । निग्रहस्थाननिरूपणानन्तरमित्यर्थः । विजिगीषुप्रसङ्गेनेति । विजि-

1 मूले महाविद्येति । केवलान्वयिनि व्यापके प्रवर्तमानो हेतुः पक्षे व्यापकप्रतीत्यपर्यवसानबलात् साध्यविशेषं वाद्यभिमतं साधयन् महाविद्येत्युच्यते । तस्य च हेतोर्महाविद्यात्वं सकलदोषविरहः ।

प्रयोगोऽत्र निगद्यते । तद्यथा—'अयं पर्वतो वह्निमत्त्वातिरिक्तैतद्धर्मातिरिक्तधर्मवान्, प्रमेयत्वात् महानसवत्, महाह्रदवद्वा । एवम्—'अयं पर्वतो वह्निमत्त्वातिरिक्तैतद्धर्मातिरिक्तधर्मवान्, प्रमेयत्वात्, महाह्रदवत् महानसवद्वा । एवं परेण यत्र क्वचित् दूषणे उद्भाविते तस्य साधनस्यादूषणत्वं साधनीयम् । यदि तत्रापि दूषणं वदेत्, तदैवमेव प्रतिवक्तव्यमिति । [1]'अयं पर्वत एतत्पर्वततदितरावृत्तिवह्निमद्वृत्तिधर्मवान्, प्रमेयत्वात्' इति वह्निम-

गीषुकथाप्रसङ्गेनेत्यर्थः । अत्रेति । न्यायरत्नाख्यस्वग्रन्थ इत्यर्थः । महाविद्यादिदशावतारमात्रे प्रयोज्यव्युत्पित्सोः प्रतिपक्षपरिहाराय दर्शयपि—तद्यथेत्यादिना एतद्विस्तरस्तु प्रकरणादनुसंधेय इत्यन्तेन गन्थेन । अयं पर्वत इति । पुरोवर्ती पर्वत इत्यर्थः । साध्यो धर्मवानित्युक्ते पर्वतत्वादिधर्मवत्त्वेनार्थान्तरता । तदर्थमेतद्धर्मातिरिक्तेति ।

नन्वेतद्धर्मस्य यत्किंचित्त्वं वा ? यावत्त्वं वा ? नाद्यः, वृक्षवत्त्वातिरिक्तपर्वतत्वधर्मवत्त्वेनोक्तदोषतादवस्थ्यात् । न द्वितीयः, वह्निमत्त्वादियावदेतद्धर्मातिरिक्तधर्मसाधने बाधादित्यत आह—वह्निमत्त्वातिरिक्तेति । वह्निमत्त्वातिरिक्तानां संभावितानां पर्वतत्वादिधर्माणां विवक्षितत्वान्नोक्तबाध इति भावः । उक्तानुमानस्य प्रतिपक्षभूमानं खण्डनमतमाश्रित्याह—एवमयमिति । धर्मवानित्युक्ते वह्निमत्त्वादिधर्मवत्त्वेन सिद्धसाधनता स्यात् । तदर्थमुक्तं वह्निमत्त्वातिरिक्तपदम् । वह्न्यभाववत्त्वेन साध्यपर्यवसानमिति भवत्येवेदं प्रतिपक्षानुमानमिति भावः । न्यायमतमवलम्ब्योक्तानुमानस्य प्रत्यनुमानमाह—अयमिति । [2]एतत्पर्वतेतरावृत्तिर्वह्निमद्वृत्तिः, यो धर्मः वह्निमत्त्वं,

1 अयं पर्वत एतत्पर्वततदितरावृत्तिवह्निमद्वृत्तिधर्मवान् प्रमेयत्वादिति । एतत्पर्वततदितरोभयावृत्तिर्धर्मः एतत्पर्वतमात्रवृत्तिस्तदितरमात्रवृत्तिश्च भवति । तदितरमात्रवृत्तिधर्ममादाय न पक्षे साध्यपर्यवसानं, बाधात् । ततश्च एतत्पर्वतमात्रवृत्तिम् एतत्पर्वतत्वादिकमादाय साध्यपर्यवसानं वक्तव्यम् । एतत्पर्वतत्वादेः वह्निमद्वृत्तित्वं च पर्वते वह्निमत्त्वं विना न संभवतीति अनुमानेनानेन पर्वते वह्निमत्त्वसिद्धिः ।

2 एतत्पर्वतेतरावृत्तिः वह्निमद्वृत्तिर्यो धर्मः वह्निमत्त्वं तद्वानित्यर्थ इति टीका । वह्निमद्वृत्तिधर्मपदेन वह्निमत्त्वोपादाने तस्य एतत्पर्वतातिरिक्ते महानसादौ सत्त्वेन एतत्पर्वतेतरावृत्तित्वं तस्य न घटते । एतत्पर्वतेतरावृत्तिवह्निमद्वृत्तिधर्मवानित्यनेन पौनरुक्त्यं भवतीति बोध्यम् ।

